स्वचरणाब्जयुगसमधाद्यदा स भुवि कजकुलादपि कोमलम् ॥
क्षितिरतोपि मृदुत्वमुपागतेत्यवसित पदलक्ष्मसमुद्गमे ॥ ३० ॥
कुलिशकजदरारिगदांकुशध्वजधनुर्यवकुंभलताझषा ॥
पदयुगेस्य सतोरणकेतव शुशुभिरेऽङ्कतया शुभदेतव ॥ ३१ ॥
अपठदेप यदांबतताभिधां कलगिरा सकलस्य सुखावहाम् ॥
वदयदाभिमयेत्यवदज्जनो गदति सौख्यमितोस्यसुवर्णत ॥ ३२ ॥
चकितचारुविलोचनमीक्षित इसितभावनिगूहितभाषितम् ॥
क्रतुपरिक्रमवच्च गतागत सकलमस्य चरित्रमलौकिकम्॥३३॥
कृतिसुखैस्तनुभिर्हरिणाक्षमारमणमाप पुरा विधिनिर्मिता ॥
गिरिशशूलधृता त्वपरा धराऽस्यनिजशैशवतोऽव्यथिता कृता ३४

चकित होयजाय हैं कवी देखवेलगेहैं कभी मुग्ध होयजाय हैं कवी डर जाय हैं ये आपकी चेष्टा सार्थक ही क्यों जो तमको पदार्थान्तर मानवे वारे हैं ॥ २९ ॥ और जब कमलसोंभी कोमल अपने चरण पृथिवीमें धरते हे तब पृथिवी उनसोंबी कोमल होयजातीही तासों चरणचिह्न बन जाते ॥ ३० ॥ आपके दोनों चरणनमें वज्र कमल शंख चक्र गदा अंकुश ध्वजा धनुष यव कुंभ लता मत्स्य तोरण पताका ये शुभ चिह्न शो भते हे ॥ ३१ ॥ जब आप तोतलीवाणीसों सबको सुख देवेवारी अम्ब तात ये सक्षा नाम बोलते हे तब दूसरे लोग 'अभि' ये शब्द बुलवावते तो आप सुवर्णत ( अच्छे वर्णनसों ) अभि ये नाम लेते हते ॥ ३२ ॥ चकित होनों सुदरनेत्रनसों देखनों हसनों भावसों भाषण करनों यज्ञकी परि- क्रमाकी तरह चलनों फिरनों ये सब आपके चरित्र अलौकिक हते ॥ ३३ ॥ ब्रह्माजीकी बनाई पृथ्वी पहले अवतारनमें आपके शरीरसों रमणको प्राप्त भई ही परन्तु ये काशीकी पृथ्वी तातें विलक्षण हे क्यों जो महादेवजीकी बनाई

शिशुतनोः श्रुतमेव न वीक्षितं चरितमंबिकया च पिनाकिना ॥
निजमनोरथपूर्तिरदृष्टतोह्युपनतास्य हरेःखलु खेलनैः ॥ ३५ ॥
शिशुचरित्रमनेकविधं चरन् स हुतभुग्घुतभुग्गणतुष्टये ॥
अतिमुदं व्यतनोच्छिवयोरयं व्रजपतेश्चरितानि प्रदर्शयन् ॥३६॥
प्रथमहायनफाल्गुनमास्ययं मखिवरोऽथ चचार शुभे दिने ॥
श्रुतिविभेदनमात्मशिशोः पुनः कुलनयेनच लौकिकमुंडनम् ॥३७॥
हरिविरंचिहरार्कदिगीश्वरानुडुपदस्त्रगिरोगुरुगोद्विजान् ॥
विधिवदेष समर्च्य च रूप्यजे श्रवणयोर्व्यतरत्खलु वालिके ॥३८॥
वितरणैर्द्रविणस्य च भोजनैर्बहुविधान्नरसस्य सदंबरैः ॥
परममुत्सवमस्य तदुत्सवे स चकले महिलाजनगायनैः ॥ ३९ ॥
विहितमंगलमज्जनतः शिशोर्धृतनवांबरमंडनवर्ष्मणः ॥
रचितदृष्टिनिवारणलक्ष्मतोवदनमस्य मृगांकतुलामधात् ॥ ४० ॥

इनके शूलके ऊपर धरी है सो ये पृथिवी अब आपके शिशुक्रीडासों सुखी भई ॥ ३४ ॥ महादेव तथा पार्वतीजीनें शिशुरूपभगवानको चारित्र सुन्योहो परन्तु देख्यो न हतो अब आपके खेलवेसों अदृष्टवश उनके मनोरथकीबी पूर्ति होय गई ॥ ३५ ॥ एसे अनेक प्रकारके बालचरित्र करते भगवान्के चरित्रनकों दिखावते महादेवपार्वतीजीकों अत्यन्त आनन्दित करते भये ॥ ३६ ॥ पीछें प्रथमवर्षके फाल्गुणमहीनामें अच्छे दिनमें भट्टजीनें अपने बालकको कर्णवेध कियो फिर कुलकीरीतिसों लौकिक मुंडन कियो ॥ ३७ ॥ विष्णु ब्रह्मा महादेव सूर्य दिक्पालादिक गुरु गौ ब्राह्मण इनको विधिसों पूजन करकें कान में रूपेकी बाली धारण कराई ॥ ३८ ॥ तामें बहोत प्रकारके अन्नरसके भोजननसों अच्छे वस्त्रनसों द्रव्यके दाननसों स्त्रीनके गायनसों बड़ो उत्सव कियो ॥ ३९ ॥ ओर आपको मंगलस्नान करवायो नवीनवस्त्र भूषण श्रीअंगमें धराये श्रीमुखमें दृष्टिदोषनिवारणके लियें काजलको चिन्ह

कटकनूपुरककणकिंकिणीपदकसैंहनखीगलहारिका ॥
हिबुककर्णशिर कचनासिकाभरणत प्रतिमेव हरेरभूत्॥ ४१ ॥
प्रतिनिजर्क्षदिने प्रथमेऽब्दके स कृतवान् सुतवृद्धिमहोत्सवम् ॥
अपरवत्सरत प्रतिवत्सरं प्रकृतवाश्चिरजीविसमर्चनम् ॥ ४२ ॥
रचितदिव्यनवांशुकभूषणा प्रमिलिता वनिता जनकालये ॥
भगनिका सुभगागुणगायनैर्विदधुरस्य च दीपपरिभ्रमम्॥ ४३॥
श्रुतिविदोऽथ विद स्वकुटुम्बिनो निजसमाश्रितवर्गमुपास्थितान् ॥
स वल्लभानपुर सरभोजनै परिततर्प यथोचितमर्पणै ॥ ४४ ॥
अथ स बालकतां कलयत्तदा कलितवान् कलभाषणतो मुदम् ॥
श्रुतिपदक्रमवत्पिताक्षरैर्निजनिसर्गधियं भुवि दर्शयन् ॥ ४५ ॥
क्वचिदयं क्रतुभिर्ननु कृत्रिमैररमतक्रमपाठमुखै श्रुते ॥
क्वचिदयं पितुराह्निकवत्कृतैर्मधुभिदोऽर्चनत शिशुलीलया ॥४६॥

कियो जासों श्रीमुख चन्द्रमाकेतुल्य होतो भयो ॥ ४० ॥ कड़ा झांझान घुँघुरू पदक बघनखा कठुला इनकों पहिरे ओर हिबुक कर्ण शिर केश नासिका इनके आभूषणनसों शोभित विष्णुकी प्रतिमा जैसेदीखवेलगे॥ ४१ ॥ दीक्षितजी प्रथमवर्षमें प्रतिजन्मनक्षत्रमें बालककों वृद्धि महोत्सव करते भये ओर दूसरीवर्ष तें प्रतिवर्ष चिरजीवीनको पूजन करवे लगे॥ ४२ ॥ तामें दिव्य नवीन वस्त्र भूषण-नकों पहेरे भई पिताके घरमें आई भई सौभाग्यवती भगिनीगण गुणगानपूर्वक इन बालककी आरती करती भई ॥ ४३ ॥ ओर आये भये वैदिक विद्वान नकों अपने कुटुम्बीनकों आश्रितजननकों बडे मानसें भोजन करायके यथो चित देकें दीक्षितजी तृप्त करते भये ॥ ४४ ॥ थोरे दिन पीछें ये बालकप-नेको प्रसिद्ध करते मधुर भाषणसें आनन्दको देते ओर कभी अपनी स्वाभा विकीबुद्धिका श्रुति पद क्रमके जैसे अक्षर बोलकें संसारमें दिखावते ॥ ४५॥ कभी कृत्रिम यज्ञ करकें श्रुतीनके पाठ करकें खेलते कभी पिताके जैसे

परिचचार क्वचिन्निजवत्सकान् यवसनीरयवागुसमर्पणैः ॥
निजवयस्यजनैर्निजवल्लवैरभिननंद स नंदसुतायितः ॥ ४७ ॥
सुरसरिद्रजसा क्व च धूसरः शुचिरिवोच्छुशुभे भसितावृतः ॥
कृतवती जननी तनुमार्जनं द्विजजनिवदनेऽस्य ददर्श सा ॥ ४८ ॥
चिकुरवृद्धिमिषान्नवनीतजं सुकवलं लपने समदात् सती ॥
गृहपतेरनिलोपि तुतोष किं प्रकरहेतिप्रदक्षिणलक्षणैः ॥ ४९ ॥
गुणसरत्समये बहुशोभने स चकमेऽध्वरिराट्सुतचौलकम् ॥
बुधवरैर्गणकैः स्वपुरोहितैरनुमते भृतसंभृतिराचरत् ॥ ५० ॥
विहितमार्जनलेपनमंडनैर्निजनिकेतनमेवमशूशुभत् ॥
निजकुटुंबिकुलं च सकिंकरं समकरोदमरोपममर्चितम् ॥ ५१ ॥
अथ चचार वसंतमहोत्सवं बुधवरैर्बहुभिर्वरवैदिकः ॥
सदसि चौलसुमंगलमाचरद् गुणिनि गायति नृत्यति वाद्यति ॥५२॥

आन्हिक ओर बाललीलासों भगवानकी सेवा करते ॥ ४६ ॥ कबी नन्दसुत श्रीकृष्णके जेसे आचरण करते अपने प्यारे साथीनके संग अपने बछरानकों घास जल अन्नकी लपसी देते ॥ ४७ ॥ कबी गंगाजीकी वालूमें लोट जाते तब अत्यन्त शोभते माता उनके श्रीअंगको पोंछती इनके मुखमें आकाशको देखती भई ॥ ४८ ॥ ओर बालसँभारवेके छलसों नवनीतको कवल इनके श्रीमुखमें देतीं तब गृहपति लक्ष्मणभट्टजीके कुंडकी अग्नि प्रसन्न होते ओर प्रदक्षिणज्वाला उनसों उठवे लगती ॥ ४९ ॥ पीछें सुंदर तीसरे वर्षमें यज्ञकरवेवारेनमें श्रेष्ठ भट्टजी पुत्रके मुंडन करवेकी इच्छा करते भये ओर अपने पुरोहित पंडित ज्योतिषीनके बताये मुहूर्तमें तैयारी करी ॥ ५० ॥ तामें बुहारवेसों लीपवेसों सजावटसों उनको स्थान देवभवन जेसो शोभतो भयो ओर आश्रितवर्गनके सहित इनके कुटुम्बीजन देवता जेसे शोभते भये ॥ ५१ ॥ पीछें बहोतसे पंडित वैदिकनसों वसन्तपूजा कराई ओर गुणी

निगममंत्रगणे किल लौकिक ज्वलनमादधदेप यथाविधि ॥
समजुहोन्निजसूत्रमताद्धविरमरवाडवतुष्टिमजीजनत् ॥ ५३ ॥
विहितनांदिविधे कृतसत्कृति पितृगण किल नादमुख व्यधात् ॥
वपनमस्य प्रदक्षिणमुद्भवो प्रवरसमितमूर्द्धशिखा कृता ॥ ५४ ॥
महति मंगलकर्मणि सगतेष्वधि न को पि जनो विफलोगत ॥
वहुविधान्ननवांवरभूषणद्रविणतः सकलोऽपि समर्चित ॥ ५५ ॥
अथ नृपात्मतयार्भकखेलने गुरुतयोपविवेश महासने ॥
उपगत सजन जनतेश्वरं सवरमुद्रिकयाशिपमभ्यधात् ॥ ५६ ॥
तुरगकुंजरवर्कर वश्रुगोमृगशशायितर्डिभगणे स्म यत् ॥
स निजपत्रतयेप्यति मेषकं प्रकटयन् मखकृत्सु मखात्मताम् ॥ ५७ ॥
विहरणे क्वचिदेप यदेकलो हरिमियाज स राजसपर्यया ॥
तदनुप्रेमभराश्रुभरैरुदन् समहसत समुपेप्यति दर्शने ॥ ५८ ॥

नके गावते नाचते बजाते मंगल चौलकर्मको आरंभ कियो ॥ ५२ ॥ वेद के मंत्रनसों लौकिक अग्निधारण कियो अपने सूत्रके अनुसार यथाविधि होम करके देवता ओर ब्राह्मणनको तुष्ट कियो ॥ ५३ ॥ ओर नान्दी श्राद्ध करके पितरनको तृप्त करके सुतको दक्षिण आडीसों क्षौर कियो ओर प्रवरनके समान ऊपरकी शिखा करी ॥ ५४ ॥ या मंगलकार्यमें आये भये मनुष्यनमेंसों कोईभी जन विफल न गयो अनेक प्रकारके अन्न नवीन वस्त्र भूषणनसों सब पूजे गये ॥ ५५ ॥ पीछें बालकनके खेलनेमें जब दूसरे बालक राजा बनने तब आप गुरु बनके सिंहासनपे बैठते ओर आये भये मनुष्यनको राजानको प्रान मुद्रासों उपदेश करते ॥ ५६ ॥ ओर घोडा हाथी बकरा मेढा गौ मृग शशा इनके जब बालकगण आवने तब आप मेषको बुलायके अपनको यज्ञकर्ता प्रगट करते ॥ ५७ ॥ खेलनेमें जब कभी एकले होयजाते तब राजोपचारसों भगवान्की सेवा करते ओर दर्शनमें प्रेमसों आंसू

हरिगुणानुरमणेषु सुनिर्दिशन् स पदवीं भुवि कृष्णमुनेर्गतः ॥
अकथयत्कथनीयकथाभरं विहरणोपरतान्पृथुकान्व्यधात् ॥ ५९ ॥
अधिजगे ननु बालकलेवरःपठति बालजनेऽपि गृहांतरे ॥
क्वचिदयं नु कलापमुखागमान्विविधकाव्यनिघंटुगणानपि ॥ ६० ॥
अरमत स्वसृसोदरयोर्मुदे नयनमुद्रणकेलिकया क्वचित् ॥
शिशुगवेषणतोप्यचरद्धरेर्विधिहृतार्भगवेषणकौतुकम् ॥ ६१ ॥

इतिबालचरित्रप्रकरणम् ।

अथपुनस्तनयस्समयेशुभेशरसमेमखिनोऽजनिकेशवः ॥
स्मृतिगिराभिमता बहुपुत्रता समभवत्स्मृतिकर्मफलायिता ॥ ६२ ॥
तदनु तस्य च संस्कृतयोमलाः जनिमुखा मखिना विहिताःशुभाः ॥
सकलविज्ञजनान् स्वकुटुंबिनोरमयति स्म रमा रमणंबभौ ॥ ६३ ॥
शरदि पंचमकेऽक्षरलेखनारभणमस्य चकार स दीक्षितः ॥
गणपतिं कमलां च नरायणं निगमसूत्रकृतावपि चार्चयत् ॥ ६४ ॥

भरके गद्गद होते ॥ ५८॥ खेलवेमें बालकनको भगवद्गुणनको उपदेश करते संसारमें वेदव्यासकी पदवी कों पायो खेलवेतें छुटायकें बालकनके सामनें कहवे लायक कथा कहते ॥ ५९ ॥ ओर दूसरे घरनमें बालकनकों पढते सुन आपबी कलाप अनेक तरहके काव्य निघंटु पढते ॥ ६० ॥ कबी बहेन भाईनके आनन्दकें लियें आंखमिचोनीखेल खेलते ओर बालकनको ढूँढते वामें विधिसों हरिही कों ढूँढते ॥ ६१ ॥ इति बालचरित्रम् ॥ पीछें पॉचवे वर्ष अच्छेसमयमें भट्टजीके केशवनामक पुत्र भये क्यों जो दैवीवाणीनें बहुपुत्रता कही ही सो फलित भई ॥ ६२ ॥ उनकोबी संस्कार शुद्ध विधानसों कर्कें सब विद्वाननकों कुटुम्बीनकों आनन्दित किये ॥ ६३ ॥ ओर पाँचवें वर्ष दीक्षितजीनें आपको विद्यारंभ करायो तामें गणपति लक्ष्मीनारायणको अपने सूत्रके

भुवनमातरिहागम वाङ्मये भगवतीति मनु प्रगृणन् मुदा ॥
नृपविधार्चनतोऽर्चितवान् पुन स्वगुरुभूमिसुरानुपमातरम् ॥६५॥
कृतप्रदक्षिणवदनमगलधृतसुलेखनिकं भृतपट्टिकम् ॥
प्रणवपूर्वकवर्णसुमातृकालिखनत स्वशिशु समशिक्षयत् ॥ ६६॥
नृतनुवाक्पतिरेपसकृद्दृशासमधिगत्यलिलेखयथोचितम् ॥
स गुरुणाभवितव्यमितिस्मरन् स जगृहे गुरुतोऽप्यपरागमान्॥६७॥
अनुपनीतवयस्युपनीतवत् समचरत् कृतिमेप विनापेकम् ॥
नहि स कामचरोनहिकामवाक् नियतवृत्तिरभून्न हि कामभुक्॥६८॥
स जगदे पठता पितुरन्तिके विविधशाब्दिकतार्किकसग्रहान् ॥
गणकशासनमेवमजीगणद्दुरवबोधतर किमु वाक्पते ॥ ६९ ॥
अवगतोजनकान्मखशिक्षणे क्रतुकलापविचक्षणतामपि ॥
स कविताकुशलत्वमुपागत कविजनोक्तिनिभालनत खलु ॥७० ॥

अनुसार पूजन कियो ॥ ६४ ॥ ओर हे भुवनकी माता भगवती सरस्वती यहा आवो एसे अर्थवारे मत्रनका पढते आनन्दसों राजोपचारतें अपने गुरू ब्राह्मण उपमाता आदिको पूजन करायकें ॥ ६५ ॥ कियो हे नमस्कार प्रदक्षिणाको जिननें कलम पट्टीको धर्‍यो हे जिननें एसे अपने बालककों प्रणव पूर्वक वर्णमात्रानको लिखनो सिखावने भये ॥ ६६ ॥ ये तो बालक वाणीपति हे यातें एकहीवार देखके यथोचितलिख्यो क्योंजो गुरुसों पढनो ये स्मरण करते, ओर वी विद्यानकुंसीखे ॥ ६७ ॥ विना जनेऊके हे ताही समयसु एक वेदको छोडके जनेऊवारेनकी रीति करते हे कहीं स्वच्छन्द होयके न फिरते न बोलते भ खात किन्तु नियम पालनेवारे भये ॥ ६८ ॥ ओर पिताके पास अनेक प्रकारके व्याकरण तर्कके ग्रन्थनकों सुनकेही सब ग्रहण कर लेते ओर गणितविद्या सीखलीनी क्योंजो वाक्पतिको कहा दुर्लभ हो ॥ ६९ ॥ पितासों यज्ञकलापमें विचक्षणता

अमरसिंधुतटेऽनुचरैः क्वचिद् गुरुवरालयशिष्यकुलैश्चरन् ॥
सुरवरालयसंगतभूसुरप्रवरजल्पकथास्ववदत् स्वयम् ॥ ७१ ॥
किमु मितिः स्वतएव मितान्यतोभवति जल्पकथा कथकेष्वियम् ॥
स्फुटसमुत्कटयुक्तिभरादयं समरटत् पटुभिर्वटुभिर्विदाम् ॥ ७२ ॥
जगदिदं जगदीश्वरनिर्मितं सदसि पक्षमिदं दृढयन् सदा ॥
बहुप्रमाणभरैः स सदुक्तिभिः समवदत् कुशलैरपि कोविदैः ॥७३॥
निजसहोदरवक्त्रविनिर्गतांक्रमजटाघनछंत्रपदावलिम् ॥
स च ललाप धियैव विलोमत स्तमवदन्निह बालसरस्वतीम् ॥७४॥

इतिकौमारचरित्रनिरूपणप्रकरणम् ।

जठरतोष्टमहायनगे मधौ गणकवर्य्यविनिश्चितसद्दिने ॥
तदनुरोधमवेक्ष्य ततः पुरोनिजनिजार्हमुपक्रममारभत् ॥ ७५ ॥
प्रथमतस्स लिलेख दलावलिं निजपुरोहितबंधुसुहृन्नृषु ॥
मम सुतोपनयाख्यसुमंगलेऽमुकदिने स्वसमागमप्रार्थये ॥ ७६ ॥

ओर कविजननकी उक्तिकों देखकें कवितामें पटुताकों पायो ॥ ७० ॥ कबी गंगाजीके तटमे अपने घरमें रहवेवारे अनुचरशिष्यनके संग विचरते भये ब्राह्मणनकी वादकथामें आप बोलते ॥ ७१ ॥ जो मिति जो प्रमाण हे सो स्वतःप्रमाण हे वादकथामें अथवा अन्यतः ओरसों इत्यादि अच्छी उत्कटयुक्तीनसों चतुर बालकनकें संग रटते ॥७२॥ ओर ये जगत् ईश्वरको बनायो हे याही पक्षको सभामें अनेक प्रमाणनसों तथा युक्तीनसों कुशल विद्वाननकें संग दृढ करकें बोलते ॥७३॥ ओर अपने भाईके मुखतें निकसी जो क्रम जटा घनकी पदावली वाकों बुद्धिहीसों उलटों पढने तब आपको लोग बालसरस्वती कहते ॥ इति कौमारचरित्रम् ॥ ७४ ॥ पीछें भट्टजीनें गर्भसों आठवे वर्ष चैत्रमासमें ज्योतिषीनके बताये अच्छे दिनमें यज्ञोपवीत करवेके लियें पहलेसों योग्य तैयारी करी ॥ ७५ ॥ पहलें अपने पुरोहित

गणपतेर्गणकस्य च पूजनं प्रथमत स विधाय तत परम् ॥
निजनिकेतनशोधनमडनंदलनकंडनसग्रहमारभत् ॥ ७७ ॥
अथ समागतबंधुजनान् गुरून् निजसुहृद्बुधवर्य्यगणानपि ॥
समुचितेरुतसाधुसपर्यया परिचचार तदिष्टसमर्पणे ॥ ७८ ॥
समकरोदय सजवने विदां क्रतुकलापविनिश्चयनिर्णयम् ॥
बुधवरे स्वभने स्वपुरोधसा गुरुवरोनिजवृद्धसतीजने ॥ ७९ ॥
महति कर्मणि वृद्धगणेश्वरार्चनविधिं स चकार यथाविधि ॥
विहितमगलमज्जनमडना समभवन् महिला स्वयमर्भका ॥८०॥
अथ घनानिलकेतुसमुद्भवाद्यखिलविघ्ननिवारणकाम्यया ॥
निजमतेन पुरोहितपूजनादिविधिमप्यचरञ् जरठांगना ॥ ८१ ॥
वरवधूगणमंगलगायनानकसमर्चनवादनत परम् ॥
अमरकद्रुमधिरोपणकादिक विदधुरस्य गृहे महिलाजना ॥ ८२ ॥

बन्धु सुजननकों पत्र लिख्यो जो हमारे पुत्रके उपनयनमें अमुक दिन आप पधारेंगे इत्यादि ॥ ७६ ॥ पीछें गणपति तथा ज्योतिषीको पूजन करकें मकानको शोधन मडन करकें धान्यनके दरवे कूटवेकी तैयारी करी ॥ ७७ ॥ ओर आये भये बन्धुजन गुरुजन मित्र पडित इनकों योग्य सत्कार उचित देकें अच्छी सेवा करी ॥ ७८ ॥ पीछें ऑगणमें विद्वाननकों सम्बधीनकों पुरोहितकों वृद्ध स्त्रीनकों बोलायकें बेठाये ओर उपनयनसम्बधी सबकार्यनको निश्चय कियो ॥ ७९ ॥ या बडे कार्यमें बडे गणेशको स्थापन कियो तामें यथाविधि स्त्रीगण सब मगलस्नानादि कर अच्छे वस्त्र आभूषणनको धारण करती भई ओर बालकननें भी धारण किये ॥ ८० ॥ वृद्धस्त्रीननें मेघ आंधी आदि विघ्नके निवारणके लिये कुलाचारप्रमाण पुरोहित पूजन आदि कर्म किये ॥ ८१ ॥ श्रेष्ठ स्त्रीनके मगलगान पूजन बाजा आ-

कृतविनायकपूजनतः परं निशि चकार परिभ्रमणोत्सवम् ॥
निजजनैः कुलदारजनैः सह विविधवादननर्तनगायनैः ॥ ८३ ॥
धृतनवाम्बरभूषणमंडनाः कुलजनामहिलाश्च चकासिरे ॥
सकलमेवपुरंनिजकौतुकात्प्रकृतहर्षमनुक्षणमादधत् ॥ ८४ ॥
विहितमंडितमडपवेदिकः कृतपुरोहितऋत्विगसौवुधः ॥
सकलविघ्नहरं करणं मुदा ग्रहमखं स चकार विदां वरैः ॥ ८५ ॥
अथ स वृद्धिदिनात् प्रथमे दिनेनिजनिमंत्रणकर्ममहोत्सवम् ॥
समकरोन् निखिलैरपि भूषिते निशि सुनर्तनगायनवादनैः ॥ ८६ ॥
सदरुणोदयसंक्रमतः पुरा स प्रतिबुध्य समारभताह्निकम् ॥
विरचितां नवमंडपवेदिकामुपससार पदार्थनिरीक्षणे ॥ ८७ ॥
समुपवीक्ष्य कृतां क्रतुसंभृतिंनिजजनं च निभाल्य कृताह्निकम् ॥
कृतनिमज्जनमंगलमंडनः समहिलः ससुतोऽभ्यगमत् सभाम्॥८८ ॥

दिके पीछें इनके घरमें स्त्रीननें अंकुरारोपण कियो ॥ ८२ ॥ और गणेश पूजनके पीछें रात्रिमें अपने कुटुम्बीजन तथा कुलकी स्त्रीजन अनेक प्रकारके बाजे गाजे नाच आदिके संग विनायकी निकालते भये ॥ ८३ ॥ तामें नवीन वस्त्र भूषणनकों धारण किये पुरुष तथा स्त्रीजन शोभते भये और सब नगर आश्चर्यसों हर्षित भयो ॥८४॥ भट्टजी अच्छे विद्वाननसों मंडपवेदीकों कराय कें पुरोहित ऋत्विज आदिकों यथाक्रम वरण कर सब विघ्नके दूर करवेवारी ग्रहशान्ति करते भये ॥ ८५ ॥ और वृद्धिके पहले दिनमें वृद्धिनिमंत्रणको महोत्सव रातमें गाजेबाजेसों कियो ॥ ८६ ॥ पीछें अरुणोदयसों पूर्व उठकें आह्निक करकें नवीन मंडप वेदीके पास पदार्थ देखवेकों गये ॥८७॥ सो सब धरी सामग्रीकों देखकें आह्निकसों निवृत्त आत्मीय जननकों देखकें पीछें आप मांगलिकवस्तुनकों धरायकें सस्त्रीक पुत्रके सहित वृद्धिसभाकों

बुधवरान्निजवन्धुजनान् गुरून् निजसमाह्वयत समुपागतान् ॥
ससुपसृत्य कृतादरवदनात् स हि चकार वरासनवेशितान् ॥ ८९
कुलपुरोहितमग्रसरं महासनगतं मखिविष्णुचितं व्यधात् ॥
अथ स कर्म सदः समनुज्ञयारभत सद्गुना सह भार्यया ॥ ९० ॥
प्रथमतोधिकृतेरिह सिद्धये ह्यकृत कृच्छ्रविधिं द्रविणेन सः ॥
निजवटोरपि तं गुरुशासनात् समचरद्व्यवहारप्रसिद्धये ॥ ९१ ॥
अथ समंगलमंत्रगणं वदन्नुपनयस्य स सकलन व्यधात् ॥
गणपतिं वरुणं च समर्च्य वै ह्यकृत वृद्धसदाशिषवाचनम् ॥ ९२ ॥
गुरुवरोयच मंडपदेवता शिखिदिशः क्रमतोर्चितवान् स्वयम् ॥
रजनिकांजिततंदुलशाक्षतादिभिरयं खलु नंदनिकामुखाः ॥ ९३ ॥
इह विधाय स वास्तुसमर्चनं प्रचकलेंकुरवापनमुत्तमम् ॥
प्रतिसरं च समर्च्य सकूर्चकं समकरोत्सदिडावचनान्यपि ॥ ९४ ॥

भये ॥ ८८ ॥ वहाँ अपने निमंत्रणसों आये विद्वान निजबन्धुजन गुरुजन इनके पास जायकें आदरसों नमस्कार करकें उनकों अच्छे आसननपे बेठाये ॥ ८९ ॥ ओर कुलके पुरोहित,याज्ञिक विष्णुचितको आगे बडे आसनपे बेठायो ओर सभ्यजननकी आज्ञासों स्त्रीबालकके सहित कर्म करवेको प्रारम्भ कियो ॥ ९० ॥ पहले अधिकारसिद्धिके लिये द्रव्यसों कृच्छ्र विधिकों कियो ओर गुरुपुरोहितकी आज्ञासों व्यवहारकी रीतसों अपने बालकसोंभी करायो ॥ ९१ ॥ पीछें मांगलिकमन्त्रनकों पढते गणपति वरुणको पूजन कर वृद्ध आशिष वाचन भयो ॥ ९२ ॥ दीक्षितजीनें मंडपदेवता दिग्देवता इनकों क्रमसों पूजन कियो ओर पीछें अक्षतनसों नंदनिका आदिकनकों ॥ ९३ ॥ वास्तुपूजन करकें उत्तम अंकुरार्पण कियो प्रतिसर कूर्चकको

समहिलोधृतनूतनिशाम्बरः कुलतरुं कणिजाख्यमपूजयत् ॥
समतनोदथमातृसमर्चनं स च घृतेन वसोरपि धारिकाः ॥ ९५ ॥
पितृगणस्य सदाभ्युदयं तदा समकरोदिह गोस्तनिकादिभिः ॥
कनकदानसमर्हणभोजनैः स हरयेऽर्पितवान् स्वकृतिं ततः ॥ ९६ ॥
अथ महार्हसुभोजनतोजनः सकलएव शुभे मखिनार्चितः ॥
विविधमंगलगायनवादनैर्विहितदीपकरंगलतादिषु ॥ ९७ ॥
तदनुभोजनतः परितोषिते निजजनेऽन्यजनेपि समागते ॥
गुरुवरः क्रमुकादिकदानतः समकरोदनुरंजितमात्मनि ॥ ९८ ॥
निशि चकार स संजवनं वरं बुधवरैः स्वजनैर्गुरुभिः श्रितम् ॥
तदवरोधगतैर्ललनाजनैर्विहितमेभिरिदं कृतमंडनैः ॥ ९९ ॥
अथ शुभासनमध्यगयोरधिजनकयोः कृतमंडनयोर्वटुः ॥
धृतमहार्हनवांशुकभूषणोहरिरिवाससवालकविग्रहः ॥ १००

पूजन कर इडावाचन कियो ॥ ९४ ॥ नवीन हलदीके रंगे वस्त्र धारण किये स्त्रीपुरुष कुलवृक्ष कणिजको पूजते भये पीछें मातृकापूजन कियो घृतसों वसु धारा करी ॥ ९५ ॥ पितरनको आभ्युदयिक नान्दीमुखश्राद्ध दूर्वासों कियो सुवर्णदान पूजन भोजन इनसोंबी उनकों तृप्त कियो पीछें भगवान्के लियें अपनी कृतिको अर्पण कियो ॥ ९६ ॥ ओर बडे सुंदर भोजननसों उत्सवमें दीक्षितजीनें सब मनुष्यनको तृप्त कियो, अनेकप्रकारके गायन बाजनसों ओर दीपक रंग लता आदिसों ॥ ९७ ॥ भोजननसों तुष्ट किये अपने जननकों ओर आये भये दूसरे जननकोंबी दीक्षितजी सुपारी पान आदिके दानसों प्रसन्न करते भये ॥ ९८ ॥ ओर रातमें चौक पंडितनसों कुटुम्बीजननसों गुरुजननसों शोभित भयो ओर चौकके ऊपरके कोठानकों आभूषणनसों भूषित स्त्रीजननें शोभित कियो ॥ ९९ ॥ पीछें सुंदर आसनपें बेठे आभूषणादिकनसों भूषित जो माता पिता हें उनके बीचमें नवीन बहु मूल्य वस्त्र ओर

भगिनिकाश्शुभगास्तिलकाक्षतैस्तदनुपूगफलै कृतपूजन ॥
वटुमसुपरिवारितमुष्टिकंतदनुदीपवरभ्रममावहन् ॥ १०१ ॥
परिततर्प सुवर्णसमर्पणे स्वसहजे निजबधुकुलोद्भवा ॥
वटुरयचकलाकुशलानुत विविधनर्तकगायकवादकान् ॥ १०२ ॥
प्रथममेवगुरोस्तिलक ततोनिजगुरोर्विदुषां स्वजनस्य च ॥
समभवत्सदसश्च सदक्षिणं तदनु पारिछुवर्हसमर्पणम् ॥ १०३ ॥
अथसमातुलमंदिरतोऽचितश्वशुरकेतनतोऽस्यचबन्धुत ॥
अधिगतवरपारिनुबर्हक सहानिजैरुररीकृतवान् गुरु ॥ १०४ ॥
महति वृद्धिमहोत्सवके गतोन विमुखोऽन्यजन स्वजन कुत ॥
अथ गुरोः पुरवासिजनोऽखिलस्त्रिभुवनांचितकीर्तिमगायत॥१०५॥
एव वृद्धिमहोत्सव सविधिना सम्यग्विधायोत्तमम्
श्रीमल्लक्ष्मणदीक्षितोऽथनियमान्नादीविधेरादधे ॥

भूषणनको धारण किये बैठे बालकरूप आप हरि जैसें शोभते भये ॥१००॥ सौभाग्यवती भगिनीननें तिलक कियो अक्षत लगाये ओर सुपारी हाथमें देकें मुठियावारक आरती उतारी ॥ १०१ ॥ तब सुवर्णकी मुद्रा देकें अपनी सगी भगिनीनकों तथा ओरबी भगिनीनकों प्रसन्न कियो पीछें कलाकुशल नट अनेक नाचबे गायबे बजायबेवारेनकों देकें तृप्त कियो ॥१०२॥ पहले आचार्यके तिलक कियो फिर अपने गुरुनकें जातिवारेनकें विद्वाननकें ओर सभाकी दक्षिणादीनी पीछें पहेरावनी दीनी ॥ १०३ ॥ पीछें सदूभीनें मातुलके घरतें श्वसुरके घरतें बन्धुनके घरतें आई भई पहेरावनीनकों अपने जननके सहित स्वीकार कियो ॥१०४॥ या बडे भारी वृद्धिके महोत्सवमें दूसरोंबी जन कोई विमुख न गयो स्वजन तो केसे जाय यातें काशीमें रहवेवारे सब मनुष्य त्रिभुवनमें जायवेवारी इनकी कीर्तिको गान करवे लगे ॥ १०५ ॥ याप्रकार वृद्धि उत्सव अच्छीतरहसों करकें श्रीमान् लक्ष्मणदीक्षितजी नान्दीविधिके नियमनकों पालते भये ठंडे जलसों स्नान प्रति-

शीतांभोविनिमज्जनं प्रतिदिनं ब्रह्माद्ध्वरादिक्रियाः
पर्य्यंकादिनिषेवणं न विदधे चामंडपोत्थापनम् ॥ १०६ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते संमिते ग्रंथसार्थैः
श्रीगोविंदाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्य्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थाने दिग्जयाख्ये समजनि पटहः पंचमश्चादिमेऽस्मिन् ॥१०७॥

---

श्रीवल्लभं हृदि निधाय विधाय सम्यक् श्रीवल्लभात्मचरणाम्बुजयोः प्रणामम् ॥ श्रीवल्लभस्य कथये व्रतबंधदीक्षां कृष्णोवसंततिलकामिह साधुवृत्तैः ॥ १ ॥ प्रातः प्रबुद्ध्य महिला दयितं प्रबुद्धं श्रीलक्ष्मणाऽर्यमखिनं प्रणता समीक्ष्य ॥ तस्य प्रबोधसमयोचितकार्यजातं धौतांघ्रिहस्तवसनादरतश्चकार ॥ २ ॥

दिन करनों यज्ञादिक करने पलंगमें सोनो नहीं इत्यादि मंडपोद्वासनपर्य्यन्त किये ॥ १०६ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीगोविन्दाचार्यजीमहाराजकी आज्ञासों श्रीमद्वेदव्यासविष्णुस्वामिमतके अनुकूल कृष्णशास्त्रीके किये भगवद्भक्तनके सुख देवेवारे या आचार्यजीके चरित्रग्रन्थमें प्रथमप्रस्थानमें ये पंचम पटह समाप्त भयो ॥ १०७ ॥

---

श्रीवल्लभाचार्यजीकों हृदयमें अच्छीतरहसों धरके ओर उनके चरणकमलनमें प्रणाम कर उनकी वसन्तऋतुमें तिलकरूपी भई जो यज्ञोपवीतकी दीक्षा ताकों कृष्णकवि में अच्छी वसन्ततिलकाछन्दसों कहत हूं ॥ १ ॥ सबेरे महिला यल्लमाजी जागकें जागे भये पति याज्ञिक श्रीलक्ष्मणार्यकों देखकें प्रणाम करती भई ओर हाथ पांव धोयकें वस्त्र पलटकें उनकें जागवे समयके कार्यसमुदायकी आदरसों

श्रीलक्ष्मणोऽपि कृतशुद्धिरथासनस्थो ध्यानं गुरोर्मुरभिदो विद
धे स्तुतिं च ॥ गत्वा बहिर्विहितशौचविधिर्यथावत् स्नातो गृहे
प्रकृतमाह्निकमाचचार ॥ ३ ॥ संबोधितेषु सकलेषु जनेषु
सम्यक् कार्य्येष्वपेक्षिततरेषु कृतेषु गेहे ॥ स्नाता भृतांबरविभूष
णमंगलाभ्यां स्नातीषु चान्यमहिलासु कृताह्निकाऽभूत् ॥ ४ ॥
सर्वो जनोऽपि विहिताह्निकसत्कृतात्मा सत्कृत्य वाऽथ सदनं
मिहिरोदयात्प्राक् ॥ जातेऽग्निहोत्रहवने हरिपूजनेय चाकारयद्ब
रुवर विदुष स्वकीयान् ॥ ५ ॥ प्राप्तेषु वैदिकवरेषु निवशितेषु
वृद्धासने निजजनेऽपि समागते च ॥ सम्यक् प्रणम्य स गुरुं प्रव
रासनस्थ कृत्वा ननाम सकलान् निजवंदनीयान् ॥६॥ भद्रासने
समहिल सवटुर्निषण्णो विज्ञाप्य सर्वसदसोनुमतो गुरून् स ॥
सन्मंगलाचमनसंकलनानि चक्रे चोलोक्तवापननयात्सुतमुंडनं च

तैयारी करती भई ॥ २ ॥ श्रीलक्ष्मणभट्टजीवी शुद्धि करके आसनपे बैठके
गुरुको ध्यान और भगवानकी स्तुति कर बाहेर जायके यथोचित शौच-
विधि करके स्नान करके घरमें आह्निक करते भये ॥ ३ ॥ और सब
मनुष्यनके जागतेही घरमें आवश्यक कार्यकों कर स्नान करके वस्त्र धारण
कर भूषणनसें मंडित होय दूसरी स्त्रीनके स्नान करतेही यल्लमाजीनें अपने
आह्निककों कर लियो ॥ ४ ॥ और अपने २ आह्निकसों सब मनुष्य
निवृत्त होयके वस्त्रादिक धारण कर सूर्योदयसों पहलेही मंडपस्थलको
सत्कार करते भये और दीक्षितजीवी अग्निहोत्र तथा श्रीठाकुरजीकी सेवा
करके पुरोहित और सभ्यधीनकों बुलावते भये ॥ ५ ॥ पीछे आये भये
वैदिकनकों बैठायके आत्मीयनकों बडे आसनपे बैठावते भये और अच्छे
आसन पें बैठें गुरुनको प्रणाम कर सब अपने बडेनको नमस्कार कियो
॥ ६ ॥ और पीले वस्त्रसों आच्छादित पट्टापर स्त्री और पुत्रसहित आप

॥ ७॥ पित्राभिमृष्टक्षुरवरेण च मंत्रितेन बालस्य वापनमकार्य्यथ नापितेन ॥ एका शिखा शिरसि धूमलतेव वह्नेर्वह्नेर्धृतद्विजतनो रचिता चकाशे ॥ ८ ॥ तं बालकं कुलभुवोऽस्य ततो भगिन्योऽभ्यस्नापयन् सदसि मंगलमृद्धटीभिः ॥ स्नातं धृतांबरयुगं च ततो जनन्या संभोज्य सार्द्धमथ ता व्यदधुर्विशुद्धम् ॥ ९ ॥ बालस्ततो गुरुवरानुमतः पुरस्तात् तातस्य सोविशदलं शुशुभे सभायाम् ॥ अंतःपटे निजजनैर्विहितेऽभ्रसंघे सायं सुधाकर इवानु दिवाकरस्य ॥ १० ॥ गीतेषु मंगलपदेषु कुलांगनाभिः पद्येषु चाशिषइतोऽस्य च भट्टडिंभैः ॥ प्राप्तेऽथ शोभनलवे गणकैः प्रदिष्टे जातं पटापनयनं वटुमंगलाय ॥ ११ ॥ बालस्य मूर्द्ध्नि गुरुणाक्षतराशिराशीर्मंत्रैर्न्यधायि वटुनापि गुरोस्तथांघ्र्योः ॥

बैठकें सब सभ्यनसों विज्ञप्ति कर उनसों अनुमत होयकें मंगलाचमन करकें चौलमें कही रीतिसों पुत्रकों मुंडन कियो ॥ ७ ॥ पितातें स्पर्श कियो गयो ओर अभिमंत्रित कियो गयो जो क्षुर हे तातें पीछें नाईनें मुंडन कियो ओर धारण कियो हे ब्राह्मणको रूप जिननें एसे अग्निदेवके मस्तकपे अग्निकी धूमलता जेसी एक शिखा शोभती भई ॥ ८ ॥ पीछें उन बालककों कुलमें उत्पन्न भगिनीगण सभामें मंगलमृद्घटी (गडगडी) सों स्नान करावती भई स्नान किये दो वस्त्रनकों धारण किये बालककों माताके संग भोजन करायकें फिर शुद्धस्नान करावती भई ॥ ९ ॥ पीछें आचार्यकी आज्ञासों पिताके आगें सभामें विराजे ओर निजजननें अन्तः पट कियो तब वे बालक केसे शोभते हे जो मानों सन्ध्यासमय मेघमें सूर्य्यास्त पीछे चन्द्रमा होय ॥ १० ॥ कुलांगनानके मंगल पद गावतें भट्टजीनके बालकनके मंगलमय श्लोकनकों पढतें ज्योतिषीनके बताये अच्छे मुहूर्तके आयवेपे बालकके मंगलके लिये अन्तःपटकों दूर कियो ॥ ११ ॥ बालकके मस्तकपे गुरूनें मन्त्रनसों

पुत्रं गुरुस्तदनुमेखलयोपवीतकौपीनदण्डमृगचर्मधरं चकार ॥१२॥बालोप्युदङ्मुखतयोपविवेश वृष्या ब्रह्मोपदेशमकरोद्गुरु लक्ष्मणोऽस्मै ॥ पच्छोर्द्धशश्च सकलं सवितुर्मनुं तं पात्रे विलिख्य च तथा श्रवणे दिदेश ॥ १३ ॥ य· सम्प्रदायगुरुविष्णुमुनेश्च यज्ञनारायणान् मखिवरान् मनुरागतो य ॥ प्रेमाकराद्यतिवरादपि गोपभर्तुस्त त दिदेश स पृथक् मनुमस्य तात ॥ १४ ॥ मंत्रोपदेशमनुस स्वगुरुं ववंदे तस्योपढौकितमधाच्चपदाब्जयोर्गाम् ॥ सा स्वर्णगोर्गुरुवरेण पुरोधसेऽस्मै श्रीविष्णुचिन्मख कृते सधराभिदत्ता ॥ १५ ॥

इति यज्ञोपवीतदीक्षाप्रकरणम् ।

कृत्वाऽभिवदनमथो जननीं स्वसारं मातृष्वसारमपि भिक्षितवान् स तातम् ॥भिक्षोत्सवश्रवणतोभिगतान् यथार्हमार्य्यानयाचत यथा बलिमादितेय ॥ १६ ॥ विद्वत्सभासु स चकाश वटुर्व्रत

अक्षत डारे बालकनेंभी गुरुके चरणनमें डारे एसे बालककों गुरुनें मेखला मूंजकी तिलरी रस्सी जनेऊ कौपीन दंड मृगचर्म धारण कराये ॥ १२ ॥ आसनपे उत्तरमुख बैठे बालकके कानमें गुरु लक्ष्मणभट्टजीनें पाद अर्ध पूर्णरूपसों गायत्रीमन्त्रकों पात्रमें लिखकें उपदेश कियो ॥ १३ ॥ ओर सम्प्रदायकें गुरु विष्णुस्वामी यज्ञनारायण याज्ञिक प्रेमाकर सन्यासी त्रिदंडी इनकी परम्परासों जो मंत्र प्राप्त भयो हो वो गोपालमंत्र अलग आपकों उपदेश कियो ॥१४॥ मन्त्रोपदेशके पीछें आपनें गुरुकों नमस्कार कर ओर चरणकमलनमें सुवर्णकी गौ भेट करी या गौकों पितानें याज्ञिक विष्णुचितकों पृथिवीसहित दे दीनी ॥ १५ ॥ इतियज्ञोपवीतम् ॥ पछिं माताको प्रणाम करकें माता भगिनी मौंसी पिता ओर भिक्षाके उत्सवकों सुनके आये जो श्रेष्ठजन हैं उनसों यथायोग्य भिक्षा माँगी जेसे वामनजीनें बलिसों माँगी ही ॥ १६ ॥ कौपीन दंड मृगचर्म यज्ञसूत्रकों धारण किये व्रती वे वटु आसुरशासनकों

स्थः कौपीनदंडहरिणाजिनयज्ञसूत्रैः ॥ दूरीकरिष्णुरिव चासुर शासनानां विष्णुर्नु तीर्थवरमुत्प्रकटीकरिष्णुः॥ १७ ॥ तस्यानने ननु निसर्गतयाऽऽस्थिताभा ब्राह्मी स्वसंस्कृतिवशान्मणिवत्तसुशाणात् ॥ लोकस्य शोकहतये भवितव्यभावसंभावुकानि पुरतः खलु संभवंति ॥ १८ ॥ देवस्य पुण्यचरितस्य पिनाकपाणेर्लोकत्रयीविदितपावनपत्तनेऽस्मिन् ॥ हर्षो महर्षिगणमानसमानसेऽस्य यस्मान्मतं पुरभिदोभिमतेऽभविष्यत् ॥ १९ ॥ देवोत्तमास्तुतुषुरस्य हुताशनस्य दीप्त्या भविष्यति यतोध्वरसत्प्रवृत्तिः ॥ एवं महर्षिनिचया निगमाध्वरक्षां संभाव्य तिष्यहतितः सुजना ननन्दुः ॥ २० ॥ भिक्षां ततः स्वगुरवे विनिवेद्य चक्रे वक्रे निशो निगमसूत्रमतां स्वसंध्याम् ॥ तस्मादनुप्रवचनीयसमा

दूर करते सभामें गंगाकों प्रकट करते विष्णुके जेसे शोभते भये ॥ १७ ॥ जेसे मणि सानतें शोभेहे तेसेंहीं इनके मुखारविन्दमें स्वभावहीसों रहवेवारी दीप्तिसों ब्राह्मी विद्या लोकके शोकको दूर करवेके लियें शोभती भई क्यों जो होयवेवारे कल्याण चिह्न पहलेही होय हें ॥ १८ ॥ पुण्यचरित पिनाकपाणि देव महादेवजीकी तीनों लोकनमें प्रसिद्ध पवित्र काशीपुरीमें रहवेवारे महर्षीनके मनमें हर्ष व्याप्त होयगयो क्यों जो ये त्रिपुरारिसम्प्रदाय विष्णुस्वामि सिद्धान्तके प्रवर्तक होंयगे ॥ १९ ॥ ओर देवगणभी इनके अग्निके प्रकाशसों यज्ञनकी प्रवृत्ति होयगी यातें तुष्ट भये याही प्रकार महर्षिगण ओर सुजनभी कलियुगसों वेदमार्गकी रक्षा होयगी या सम्भावनासों प्रसन्न भये२० ॥ पीछें भिक्षाकों अपने गुरुकों अर्पणकर सन्ध्यासमय अपने वेदसूत्रके अनुसार अपनी सन्ध्याकों कियो ओर होमकों कर ब्राह्मणनकों भोजन करायकें अपने कुलवारेनके संग भोजन करते भये ताम्बूलादिक नहीं खानों पृथिवीपर सोनों

रल्यहोम सभोज्य बाडववरान् बुभुजे स्वकीये ॥ २१ ॥ क्षारादि वर्जनमुखानि वटुव्रतानि पालाशदंडमृगकृत्तिवराणि दध्रे ॥ औपासनं परिचचार गुरुं च भक्त्या विष्णु समर्च्य विदधेऽनुसव च स ध्याम्॥२२॥नीराजनद्विजसमर्चनदक्षिणादिर्मौञ्ज्युत्सवे समुचितस कलं विधाय ॥ गधर्ववारवनिताजनतास्तथान्यास्सतोषितास्समुप जीविजना निजेष्टै ॥२३॥श्रीवल्लभस्य मखसूत्रमहोत्सवेऽस्मिन् मानैर्धनैरपि कुलैर्निजविद्यया च ॥ प्रख्यापिता समभवन् मुदिता श्च सर्वे वृदारका अपि कुतो न नरा न नार्य्यः ॥ २४ ॥ यज्ञोपवी तदिनतोऽधिगतेऽह्नि तुर्ये मेधाजने कृतिरकार्य्यथ दीक्षितेन॥कृ त्वोद्भवं मधुविध किल पचमेऽह्नि सार्द्धं सुरैश्च विससर्ज स मंडप तम्॥२५॥ बालस्ततोगुरुगृहं पठितु प्रयात श्रीविष्णुचित्रिजय जूंपि तमादिदेश ॥ भुञ्जन् स्वकेष्वधिगतानि च भैक्षितानि

पालाश दंड मृगचर्म आदिको धारण करनो आदि ब्रह्मचर्यव्रतकों पाल्ते औपास न करते भक्तिसों विष्णुकी सेवा त्रिकाल सन्ध्योपासन करते भये॥ २१॥ २२ ओर दीक्षितजीनें यज्ञोपवीतकेउत्सवमें ब्राह्मणपूजनभोजन दक्षिणा आदि उचित सब करकें नाचवे गायवे तथा ओर जो विद्योपजीवी हे उनकों सन्तोप कियो ॥ २३ ॥ श्रीवल्लभजीके या उपवीतोत्सवमें मानसों धनसों उचित सत्कारसों देवगणवी आनन्दित भये फिर दूसरे मनुष्य स्त्रीगण क्यों न होयगे ॥ २४ ॥ यज्ञोपवीतके दिनते चौथे दिनमें दीक्षितजीनें मेधाजनकी विधि करी ओर भडो उत्सव करकें पांचवें दिन देवतानके सग मडपको विसर्जन कियो॥ २५॥ पीछें बालकरूप श्रीवल्लभजी गुरुके घर पढवेके लियें गये उनकों श्रीविष्णुचित्र् गुरुने अपनो यजुर्वेद पढायो ओर आप अपनें लोगनसों मिली भिक्षाकों ' अर्पण करते ओर उनकी आज्ञासों आपची भोजन करते अपनी

स्वादेशकाय च ददत् समगात्स्वशाखाम् ॥ २६ ॥ गुर्वग्निवि
ष्णुपदपूजनतत्परस्य शाखाऽतिपेशलतरा ननु तैत्तिरीया ॥
यद्वाक्यतेर्वदनतः परिपठ्यमाना कांतेव कांतकृतमानमिता च
काशे ॥ २७ ॥ ब्रह्मांजलेर्विवृतिमुद्रिकयासनाभ्यां व्यक्तस्तयोः
समभवद्गुरुशिष्यभावः ॥ पाठे तु वैदिकसदः प्रतिवादिवादि
प्रख्यौ समीक्षणकृतासुपलक्षितौ तौ ॥ २८ ॥ दध्रे पदक्रमज
टादि सकृत्प्रयुक्त्या युक्त्येतरांगमपि यत्तदुपांगजातम् ॥ संतोष्य
तं गुरुवरं द्रविणेन भक्त्या बुद्ध्या ततप जनकं विदुषो वटूंश्च
॥ २९ ॥ स्वां संहितामधिगतं स्वसुतं विलोक्य शाखांतरं च
यजुषः परिपाठ्य तस्मात् ॥ ऋक्सामपाठनकृते स तिरुंमलाय
दीक्षावतेऽथ समयाचत लक्ष्मणार्य्यः ॥ ३० ॥ तस्मै गुरुः क
थितंशिष्यगुणाकराय दांताय दिव्यप्रतिभाभरभाषिताय ॥ यद्य

शाखाकों पढी ॥ २६ ॥ गुरु अग्नि विष्णु इनके पूजनमें तत्पर जो वाक्पति
हें उनके मुखतें पढी गई तैत्तिरीशाखा कान्ताके समान पतिसों मानकों पायकें
मानों शोभती भई ॥ २७ ॥ ब्रह्मांजलि ये पढवेकी मुद्राको नाम हे विवृति
ये पढायवेकी मुद्राको नाम हे इन दोनोंनतें ओर उच्च नीच आसननतें उन दोनों
नमें गुरुशिष्यभाव जान्यो जातो हो पाठमें तो देखवेवारेनको वादी प्रतिवादी
जेसे लगते ॥ २८ ॥ एकही वारके कहवेसूं पद क्रम जटा आदि पढ लिये
ओर युक्तिसों ओर बी उनके अंग सीख लिये गुरुकों द्रव्यसों पिताको भक्तिसों
बुद्धिके वैभवसों विद्वान्बालकनकों सन्तुष्ट किये ॥ २९ ॥ अपनीसंहिताको
पढे भये पुत्रकों देखकें यजुर्वेदकी दूसरी शाखानकों उन्ही गुरुसों पढायकें
ऋग्वेद सामवेदके पढायवेके लियें लक्ष्मणभट्टजीनें तिरुम्मलदीक्षितसों याचना
करी ॥ ३० ॥ गुरु तिरुम्मलजीनें छात्रगुणनके आकर शुद्ध दिव्यप्रतिभातें
भर्यो हे भाषण जिनको एसे इन बालकके आगे जो जो पढ्यो वाकों

द्रमाण पुरत सकृदेकश्रुत्या तत्तत्तदेव सजगाद तिरुमलाग्रे ॥ ३१ ॥ ऋक्सामयो स लघुना समयेन माल पारायणस्य परपारमियाय सम्यक् ॥ आथर्वणं निजरहस्ययुत समग्रं तद्ब्राह्मणोपनिषदो जनकात्पपाठ ॥ ३२ ॥ चर्चासु चर्चकतया श्रुतिपाठकानां सलक्षित सकललक्षणशास्त्रवेत्ता ॥ सोपांगसागनिगमागमलक्षणानि यस्याननं निजपद विदधुर्निसर्गात् ॥ ३३ दिग्ग्रथपाठनचणान् स विधाय शिष्यान् दत्वा वर गुरुतिरुमलदीक्षिताय ॥ पित्रोर्मुद चरणयो प्रणतोऽथ चक्रे चक्रेऽखिल श्रुतिविदां स बभूव शक्र ॥ ३४ ॥ नारायण बुधवर जनकोऽभिश्रुत्य पुत्रस्य पाठनकृते निपुणं ययाचे ॥ भद्राय भट्टप्रवर प्रणतोऽथ तुष्ट प्रोवाच साध्विति वचोयशसेप्यभीष्टम् ॥३५॥ नत्वा गुरु विवरणे सह पाणिनीयं सूत्रं पपाठ फणिभाषितभा

एकही बार सुनकें वाही प्रकार उनके आगे आपनें पढ दियो ॥ ३१ ॥ ओर ऋक सामके पर पारकों थोरेही समयमें अच्छीतरहसों ये गये ओर रहस्यसहित सम्पूर्ण अथर्वण वेद याके ब्राह्मण उपनिषदनकों पिताहीसों पढे ॥ ३२ ॥ वेद पढवेवारेनकी चर्चामें बडे चर्चा करवेवारे सब शास्त्रनके वेत्ता हैं ये चर्चा जिनकी भई जिनके मुखकों स्वभावहीसों निगम आगम अग उपाग इन सबननें अपनो स्थान बनायो ॥ ३३ ॥ वेदके दशग्रन्थनके पढवेमें प्रसिद्ध एसे बहुत शिष्यनको बनायकें गुरु तिरुम्मलदीक्षितजीकों गुरुदक्षिणा देकें चरणनमें प्रणाम करके पिताकों आनन्दित कियो ओर आप सम्पूर्ण वेदके जानवेवारेनमें शक्र इन्द्र होते भये ॥ ३४ ॥ पीछें पितानें नारायण नामके बडे पडितकों सुनकें पुत्रके पढायवेकें लियें उनसों याचना करी सो प्रणाम किये गये ऐसे उननें भट्टजीसों अपने यशके लियें कही जो ठीक हे ॥ ३५ ॥ तब गुरुकों नमस्कार करकें पहले भाष्यसहित पाणिनीयसूत्र

ष्यमादौ ॥ भूयोक्षपादकणभुङ्मतयोः प्रशस्तपादीयभाष्यमु
खवृत्तिमहानिबंधान् ॥ ३६ ॥ पातंजलप्रवचनागमयोश्च भा
ष्ये तौतातिकस्य स गुरोर्निखिलागमाँश्च ॥ शारीरकागममतानि
सशांकराणि नारायणाद्गुरुवरात्स तदा प्रपेदे ॥ ३७ ॥ साम्नः
सहस्रचरणैः प्रथितस्य शाखा याः काश्चन प्रचलिताः सह तन्नि
बंधैः ॥ एतस्य चोपनिषदोपि तदाननाब्जाद्गेजेऽस्य
प्रश्नत उदुत्तरतोऽपि तोषम् ॥ ३८ ॥ ज्योतिर्मुखेपि
निगमांगगणेऽथ काव्यसाहित्ययोश्च सकलासु कलासु सारम् ॥
शालासु तासु पठतां मठवासिविज्ञविद्यार्थिनां सपरिचिंतनया
जजान ॥ ३९ ॥ श्रीमाधवेन्द्रयतितोप्यथ पूर्णप्रज्ञरामानुजार्यवि
हिते श्रुतिसूत्रभाष्ये ॥ अन्यानि वैष्णवमहर्षिसुदर्शनानि शां
डिल्यसूत्रप्रमुखानि पठन् ददर्श ॥ ४० ॥ श्रीलक्ष्मणान्निज
गुरोर्हरसंप्रदायिश्रीविष्णुनाथयतिराजगिरां रहस्यम् ॥ स्वांते नि

अष्टाध्यायीकों पढे पीछें गौतमकणादके प्रशंसनीय भाष्यादिक ग्रन्थ पढे ॥ ३६ ॥ योग ओर सांख्यशास्त्रनके भाष्यनकों मीमांसा ओर सब आगम शंकरमतके शारीरक आदि ग्रन्थनकों गुरूनमें श्रेष्ठ जो नारायण हैं उनसों पढे ॥ ३७ ॥ हजार शाखानसों प्रसिद्ध जो सामवेद है वाकी निबन्धन करकें सहित प्रचलित शाखा ओर वाके उपनिषदनकोवी नारायणके मुखसों पायो ओर प्रश्नोत्तरनसों उनकों तुष्ट किये ॥ ३८ ॥ ओर मठ ( पाठ-शाला में रहवेवारे विद्यार्थी लोग जो ज्योतिष शिक्षा आदि अंग काव्य साहित्य कला पठते हे सो उनके पढवेसों आपको ये सब आयगयो ॥ ३९ ॥ पीछें श्रीमाधवेन्द्र सन्यासीसों पूर्णप्रज्ञ रामानुजके बनाये सूत्र भाष्य वेदभाष्यनकों पढते ओरबी वैष्णवमहर्षीनके बनाये शांडिल्य सूत्रा-दिक ग्रन्थनकों देखे ॥ ४० ॥ ओर निजगुरु श्रीलक्ष्मणभट्टजीसों त्रिपु-

द्र्भाण पुरतः सकृदेकश्रुत्या तत्तत्तदेव सजगाद तिरुमलाभे ॥ ३१ ॥ ऋक्सामयोः स लघुना समयेन बालः पारायणस्य परपारमियाय सम्यक् ॥ आथर्वणं निजरहस्ययुत समग्रं तद्ब्राह्मणोपनिषदो जनकात्पपाठ ॥ ३२ ॥ चर्चासु चर्चकतया श्रुतिपाठकानां सलक्षित सकललक्षणशास्त्रवेत्ता ॥ सोपांगसांगनिगमागमलक्षणानि यस्याननं निजपदं विदधुर्निसर्गात् ॥ ३३ दिग्ग्रथपाठनचणान् स विधाय शिष्यान् दत्वा वरं गुरुतिरुमलदीक्षिताय ॥ पित्रोर्मुदं चरणयोः प्रणतोऽथ चक्रे चक्रेऽखिलश्रुतिविदां स बभूव शक्रः ॥ ३४ ॥ नारायणं बुधवरं जनकोऽभिश्रुत्य पुत्रस्य पाठनकृते निपुणं ययाचे ॥ भद्राय भट्टप्रवरः प्रणतोऽथ तुष्टः प्रोवाच साध्विति वचोयशसेप्यभीष्टम् ॥३५॥ नत्वा गुरुं विवरणेः सह पाणिनीयं सूत्रं पपाठ फणिभाषितभा

एकही बार सुनके वाही प्रकार उनके आगे आपनें पढ दियो ॥ ३१ ॥ ओर ऋक सामके पर पारकों थोरेही समयमें अच्छीतरहसों ये गये ओर रहस्यसहित सम्पूर्ण अथर्वण वेद वाके ब्राह्मण उपनिषदनकों पिताहीसों पढे ॥ ३२ ॥ वेद पढवेवारेनकी चर्चामें बडे चर्चा करवेवारे सब शास्त्रनके वेत्ता हैं ये चर्चा जिनकी भई जिनके मुखकों स्वभावहीसों निगम आगम अग उपाग इन सबननें अपनो स्थान बनायो ॥ ३३ ॥ वेदके दशग्रन्थनके पढवेमें प्रसिद्ध ऐसे बहुत शिष्यनकों बनायकें गुरु तिरुम्मलदीक्षितजीकों गुरुदक्षिणा देकें चरणनमें प्रणाम करके पिताकों आनन्दित कियो ओर आप सम्पूर्ण वेदके जानवेवारेनमें शक इन्द्र होते भये ॥ ३४ ॥ पीछें पितानें नारायण नामके बडे पडितकों सुनकें पुत्रके पढायवेकें लियें उनसों याचना करी सो प्रणाम किये गये ऐसे उननें भट्टजीसों अपने यशके लियें कही जो ठीक है ॥ ३५ ॥ तब गुरुकों नमस्कार करकें पहले भाष्यसहित पाणिनियसूत्र

ष्यमादौ ॥ भूयोक्षपादकणभुङ्मतयोः प्रशस्तपादीयभाष्यमुखवृत्तिमहानिबंधान् ॥ ३६ ॥ पातंजलप्रवचनागमयोश्च भाष्ये तौतातिकस्य स गुरोर्निखिलागमांश्च ॥ शारीरकागममतानि सशांकराणि नारायणाद्गुरुवरात्स तदा प्रपेदे ॥ ३७ ॥ साम्नः सहस्रचरणैः प्रथितस्य शाखा याः काश्चन प्रचलिताः सह तन्निबंधैः ॥ एतस्य चोपनिषदोपि तदाननाब्जाद्भेजेऽस्य प्रश्नत उदुत्तरतोऽपि तोषम् ॥ ३८ ॥ ज्योतिर्मुखेपि निगमांगगणेऽथ काव्यसाहित्ययोश्च सकलासु कलासु सारम् ॥ शालासु तासु पठतां मठवासिविज्ञविद्यार्थिनां सपरिचिंतनया जजान ॥ ३९ ॥ श्रीमाधवेन्द्रयतितोप्यथ पूर्णप्रज्ञरामानुजार्यविहिते श्रुतिसूत्रभाष्ये ॥ अन्यानि वैष्णवमहर्षिसुदर्शनानि शांडिल्यसूत्रप्रमुखानि पठन् ददर्श ॥ ४० ॥ श्रीलक्ष्मणान्निजगुरोर्हरसंप्रदायिश्रीविष्णुनाथयतिराजगिरां रहस्यम् ॥ स्वांते नि

अष्टाध्यायीकों पढे पीछें गौतमकणादके प्रशंसनीय भाष्यादिक ग्रन्थ पढे ॥ ३६ ॥ योग ओर सांख्यशास्त्रनके भाष्यनकों मीमांसा ओर सब आगम शंकरमतके शारीरक आदि ग्रन्थनकों गुरूनमें श्रेष्ठ जो नारायण हें उनसों पढे ॥ ३७ ॥ हजार शाखानसों प्रसिद्ध जो सामवेद हे वाकी निबन्धन करकें सहित प्रचालित शाखा ओर वाके उपनिषदनकोबी नारायणके मुखसों पायो ओर प्रश्नोत्तरनसों उनकों तुष्ट किये ॥ ३८ ॥ ओर मठ ( पाठशाला में रहवेवारे विद्यार्थी लोग जो ज्योतिष शिक्षा आदि अंग काव्य साहित्य कला पठते हे सो उनके पढवेसों आपको ये सब आयगयो ॥ ३९ ॥ पीछें श्रीमाधवेन्द्र सन्यासीसों पूर्णप्रज्ञ रामानुजके बनाये सूत्र भाष्य वेदभाष्यनकों पढते ओरबी वैष्णवमहर्षीनके बनाये शांडिल्य सूत्रादिक ग्रन्थनकों देखे ॥ ४० ॥ ओर निजगुरु श्रीलक्ष्मणभट्टजीसों त्रिपु-

धाय सकलागमचक्रवर्त्ती श्रीवल्लभ समभवद्बुधवल्लभोयम् ॥ ४१ ॥ ये ये जनाः सुरजना गुरवोऽस्य गीतास्तेते कुलक्रमगुरुक्रमतः स्वकीयाः ॥ देवेज्यकेज्यमिहिरेज्यविशालिकेज्या यो रामकृष्णपितरो पितरौ तथा तौ ॥ ४२ ॥ इत्थं समस्तनिगमानुगुणं च शास्त्रं यच्चागमं हरिविरिंचिहरादिगीतम् ॥ सर्वं तदात्मगुरुतोऽधिगतं चकार पाषंडिनामपि मतानि जजान बुद्ध्या॥४३॥

इति विद्याग्रहणप्रकरणम् ।

स ब्रह्मचर्य्यनियमान्निखिलान् दधानः प्रातः प्रबुध्य सुरसिंधुजलेऽभिमृज्य ॥ कौपीनमुत्तरपटाजिनमेखलादि धृत्वाह्निकं समचरत्सपवित्रपाणि ॥ ४४ ॥ पुण्ड्राणि केशवमुखैर्घुसृणेन चक्रे सद्द्वादशोर्द्ध्वविहितानि निजप्रमाणे ॥ भालोदरोरसि गलेप्यथ

रारि सम्प्रदायके श्रीविष्णुस्वामीके वाणीके रहस्यकों मनमें धारणकर सब विद्यानके चक्रवर्ती राजा पंडितनके प्यारे श्रीवल्लभ भये ॥ ४१ ॥ जो जो आपके गुरु जन गिनाये वे सब जातिसों और सम्प्रदायसों अपने हे और देवावतार हे बृहस्पति ब्रह्मा शांडिल्य सांदीपनिके अवतार हे ओर जो इनके माता पिता यल्लमाजी लक्ष्मणभट्टजी हे वे देवकी वसुदेव हे॥ ४२॥ या प्रकार जो कछु विष्णु ब्रह्मा महादेवजीसों मान किये आगम मंत्रशास्त्र हें जो कछु यावत् वाङ्मय शास्त्र हो वो सब श्रीलक्ष्मणभट्टजीसों सीखे ओर पाखंडीनके मतमको बुद्धिसों जान लिये ॥ ४३ ॥ ओर ब्रह्मचर्यके सब नियमनकों धारण किये आप सबेरे उठकें शौचादि सों निवृत्त होयकें श्रीगंगाजीमें स्नान कर कौपीन उत्तरपट मृगचर्म्म मेखला दंडादि धारण करकें आन्हिक करते ॥ ४४ ॥ अपने प्रमाणन करकें उचित केशरके केशवादि मंत्रनसों ललाट उदर वक्षस्थल गरो दोनो कुक्षि दोनों बाहु दोनों कर्णनकें नीचे पीठ ग्रीवा इन

कुक्षिबाहुश्रोत्रांतपृष्ठककुदोऽवयवे च मुद्राः॥४५॥भाले गदांश्रुति
मृदा निजसंप्रदायिमुद्राश्च दक्षभुजमूलजुषोऽरिमुख्याः॥वामेभुजेऽ
ब्जप्रमुखाह्हदि नामपूर्वाश्चक्रादिकास्स्तनगलोदरकुक्षिपृष्ठे४६॥
शुभ्रावदातमखसूत्रवरं पलाशदंडं शिरःप्रमितमंगुलिमूलपीनम्॥
नित्यं दधार स गले सुरसासृजोपि संध्याग्निकार्यगुरुविष्णुसम
र्चनानि ॥ ४७ ॥ दध्रे कुशासनमयं शुभशासनोपि पालाशदंड
मपि यः खलु वीतदंडः ॥ औपासनं परिचचार सुरैरुपास्योवे
दान् पपाठ पठितोग्नितयैव वेदैः ॥ ४८ ॥ गीताभिगीतपुरुषोत्त
मपूर्णरूपः साक्षात्परो रसमयः कथितोंतरात्मा ॥ यो वेद तं
स्वयमसौ स्वयमेव वेद वेदांतकृन्ननु विदां विदितः सएव
॥४९॥ विद्यासु यस्य विजयाय न मिश्रभट्टोपाध्यायदीक्षितच
तुर्धरसर्ववेदाः॥सम्राट्कुलस्थपतियाज्ञिकचक्रवर्तिशेषाद्यशेषवि

स्थाननमें बारह ऊर्ध्व पुंड्र करते भये ॥ ४५ ॥ गोपीचन्दनसों ललाटमें गदा ओर साम्प्रदायिकमुद्रा करते दक्षिणभुजाके मूलमें चक्र हे पहले जिनमें एसी मुद्रा करते ओर वामभुजामें शंखादिक हृदयमें नामपूर्वक स्तन गल उदर कुक्षि पृष्ठ इनमें चक्रपूर्वक करते ॥ ४६ ॥ सुंदर स्वच्छ यज्ञसूत्र अंगुली मूलके जेसो स्थूल सुंदर पालाशको दंड तुलसीजीकी दो छोटी माला नित्य धारण कियें रहते सन्ध्या होम गुरु विष्णुकी सेवा नित्य करते ॥ ४७ ॥ अच्छे शासनवारे होयकें बी कुशासनकों दंडरहित होयकें बी पालाशके दंडकों देवतानके उपास्य होयकें बी औपासनकों वेदमें अग्निरूपसों पढे होयकें बी वेदके पाठकों धारण कियो ॥ ४८ ॥ गीतामें पूर्णपुरुषोत्तमरूपसों जो गाये गये ओर पर साक्षात् रसमय अन्तरात्मा कहे गये जो इनकों आपही जानतो हो वा वेदकों आपजानते भये ओर वेदान्तके करवेवारे भये॥ ४९ ॥ विद्यामें विजय करवेके लियें जिनके सामनें वा समयके काशीजीके प्रसिद्ध विद्वान् मिश्र भट्ट उपाध्याय दीक्षित चौधरी

बुधा न ययुर्यदग्रे ॥ ५० ॥ नारायणोप्ययमिहाश्रयतो नराणां लोकेऽवतारदशकाचरितं चचार ॥ गोरुद्धति सुरभृतिर्दनुजक्षति श्च यस्माद्दयाविततिरास कलेर्निवृत्तिः ॥ ५१ ॥ श्रीनंदनंदन मिमं विबुधा विदुर्ये वृंदावनाभिरमणं रमणं श्रुतीनाम् ॥ गोवर्द्धनै कपरमं भुवि सात्वतां च व्यक्तं कुले सकलगोपनिषेवितांघ्रिम् ॥ ५२ ॥ विद्यानवद्यविभवा न परत्र दृष्टा गद्यालिपद्यनिचया न परत्र हृद्या ॥ जल्पाकतां क इह जल्पकथास्वकार्षीत्क ल्पद्रुतामचकलत्स्वजनेष्वनल्पाम् ॥ ५३ ॥ यो वामनः स्वव पुषा ननु पावनात्मा सर्वस्वमर्पितवतेधिरसालयेषु ॥ प्रह्लादमा नयदसौ स्वयमेव तिष्ठन् वृंदारकार्थकरणाय कृतावतारः ॥५४॥

चतुर्वेदी सम्राट कुलमें रहवेवारे याज्ञिक चक्रवर्ती शेष आदि समस्त विद्वान् न गये ॥ ५० ॥ पहलेही आपने मनुष्यनकी रक्षा करवेके लिये या लोकमें दशावतार चरित्र किये हे जो गो वेद पृथिवी इनको उद्धार मीन वराह स्वरूपसों देवतानकी रक्षा अमृतदान तथा त्रैलोक्यके राज्यको दान कमठ वामन रूपसों दैत्यनको नाश नृसिंह ओर रामत्रयीसों दयाको विस्तार बुद्धरूपसों कलिकी निवृत्ति कल्की रूपसों या प्रकार किये हे ॥ ५१ ॥ ओर आपकों विद्वान् लोग वृंदावनमें रमण करवेवारे श्रुति गोपीनके रमण गोवाणीके वृद्धि करवे वारे भक्तनकी रक्षा करवेवारे सब गोपनसों सेवा किये गये चरणारविन्द हें जिनके एसे नन्दनन्दन श्रीकृष्ण जानते ॥ ५२ ॥ दोषरहित बडी विभववा- रीविद्या एसी, दूसरी जगह नहीं देखी गद्यपद्यनकी हृदयलुभायवे वारी रचना कहीं नहीं एसी देखी जिनके सामनें वाद कथामें वावदूकता कोन कर सकेहें जो अपने मनुष्यनके लिये कल्पद्रुम हे ॥ ५३ ॥ जो वामन ओर ये आचार्य अपने स्वरूपसों पवित्र शरीरहें ओर सर्वस्व अर्पण करवेवारे बलिके लिये अथवा आत्मनिवेदन करवेवारे भक्तनके लिये अधिरसालय पाताल

यस्य प्रतापमिहिरेण विनिर्मिताग्र्या लोकस्यशोकहतिरेव तमो हरेण॥हृत्पंकजानि विकचानि सतां कृतानि घंटापथः प्रकटितो निगमागमानाम्॥ ५५ ॥ नित्योदितो पि भुवि विष्णुपदाश्रितोपि नायं कदापि तमसाभिगृहीतकायः ॥ नैवासुरान् श्रयति नो जडराशिमेति नैवावलंबविकलायनमृच्छति स्म ॥५६॥ इति विद्याविभवोन्नतिप्रकरणम् ॥ मौंज्युत्सवं परिसमाप्य बुधेन तेन पित्राऽतिरात्रमुखसत्रमकारि तत्र ॥ राज्ञां विदां धनवतां सदसि प्रतिष्ठां लब्ध्वाप्यधायि कृतिभिः कृतकृत्यता च ॥ ५७ ॥ विद्या तु बालवपुषा सह यौवनेन यस्य प्रभावपृथुताखिलसंपद

अथवा वैकुंठमें प्रल्हाद वा परमानंदको देते भये जिननें देवतानके कार्यके लियें अवतार लियो हो ॥ ५४ ॥ लोगनके अज्ञानरूपी अन्धकार दूरकरवेवारे जिंनके प्रतापरूपी सूर्यनें अच्छी तरहसों लोकके शोककों नाश कियो ओर सज्जननके हृदयरूपी कमलनकों प्रफुल्लित किये ओर वेदनको राजमार्ग प्रकट कर दियो ॥ ५५ ॥ ये आचार्यरूपी सूर्य विष्णुपद आकाश अथवा भगवच्चरण उनके आश्रित होयकेंभी भूलोकमें नित्य उदित होय हे ओर ये कभी तम अज्ञानके आश्रित नहीं भयो ओर सूर्यतो तम जो राहु हे वाके आश्रित होयहे ओर आप न असुरनके न जड़राशिकें आश्रित होते न अपने अवलम्बीनकों विकल मार्ग देते सूर्य जो हें सो असुरनको तथा जड़ राशिकों भजे हें समुद्रमें डूबतो दीखपड़े हें नहीं हे अवलम्ब जामें एसे आकाशमें चलें हें ॥ ५६ ॥ पितानें आपके या प्रकार जनेऊके उत्सवको समाप्त करकें ओर अतिरात्र हे आदिमें जिनके एसे यज्ञनकों वहां किये ओर राजा विद्वान् धनवान् इनकी सभानमें प्रतिष्ठा पायकें कृतकृत्य भये ॥ ५७ ॥ विद्या बाल्यावस्थाके संग प्रभाव ओर सब सम्पत्ति युवावस्थाके संग जिनको भई हरिमें भक्ति विषयनमें

श्च ॥ भक्तिर्हरौ च विषयेषु विरक्तिरग्र्या यस्यैषणात्रयभृते त नयत्रय च ॥ ५८ ॥ जाता सुता प्रथमतोऽस्य गिरा सुभद्रा रामोऽपि सत्वतनुरस्य सरामकृष्ण ॥ श्रीवल्लभो हरिरत स्वयमेव कृष्ण श्रीलक्ष्मणादिह शिवोऽपि च केशवोऽभूत् ॥ ५९ ॥ श्रीयल्लमाख्यमहिलास्य च सोमयाजिश्रीलक्ष्मणस्य विदुषोभिमता सती या ॥ सा देवकीव तनयेन च वल्लभेन रेजे मखानलसुतेन च वेदिकेव ॥ ६० ॥ वित्तैषणाग्निवरिवस्यकयास्य पूर्णा विज्ञायते भुवि यत स हिरण्यरेता ॥ पुत्रैषणा सुतनयैरपि सोऽनृणोभूल्लोकैषणामदनमोहनसेविन किम् ॥६१॥ इत्य समस्त पुरुषार्थभरेण सिद्धो वृद्धात्मतामधिगत कृतकृत्यतां च॥ वैकुठनार्थ पदकजयो प्रविष्टो लोके बभूव यशसा स कथावशिष्ट ॥६२॥ काशीनिवासफलमाप्तवतो गुरोर्यत् पश्चोपि मगलकर किल तारकेण ॥ स्वर्वासिन पितृगणस्य मुदेऽग्रजन्मा तस्योर्ध्वदैहिकविधि

विरक्ति भई तीनों एषणा तीन प्रकारकी इच्छा तिनके लिये तीनों पुत्र भये॥५८॥ पहलें इनके सरस्वती सुभद्रा दो कन्या भई ओर पीछे रामकृष्ण श्रीवल्लभ केशव ये तीन पुत्रभये ॥५९॥ ओर पतिव्रता यल्लमाजी ये इनकी स्त्री पुत्र श्रीवल्लभ करकें यज्ञाग्निकरकें वेदी जेसी शोभती भई ॥६०॥ भट्टजीकी धनकी इच्छा हिरण्यरेता सुवर्ण उत्पन्न करने वारे अग्निसे पुत्रकी इच्छा सुदर पुत्रनसों परिपूर्ण भई ओर श्रीमदनमोहनजीकी सेवा करवेवारे इनकों लोकैषणा तो काहेकों होय ॥ ६१ ॥ या प्रकार सब पुरुषार्थनसों सिद्ध होयकें वृद्ध भये ओर कृतकृत्य होयकें भगवच्चरणकमलमें प्रवेश कर गये ओर लोकमें यशकरकें जिनकी कथामात्र रह गई ॥ ६२ ॥ काशीनिवासको जो फल हे याकों पायो हे जिननें एसे उनको नाशभी मंगलकारी होतो भयो पीछें उनके जेष्ठ पुत्र रामकृष्ण स्वर्गवासी पिताके आनन्दके

विदधे स रामः ॥ ६३ ॥ इत्थं कृते ननु विधौ पितृहायनस्या
पर्णापतेः पुरवरे समभूदपर्णः ॥ भ्रात्रानुजस्य विहितेप्यथ चौ
लकृत्ये गंतुं ततः कृतमतिः कृतमंगलोऽभूत् ॥ ६४ ॥ सर्वा
चार्यशिरोऽभिधार्यचरणद्वंद्वारविंदप्रभोः श्रीमद्वल्लभदीक्षि
तस्य जयतात्सद्ब्रह्मचर्य्योत्सवः ॥ यो नित्यं हुतभुक्तनोः
स्वसदने वंदारुवृंदारकैः स्ववर्वामामुखनिस्सृतश्रुतिपुटैः पीयूष
वत् पीयते ॥ ६५ ॥ श्रीवेदव्यासविष्णुप्रभुचरणमिते संमिते
ग्रंथसार्थैः श्रीगोविंदाभिधानांसमयनयविदां देशिकानां निदेशा
त् ॥ आचार्य्याणां चरित्रे हरिजनसुखदे कृष्णभट्टैर्निबद्धे प्र
स्थानेदिग्जयाख्येसमजनि पटहश्चादिमे षष्ठ एषः ॥ ६६ ॥

---

लिये उनकी और्द्ध्वदेहिक विधि करते भये ॥ ६३ ॥ या प्रकार अपर्णापति महादेवजी उनकी पुरीमें पिताकी वार्षिक क्रिया करकें आप अपर्ण ऋणतें छूट गये ओर छोटे भाई केशवको मुंडन मंगल कर्म करकें देश जायवेकों विचार कियो ॥ ६४ ॥ सब आचार्य शिरसों जिनके चरणकमलनकों प्रणाम करें हैं जो तेजरूप हैं उन श्रीवल्लभदीक्षितजीको ब्रह्मचर्य उत्सव सब सों उत्कर्षरूपसों विराजमान होय जिनको यश नित्य अप्सरानके मुखसों निकस्यो भयो अमृतके समान कर्णपुटनसों देवतागणन करकें स्वर्गमें पान कियो जाय है ॥ ६५ ॥ समयनीतिके जानववारे जगद्गुरु श्रीगोविन्दाचार्य जी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यासविष्णुस्वामीके मतके अनुकुल हरिभक्तनके सुखदेववारे या आचार्य चारित्रग्रन्थमें पहले प्रस्थानमें ये छठो पटह समाप्त भयो ॥ ६६ ॥

---

प्रणम्य त श्रीमदमोहन हरिं गुरु च गोविंदममंदसद्गुणम् ॥ गुरोश्चरित्र कथये दिवौकसा यशोऽस्य गायंत्युपजातयोऽपि यत् ॥ १ ॥ तां राजधानीं परमेशयोरमी श्रीमातृपादैर्नितरामरोचिताम् ॥ विहातुकामामिलिता कुटुंबिन समंत्र्य सार्द्धं चलितु प्रचक्रमु ॥ २ ॥ नत्वा सुरेशान् सुरनिम्नगामपि सगम्य विद्भि स्वजनै परैरपि ॥ श्रीवल्लभार्य्यं पुरतो विधाय त यानैर्ययुस्ते निजनीवृत प्रति ॥ ३ ॥ यज्ञोपवीताजिनदडमेखला समित्कुश स्रक्तिलकात्ममुद्रिका ॥ कौपीनकथ्यशुकपृच्छदानपि दधन् पुरोगात्स जटा कमडलुम् ॥ ४ ॥ ते तीर्थराज प्रथम समागता पद्मिश्वरत पुरत कृताह्निका ॥ नत्वैव गगां यमुनां सरस्वतीं स्नात्वाऽचरन् केशनिकृंतनादिकम् ॥ ५ ॥ तद्ब्रह्मतीर्थे पितृपिंडदानतोदेवार्चनैर्भूसुरभोजनैस्तथा॥दानैश्चमानैश्च पुरोधसोपि

श्रीमदनमोहनजीकों तथा अनेक सद्गुणवारे गुरु श्रीगोविन्दाचार्यजीकों प्रणाम करके गुरुको चरित्र कहू हूं जिनको यश देवतानकी उपजाति गन्धर्वादिकर्भी गान करें हैं॥ १ ॥ श्रीयज्ञनारायणजीकी राजधानी जो पतिवियोगसू मातृचरणनकी अरु चिचारी ही वाके छाडवेकी इच्छासों सब कुटुम्बी सलाह करके वहॉतें सग चलवे भये॥ २ ॥ देवतानको गगाजीकों प्रणाम कर सुजननसों मिलके श्री वल्लभकों आग कर सवारीनतें अपने देशको चले॥ ३ ॥ यज्ञोपवीत मृगचर्म दड मेखला समिधा कुशा माला तिलक मुद्रा कौपीन कटिवस्त्र उपरणा जटा कमडलु इनके धारण करत आगे श्रीवल्लभ चले॥ ४ ॥ पांवनसों चलने पहलें वे तीर्थराज पहुँच आग पहलहीं आन्हिक करके गगा यमुना सरस्वतीको नमस्कार करके स्नान करके मुडनादिक करावते भये ॥ ५ ॥ वा ब्रह्मतीर्थके पिंडदानसों देवतानको पूजनसों और ब्राह्मणनको भोजननसों तथा कर दान

ते संपूज्य भूयः कृतभोजना ययुः ॥ ६ ॥ ते चित्रकूटं रघुनाथस-
त्पदं संप्राप्य संपूज्य सलक्ष्मणं हरिम् ॥ श्रीजानकीशं जनकात्-
त्मजामपि प्रदक्षिणीकृत्य गिरिं गतास्ततः ॥ ७ ॥ अथेन्दुकन्या
स्नपनं विधाय यियासवस्तेऽमरकटकं प्रति ॥ श्रीवल्लभस्योद्भ-
वभूर्दिदृक्षवो महानदीमंडितचंपकं गताः ॥ ८ ॥ श्रीवल्लभश्चंप-
ककाननं गतश्चक्रे निवासं परमादरान्निजैः ॥ स्वजन्मभूमौ कृत-
वेदिकोपरिस्थितोऽपठद्भागवतागमं मुदा ॥ ९ ॥ माता तदानं-
दवनं ननंद सा समीक्ष्य चानंदवनान्मुदेऽधिकम् ॥ दिनाष्टकं
तत्र समूषुरुत्सुकावासंतदोलोत्सवमाचरन्निह ॥ १० ॥ याता
स्ततोऽमात्यवरेण पूजिताः शिष्येण वीरैः पथि तेऽभिरक्षिताः ॥
प्रस्थापिताः स्वात्मसमर्पणेन च प्रेमाश्रुभिः स्नापितपादपंकजाः
॥११॥ ततोगतास्तेऽमरकंटकेश्वरं दिदृक्षवो विंध्यागिरिं विलोक्य

मानसों अपने पुरोहितको पूजन कर पीछें आप भोजन कर वहाँसों चले ॥ ६ ॥ सो चित्रकूटमें पहुँचकें लक्ष्मणजानकीसहित श्रीरामचन्द्रजीकों पूजन कर ओर गिरिको प्रदक्षिणा कर वहाँसों चले ॥ ७ ॥ इन्दुकन्यामें स्नान करकें अमरकंटककों जायवेकी इच्छा हे जिनकी एसे वे श्रीवल्लभकी जन्मभूमिके देखवेकी इच्छासों महानद जहाँ बहे हे एसें चम्पकारण्यकों गये ॥ ८ ॥ श्रीवल्लभ चम्पकारण्यमें जायकें अपने लोगनके संग बडे आद-रसों बसे ओर अपनी जन्मभूमिमें बैठक बनायकें वाके ऊपर बेठकें श्रीमद्भाग-वतको पारायण कियो ॥ ९ ॥ माता वा आनन्दवनकों देखकें काशीसोंबी अधिक आनन्दकों पावती भई ओर वे सब बडी उत्कंठासों दोलोत्सव करते आठ दिन वहाँ रहे ॥ १० ॥ पीछें शिष्यमंत्रीसों पूजित ओर मार्गमें वीरनसों रक्षित ओर शिष्यके प्रेमाश्रुनसों स्नान कराये गये हें चरण कमल जिनके एसे वे सब चले ॥ ११ ॥ सो अमरकंटकेश्वरकी देखवेकी

तम्॥शिवं प्रणम्यैव न्यभायलन् विधो सुतोद्भवं शोणनदोद्भवं त
था॥ १२॥ अथागता सिद्धपदेऽवसन् वने यदत्र कश्चित् न्यव
सन्महत्तम ॥स वल्लभं पात्रमवेक्ष्य सपदां जगौ भवान् मत्प
दमाप्नुमर्हति ॥१३॥ स वल्लभ श्रीपतिवल्लभ क्षमी बभूव तू
ष्णीं निशि चिंतयन् वनी ॥ प्रभावमस्यावगतोहरेर्मुखात् स्व
य प्रपन्नोमनुमग्रहीत्तत ॥ १४॥जगाम वृद्ध नगर व्रजन् पथा
दिदृक्षुरात्मीयजन निजांचित ॥ ददर्श तं कोपि वरेभ्यबालको
गवाक्षमार्गात् स हि मार्गमृक् प्रभो ॥१५॥ विहाय दायं भजने
मुकुदमं मुकुंदलीलाविरहाज्जडायित ॥गतोतु साक्षात् समुकुं
दमागत मुकुदभाजांविषयेऽहिधीर्न का ॥ १६ ॥ प्रणम्य भ
क्त्याधिगतं स्वपादयोर्वभाण दामोदरदास साध्वसि॥ चिकीर्षित

इच्छासो विन्ध्यगिरिकों गये ओर वाकों देखकें शिवजीकों प्रणाम कर शोण नदकों देख्यो ॥ १२ ॥ पीछें सिद्धपदमें आयकें बसे सो वहाँ वनमें एक महात्मा रहतो हो सो सम्पत्तीनके पात्र श्रीवल्लभकों देखकें बोल्यो जो आप हमारी गद्दीपे बेठवेके अर्थात् शिष्य होयवेके योग्य हो ॥ १३ ॥ तब क्षमाशील भगवान्के वल्लभ वे श्रीवल्लभ चुप होय जाते भये फिर वो वनमें रहवेवारो महात्मा रातकों चिन्ता करते भगवान्के मुखसों आपको प्रभाव जानकें आपही शिष्य होयके मन्त्र लेतो भयो ॥ १४ ॥ ओर आप आत्मीयलोगनके सहित अपने जनके देखवेकी इच्छासों चलते कोई बडो नगर हो वहाँ गये वहाँ आपकी राह देखवेवारे एक धनवान् बालकनें झरोखासों आपको देख्यो ॥ १५ ॥ सो अपने भागकों छोडके मुकुंदकी लीलाके विरहसों जड जेसो विभागमें मुकुन्दनिधिके तुल्य साक्षात् मुकुन्द भगवान्को आवते देखकें आपके पीछे चल दियो क्यों जो भगवान्की सेवा करवेवारेकों विषयनमें अहिधी नाम विषबुद्धि कहा नहीं है अर्थात् है ही ॥ १६ ॥ सो प्रणामपूर्वक अपने शरणमें

ब्रूहि भवत्कृते वयं समागताः स्वीयवशंवदोहरिः ॥ १७ ॥ समुत्थितः प्रांजलिराह तं गुरुं वयं तु दासा भवदाशया स्थिताः ॥ दुरंतकालं प्रतितर्क्य कल्पवद्यतोंघ्रिचिंतामणिमद्यतेऽध्यगाम् ॥ १८ ॥ ततो मनुं प्राप्य गतः पुराद्बहिः स्थितो गुरुं चानुस वेदिकास्थितम्॥ मखे गृणन् पावकमृत्विजांगणे बभौ यथोद्गातृजनोपि सुस्तवैः ॥ १९ ॥ ततोग्रजाताः प्रसमीक्ष्य ढुंढने समागतास्ते वरुणं सहारुणम् ॥ निषण्णवाचोनसितुं नचाशकन् समर्पिताज्ञाः स्वगृहानुपागताः ॥ २० ॥ गोदावरीं प्राप्य सरिद्वरां ततो विधाय तीर्थार्चनतर्पणादिकम् ॥ स्वदेशजैस्तीर्थजनैः समागतैः समं मिलित्वा चलिताः पुरं प्रति ॥२१॥ स्तंभाद्रिपुर्य्याविपिनोपकंठे उत्कंठितावित्प्रवराःसमागताः ॥

आये भये उनतें आपनें कही जो दामोदरदास अच्छें हो अपने मनकी वात कहो तुह्मारे लियें हम यहाँ आये हें ॥ १७ ॥ तब हाथ जोरकें वे बोले जो हमतो आपके दास हें आपकी प्रतीक्षासूं यहाँ रहे इतनो समय बडे कष्टसों कल्पके समान बीत्यो हे आज चिन्तामणि रूप आप मिले हें ॥ १८ ॥ पीछें मन्त्र लेकें गाँमके वाहर वेदीके ऊपर विराजमान जो आपहें तिनकी स्तुति करते एसे शोभते भये जेसें यज्ञमें अग्निदेवकी ऋत्विजनके मध्यमें अच्छे स्तोत्रनसों करते उद्गाता ॥ १९ ॥ तब उनके ढूंढवेकों उनके जेष्ट भाई निकसे सो अरुणके जेसें दामोदरदासके सहित सूर्यकी प्रभावारे महाप्रभूनकों देखकें कछू बोल न सके ओर अपने घरकों पीछें गये ॥ २० ॥ ओर आप नदीनमें श्रेष्ठ गोदावरीकों जायकें तीर्थपूजन तर्पण आदि करकें तीर्थयात्राके लियें आये भये अपने देशके मनुष्यनसों मिलकें गामकों चले ॥ २१ ॥ मार्गमें स्तम्भाद्रिपुरीके वनके पास वाक्पति श्रीवल्लभके वाग्वैभवके देखवेकी इच्छासों विद्वान् लोग

र्थापत्ति प्रमाणन्तद्वाक्यान्तरविधौ श्रुतम् ॥ २९ ॥ तथाहि दे वदत्तोऽसौ पीनो भुङ्क्ते दिवा न हि ॥ पीनत्वानुपपत्त्यात्र क्षपाभोजनकल्पनम् ॥ ३० ॥ नित्यत्वानुपपत्त्यैव वाक्यमन्यद्विधीयते ॥ आर्द्धधातुकस्येडिति दोदद्धोरिति विश्रुते ॥ ३१ ॥ वुद्धेर्विपरिणामस्तु कार्यस्तेनान्वयस्तथा ॥ प्रज्ञायामिड्रहिताया सेड् वुद्धि परिकल्प्यताम् ॥३२॥ दाधीर्यत्रास्ति तत्रास्तु दद्धिपणा तथैव च ॥ अयं पुरोहितो राजा भवत्येव हि विश्रुते ॥ ३३ ॥ गम्यते राजवदिति सर्वेषामत्र सम्मतम् ॥ तद्वच्च स्थानिवत्सूत्रे वत्करण नैव युज्यते ॥ ३४ ॥ विना तेन तदर्थस्य लाभेनेष्टन्तु सिध्यति ॥ विद्वन् प्रत्युत्तर ब्रूहि भाष्यादौ चेत्परिश्रम ॥ ३५ ॥ तत्र प्रवक्तुमारेभे शब्दशास्त्र

को नित्यत्वही है ताकी अनुपपत्तिमें अर्थापत्ति प्रमाण है ॥ २९ ॥ देखो "पीनो देवदत्तो दिवा न भुङ्क्ते" मोटो देवदत्त है दिनमें नहीं भोजन करेहै एसे कहवेपे यो भोजनके विना मोटो नहीं होयसके यातें रात्रिमें भोजन करेहे ये कल्पना होय है ॥ ३० ॥ याही प्रकार नित्यत्वकी अनुपपत्तिसों दूसरे वाक्यकी कल्पना करो क्यों जो आर्द्धधातुकको इट् होय घुसंज्ञक दाको दत् होय एसो सुनें हैं ॥ ३१ ॥ सो एसे अर्थकरवेसों नित्यत्वकी हानि होयगी यातें इट्रहितवुद्धिमें सेट् वुद्धि करनी ये कल्पना करनी ॥ ३२ ॥ दाकी बुद्धिमें दत्की बुद्धि (ज्ञान) करनो ये पुरोहित राजा है ये सुनवेसों राजाके सदृश है ये अर्थ जेसे सर्वसम्मत होय है वेसेही "आदेश स्थानी" एसे कहवेसों स्थानीके तुल्य ये अर्थ होई जायगो फिर वत् ग्रहण क्यों चाहिये ॥ ३३ ॥ ३४ ॥ क्यों जो (वत्ग्रहण) न करवेसोंभी वत् के अर्थको लाभ है तो इष्टसिद्धि होयजायगी सो भाष्यादिकग्रन्थनमें आपने परिश्रम कियो होयतो कहिये ॥ ३५ ॥ तब शब्दशास्त्रके पण्डित गागाभट्ट बोले

विशारदः ॥ आदेशाश्रितकार्य्यार्थं युक्तं वत्करणं त्विह ॥ ३६ ॥ रामायेत्यादिसम्पन्नं भवत्येव न संशयः ॥ अत्र प्रमाणाकांक्षायां कष्टायक्रमणे स्थितम् ॥ ३७ ॥श्रुत्वैवं गुरुरप्याह स्मर भाष्यादिसम्मतम् ॥ पदसंस्कारपक्षं हि वाक्यसंस्कारकं तथा ॥ ३८ ॥ दोपसम्भावना नात्र कर्तुं शक्तो बृहस्पतिः ॥ एवं नित्यत्वव्याघातो नहि दिष्टत्रयेऽपि हि ॥३९॥श्रुत्वा संशयमापन्नः पुनर्वादी जगाद ह ॥ नन्वधीते जनकवदिति न्यायानुरोधतः ॥ ४० ॥ आदेशपदलाभेऽत्र तद्ग्रहणं नेष्यते पुनः ॥ कर्तुमत्र समाधिंहि न शक्तो गीष्पतिः स्वयम् ॥ ४१ ॥ ततो गुरुर्जगादेत्थं सत्यं प्रत्युत्तरं शृणु ॥ आनुमानिक आदशोयत्र सूत्रैर्विधीयते ॥ ४२ ॥ तत्रापि स्थानिवद्भावसमर्पकतया वरम् ॥अन्यथा यत्र साक्षादष्टाध्याय्यावोध्यते यथा ॥४३॥ अदोजग्धिर्ल्यप्तिकिति चैवं यत्र विधिः श्रुतः ॥

जो आदेशके आश्रित कार्यके लियें वत् गहण चहिये ॥ ३६ ॥ रामाय इत्यादि होय हैं यामें संदेह नहीं 'कष्टायक्रमणे' ये प्रमाण हे ॥ ३७ ॥ एसो सनेंक श्रीमदाचार्य बोले जो भाष्य आदिग्रन्थनको सम्मत पदसंस्कार पक्ष ओर वाक्य संस्कारपक्षको स्मरण करो ॥ ३८ ॥ यामें बृहस्पतिबी दोषकी संभावना नहीं कर सके हें यातें नित्यत्वकी हानी बी तीनों कालमें नहीं ॥ ३९ ॥ या बातको सुनकें संदेहमें पडके फिर वादी बोल्यो जो "पितृदवधीते" ये कहवेसों जेसें पुत्रकोही बोध होयहे वेसेही स्थानिवत् कहवेसों आदेशको लाभ होईजायगो फिर आदेश ग्रहण क्यों चहिये याको समाधान करवेको बृहस्पतिबी समर्थ नहीं हें ॥ ४० ॥ ४१ ॥ तब श्रीमदाचार्य बोले जो सत्य हे परन्तु उत्तर सुनो आनुमानिक स्थान्यादेशके ग्रहणके लिये हे ॥ ४२ ॥ नहीं तो जहाँ साक्षात स्थान्यादेश ने

तत्रैव स्थानिवद्भावो न तु स्यादानुमानिके ॥ ४४ ॥ एवां दौहि तदभावे पदत्वं नैव सिध्यति ॥ पचत्वादौ न चेदिष्टं तद् प्रयोगानर्हता भवेत् ॥ ४५ ॥ दृश्यन्ते चाकरग्रन्थे प्रयोगास्ता दृशास्तथा ॥ न हि युक्तं वचो ब्रूप एवं वाद्यब्रवीद्वच ॥४६॥ पचत्वादौ त्वेकदेशविकृतन्यायमाश्रयेत् ॥ पदत्वं तत्र सम्पन्नं बाधकं नैव दृश्यते ॥ ४७ ॥ कुसृष्टेः कल्पनं चेतत्किमर्थं क्रियते बुध ॥ अत्रादेशपदस्यैवं न हि दृष्टं प्रयोजनम् ॥४८॥ विभावयतु सद्बुद्धे समाधिं सप्रमाणतः ॥ ततः सम्यक् समाधानं प्रवक्तुं सोऽब्रवीद्वचः ॥ ४९॥ नित्याः शब्दा इति प्रोक्तं भाष्यकारादिभिः स्वयम् ॥यत्र त्वं विकृतं ब्रूपे महासाहसवान् भवान् ॥ ५० ॥ सर्वे सर्वपदादेशा इति न्यायानुरोधतः ॥

जैसें(अग्रोजग्धि )वहाँही होयगो अनुमानिकर्मे न होयगो ॥ ४३ ॥ ४४ ॥ तब तो शब्दानित्यत्वके वारणके लिये'इकारान्तस्य स्थाने उकारान्त आदेश' एसे अर्थवारे'एरु' इत्यादिकनको ग्रहण न होयगो तो 'पचतु' इत्यादिकनमें तिङन्तत्वके न आयवेसों पदत्व सिद्ध नहीं होयगो ओर जो पदत्वाभाव इष्ट मानोंगे वो 'अपद न प्रयुञ्जीत' या भाष्यसों प्रयोग नहीं होयगो ॥ ४५ ॥ ओर ये प्रयोग बडे ग्रन्थनमें देखेंहें तब वादीनें कह्यो जो ठीक नहीं कहो हो ॥ ४६ ॥ 'पचतु' इत्यादिकनमें "एकदेशविकृतन्यायसों, पदत्व सिद्ध होयजायगो कछु बाधक नहीं दीसे हे ॥ ४७ ॥ श्रीमदाचार्यजी—कुसृष्टिकी कल्पना क्यों करो हो यहाँ आदेशपदहीको कछू प्रयोजन नहीं दीस पडे हे ॥ ४८ ॥ अच्छी बुद्धिवारे सत् प्रमाणनसों समाधानको विचार करो तब वादी बोल्यो जो अच्छो ठीक समाधान करो ॥ ४९ ॥ श्रीमदाचार्य—भाष्यकारादिकननें स्वयं शब्द नित्य कहे हे तामें तुम विकार कहो हो बडे साहसी हो ॥ ५० ॥ "सर्वे सर्वपदादेशा" या न्यायके अनु-

एकदेशविकारश्च न वक्तुं शक्यते त्वया ॥ ५१ ॥ एवं शीकरनिर्लेपोमहोत्पलदले यथा न दोषगन्धसंस्पर्शोमे धयालोच्यतां हृदि ॥ ५२ ॥ इत्थं विवादस्त्रिदिनं बभूव गागाभिधस्यार्यवरेण साकम् ॥ प्राचाम्मतं साधयतामुनोच्चैः फणीन्द्रवाङ्नर्तनमभ्यकारि ॥ ५३ ॥ गागाभट्टः प्राह न त्वाय्यर्यपादं धन्यायूयं शब्दशास्त्रस्वरूपाः ॥ शेषोयेषां शेषभूतोगुणैः स्वैस्तान् कोजेतुं चेष्पतेऽनीश्वरः सन् ॥ ५४ ॥

इतिदिनत्रयजातस्थानिवत्सूत्रविवादप्रकरणम् ।

विद्यातीर्थोव्यासतीर्थाय यायाः प्राहैषां याः कोटयो व्याहतावै ॥ विद्याभूः सारङ्गराजाभिधेनतास्ताः सर्वावर्णितामातुलेन ॥ ५५ ॥ लक्ष्मीधरेण विदुषा गदितास्तथान्याः श्रुत्वाभ्यखण्डयदयं किल खण्डशोद्राक् ॥ रिंखत्स्फुटोक्तिभरसंवरसत्तरङ्गैराप्लावयद्बुधजनानतिहर्षमग्नैः ॥ ५६ ॥

रोधसों एकदेश विकार तुम नहीं कहसको हो ॥ ५१ ॥ बडे कमलके पत्रमें जेसें जलके कणानको लेप नहीं होयहे वेसेही दोषके गन्धकोवी स्पर्श नहीं हे बुद्धिसों हृदयमें देखो ॥ ५२ ॥ एसो गागाभट्टको विवाद प्राचीन-मतके साधन करवेवारे श्रीमदाचार्यजीसों तीन दिन भयो वा समय साक्षात् शेषजीकी वाणी नाच रही ही ॥ ५३ ॥ गागाभट्ट आचार्यचरणनकों प्रणाम करकें बोले जो धन्य हें आप! आप शब्दशास्त्रके स्वरूप ही हें शेषबी जिनके गुणनके शेष हें उनको कोन जीव जीत सके हे ॥ ५४ ॥ एसे तीन दिन स्थानिवत् सूत्रमें शास्त्रार्थ भयो-पीछें विद्यातीर्थजीनें व्यासतीर्थसों जो जो कोटि(शंका)करीहीं उनको वर्णन तथा दूसरी कोटीनको वर्णन विद्याभूषा रंगराज उपाधिवारे मामा पंडित लक्ष्मीधरजीनें आपसों कर्‌यो उनकों जल्दीसों खंडन करकें सावपंडित जननको आपनें आनन्दके तरंगनमें डुवाये ५५॥५६॥

परस्पर यश्च परैर्विवाद प्रागेव जातो मातिनोऽनुजेन ॥ सोमेश्व रेणोक्तमथानुवाद विधाय तत्खण्डनमभ्यधायि ॥ ५७ ॥ आ द्यात्र कोटि: खलु सद्विशेषसिद्ध्यै विशेषी ध्रुवमेव वाच्य ॥ सचान्तरङ्गोप्यथसोपजीवी तद्बोधनायैवविशेषणोक्ति ॥५८॥ तदुत्तर लक्ष्मणनन्दनोसो जगाद किनो विपरीतमे तत् ॥ विना विशेषैर्न विशेषबोधस्ततोन्तरङ्गा उपजीवका स्ते ॥ ५९ ॥ श्रुतिस्मृतीनां वचनैर्विनिर्णयो दृष्टोभवेद्व्या समहर्षिसूत्रे ॥ विशेषवद्ब्रह्मणएवजायते समाधिभाषाक्वनेर शेषै ॥ ६० ॥ विद्यागुरु प्राह सधर्मकेऽस्मिन्नङ्गीकृते सि घ्यति भेद एव ॥ क्रोडीकृतेऽस्मिन् श्रुतिवाक्यबाधस्ततो विशे षा न हि वास्तवास्ते ॥ ६१ ॥ श्रीवल्लभ प्राह ततो विह स्य किं कल्पितैर्वास्तववस्तुबोध ॥ अवस्तुभूत न खपुष्पम

ओर पहले जो पण्डितनमें आपसमें विवाद भयो वाको अपने छोटे मामा सोमे श्वरसों सुनके वाकोवी अनुवाद करके खडन कियो॥ ५७॥ पूर्वपक्षीकी पहली ये कोटि ही जो विशेष ( धर्म ) के सिद्धकरवेमें निश्चय विशेषी ( विशेष्य ) कहोहींगे तो वोही अन्तरंग हे ओर उपजीवी हे ताहीके जानवेके लिये विशेषणको कथन हे अर्थात् निर्धर्मकही ब्रह्म सिद्ध भयो ॥ ५८ ॥ याको उत्तर लक्ष्मणनन्दनें कह्यो के कहा ये विपरीत नहीं होयसके धर्मनके विना धर्मीको बोध नहीं होयसके यातें धर्मही अन्तरग हें ओर उपजीवक हें ॥ ५९ ॥ श्रुतिस्मृतिनके वचननसों ओर व्याससूत्रनसो ओर सम्पूर्ण भाग-वतके समाधिभाषावचननसों सविशेषही ब्रम सिद्ध होयहे ॥ ६० ॥ तब विद्यागुरु बोले के सधर्मक स्वीकार करवेमें भेद सिद्ध होयजायगो ओर जो भेद मानोंगे तो श्रुतिवाक्यनको बाध होयगो तासों धर्म वास्तव नहीं हें ॥ ६१ ॥ तब आप हँसके बोले जो कहा कल्पितसो सिद्धान्तमें वस्तु

त्र सद्वस्तुनः स्यादुपलक्षणं तत् ॥ ६२ ॥ विद्यानन्दस्समभणद
थो नर्तयन्भ्रूलतां स्वां कोपाटोप प्रकटविकटासृक्कटाक्षास्फुटोक्तिः
॥ भो भो भ्रान्त्या पुनरपि पुनर्वेत्सि मिथ्या सतो नो भेदं खेदं वह
सि मम किं बाधकं लक्षकेऽस्मिन्॥६३॥अवदज्जयतीर्थनामधेयः
किमु मिथ्यानृतयोर्विशेषलेशः ॥ यदि नास्ति विशुद्धसंविदोऽ
न्यच्छशशृङ्गायति तत्कथं न मिथ्या ॥ ६४ ॥ जगाद चैत
न्यवनस्ततः स्फुरन्महोष्ठकोष्णाम्बुधिदूषिताधरः ॥ अनादि
भावेन विनाशिना कथं न मिथ्यया मे सदवस्तुनो भिदा ॥६५॥
तोताचार्य्यः प्राह युक्त्या नताङ्गो भावोऽनादिः क्वापि दृष्टो न
नष्टः ॥ दृष्टान्तश्चेत्प्रागभावो न भाव आविर्भावाद्भ्रष्टसिद्धिः स
चापि ॥६६॥ उत्कण्ठेन प्राह शित्यादिकण्ठः कुंठा वाक् ते प
श्य वैकुंठभक्त ॥ आविर्भावः कस्तिरोभाव एतौ नित्यानित्यौ
किञ्च तौ सिद्ध्यतो नो ॥ ६७ ॥ एकाधारे तौ विरुद्धौ न ध
र्म्मौ ताहग्धर्मी कः कुतोधर्म्मसिद्धिः ॥ कादाचित्कत्वे च हे

कों ज्ञान होय हे जो वस्तु नहीं हे आकाशपुष्प वो केसें सद्वस्तुको उपल-
क्षक होयगो ॥ ६२ ॥ तब आडम्बरसों वडे कोपतें अपनी भौंहनको
नचावते विद्यानन्द बोले के कहा भेद बाधक हे ॥ ६३ ॥ जयतीर्थ(माध्व) बोले
के मिथ्या अनृतमें कहा कछू विशेष हे जो ज्ञानसों भिन्न कछू नहीं हे तो
मिथ्या शशलाके शृंगके जेसे क्यों नहीं ॥ ६४ ॥ चैतन्यवन शांकर बोले के अना
दिभाव ओर विनाशीसों सतको भेद क्यों नहीं ॥ ६५ ॥ वडे युक्तिवारे तोताचार्य
(कोई रामानुज) बोले के अनादिभाव कहाँ देख्यो गयो हे प्रागभाव तो दृष्टान्त
नहीं होयसके हे ॥ ६६ ॥ शितिकंठ(कोई शैव) बडी उत्कंठासों बोले के आवि-
र्भाव तिरोभाव ये कहा हें नित्य हें के अनित्य हें ॥ ६७ ॥ एक आधारमें वे
[illegible]

होयगी

तोमेसेषा हीशेच्छान्त धावनेनात्र सिद्धिः ॥६८॥ शेषाचार्य्यः प्राह चाकर्णय त्वं श्रुत्या सिद्धौ तौ तयोरूपमेतत् ॥ साक्षात्कारे वस्तुनोगोचरत्वमाविर्भावोऽतस्तिरोभावकोन्यः ॥ ६९ ॥ ते चोभे भो वस्तुसत्त्वेन नित्ये नित्यं सर्वं भूतभाविप्रयोगात् ॥ श्रुत्या स्मृत्या योगदृष्ट्या च युक्त्या व्यासाहूत्या भारतानां मृतानाम् ॥ ७० ॥ विद्यातीर्थं सस्फुरत्स्वोष्ठयुग्म कोपाटोपादुन्नटद्भ्रूकटाक्षः ॥ धर्म्मोनित्योधर्म्मिणोपीयुषो किं प्रत्यक्षनोनानुमान बलं तत् ॥ ७१ ॥ ततोविकल्प्युक्तिमत्प्रकटवाक्तर्तितत्सदृशे जगौ निकटवर्तिनामकटुवर्णपूर्णो गुरुः ॥ क्रमोपि विभुना तयोर्विरचित पुरा सृष्टये न दूषणमितोमिते न च छलं सतीष्वाचरेत् ॥ ७२ ॥ जगौ नीलकंठस्ततोकुंठबुद्धे गत प्रस्तुत प्रस्तुत प्रोच्यतां भोः ॥ अविद्याह्यनादिर्मतोपाधिरीशे विनष्टाभवेत्तेन मिथ्या तथार्थे ॥ ७३ ॥ रामाचार्य्यः प्राह

कबी आविर्भाव है कबी तिरोभाव है एसे मानवेमें हेतुकी अपेक्षा है सो ईश्वरेच्छाताईं दौडवेसों सिद्धि होयगी॥६८॥शेषाचार्य (कोई विष्णुस्वामी) बोले के सुनो आविर्भाव तिरोभाव श्रुतिसिद्ध हैं उनको ये रूप है के वस्तुके देखवेमें आविर्भाव ओर न देखवेमें तिरोभाव॥ ६९ ॥ ओर ये वस्तुसत्तासों नित्य हैं श्रुति स्मृति योगदृष्टि युक्ति इनसों ओर मरेभये भारतनकों व्यासजीने बुलाये यातें सब नित्य है ॥ ७० ॥ विद्यातीर्थ बडे कोधसों बोले के प्रत्यक्षसों अनुमान बलवान नहीं ॥ ७१ ॥ पीछें यही युक्तिवारे कोमलवर्णनसों पूर्ण वचननकों आप बोले के उनको क्रमभी विभुनें सृष्टिके आदिमें कियो है॥७२॥तब नीलकंठ बोले के हे अकुण्ठ बुद्धे! जो प्रस्तुत (प्रकरण) चल रह्यो हो सो गयो अविद्या अनादि है उपाधि है नाशवारी है यातें मिथ्यारोपी धर्मोही अथ है ॥ ७३ ॥ रामाचार्य बोले माया मिथ्या नहीं

मिथ्या न माया मायावादिन्नीशशक्तिस्तथा किम् ॥ लोके मायामायिकानान्तु सत्या कार्य्यं मिथ्या दर्शयन्ति क्वचित् सत् ॥ ७४ ॥ वैकुंठाख्यः कुंठितक्रोधरक्तनेत्रास्योऽसौ दूषयन् दोषमस्य ॥ आहोच्चैः किं त्वन्न मायोक्तितोनो मिथ्यावादी स्वप्नसृष्टेस्तथोक्त्या ॥ ७५ ॥ सिंहाचार्य्यस्तत्र चैवं ललाप माया वादस्ते रुतः पार्थमिश्रैः ॥ मिथ्यावादी चेति केचिज्जगुर्ज्ञाः स वै चैतत्तत्समुक्त्या तथासि ॥ ७६ ॥ ईशेच्छातः सृष्टिरेषा मते ते मायैवेच्छा सा पराशक्तिरीशे ॥ नेच्छाम्येवं मन्यसे ब्रूहि का सा सृष्ट्यासृष्टिं यां कयेत्याह पेरुः ॥ ७७ ॥ शेषस्वामी गद्गदोक्तीरुषाह ब्रह्मेच्छैषा ब्रह्मरूपा नचान्या ॥ ब्रह्मात्मानं भो यया तामकार्षीत् ज्ञानेच्छौजोरूपिणी सा परान्या ॥ ७८ ॥ आपाभट्टः प्रश्नमन्यं चकार कर्तेशश्चेत्तत्र वैषम्यदोषः ॥

हे किन्तु ईशकी शक्ति हे लोकमेंबी मायाकरवेवारेनकी माया सत्य हे परन्तु कार्य कहीं मिथ्या कहीं सत्य दीखे हे ॥ ७४ ॥ बडे कुंठित होयकें वैकुंठ (कोई शांकर) बोले के हमारी उक्तिसों तुह्मारी अभिमत माया नहीं सिद्ध होती ओर स्वप्नवत् सृष्टिके कहवेसों तुम कहा मिथ्यावादी नहीं हो ॥ ७५ ॥ सिंहाचार्य (कोई विष्णु स्वामी) बोले के तुह्मारो मायावाद पार्थमिश्रनें कह्यो हे ओर विद्वान् मिथ्यावादी जेसे कहे हें वेसेही तुम हो ॥ ७६ ॥ ये सृष्टि ईशकी इच्छासों तुह्मारे मतमें हे मायाही इच्छा हे वोही परा शक्ति हे ईश्वरमें परन्तु एसो में नहीं मानतो एसो पेरुभट्टनें कह्यो ॥ ७७ ॥ शेषस्वामी क्रोधसों गद्गदवाणी बोले के ब्रह्मकी इच्छा ब्रह्मरूप हे दूसरी नहीं ओर ताहींसों अपनी आत्माकों करें हें ॥ ७८ ॥ आपाभट्टनें दूसरो प्रश्न कियो के जो ईश कर्ता हे तो वैषम्य दोष होयगो ओर जीव कर्ता हे तो केसें बंधनको प्राप्त होय हे जेसें कर्म

कर्ताजीवोवध्यतेऽसौ कथमो कर्म्मानादिर्ब्रूहि मायां तथैव ॥ ७९ ॥ दोष रोपाद्गुग्नमप्याह वाचं देवादित्योदूषयन् गां परोक्ताम् ॥ कर्तैवेशोनैव वैषम्यदोष स्वात्मारामे स्वात्मसृष्टे कथ स ॥ ८० ॥ अवदत् खलु देवशङ्करोऽत: प्रतिवादीभ भयङ्करोमृगेन्द्र ॥ यदि कर्ता परमेश्वरोविकारी श्रुतिवाक् तत्र विरुध्यतेऽथ सूत्रम् ॥ ८१ ॥ श्रुतिवाक् नैव विरुध्यते न सूत्र हरिरूचे प्रकट सदोमुदेऽसौ ॥ मिहिरोपि यथात्रलौकिकेद्धा परमात्मा च तथाह्यलौकिकोसौ ॥ ८२ ॥ मयूरनाभिर्गिरमाह गर्जन्न ज्ञानज बन्धनमस्य पुस ॥ शाब्दापरोक्षेर्ननु तत्त्वमस्या दिभिर्विना याति न बोधनेन ॥ ८३ ॥ ततोवभाषे विहसन् कुमार: शब्दापरोक्षं न विनापरोक्षम् ॥ परोक्षभूतोदशमादिवन्नो कदाचिदानन्दतयावभात: ॥ ८४ ॥ एवं बुधानां खलु कोट

अनादि है वैसेंहीं मायाकों समझो ॥ ७९ ॥ दूसरेंकी वाणीको खडन करते देवादित्य बोले के कर्ता ईशही है वैषम्य दोष नहीं है स्वात्मारामेंमें स्वात्मसृष्टिको केसो वैषम्य ॥ ८० ॥ पीछें प्रतिवादी हाथीनको भय करवे वारे सिंह समान देवशंकर बोले के जो कर्ता परमेस्वर विकारी होयगें तो श्रुति सूत्र विरुद्ध होंयगे ॥ ८१ ॥ तब सभाको प्रसन्न करते हरि बोले के न सूत्र विरुद्ध होयगे न श्रुति जेसे ये सूर्य अलौकिक है वेसेही परमात्मा अलौकिक हैं ॥ ८२ ॥ मयूरनाभि गर्जना करते बोले के अज्ञानसों जीवको बधन होय है अपरोक्ष (तत्त्वमसि) आदि वाक्यनके उपदेशकेविना वो नहीं छूटे है ॥ ८३ ॥ तब हँसतेभये कुमार बोले के विना परोक्षके शब्दको अपरोक्ष केसो कभी दशम वो एसे परोक्षज्ञानके तरह आनन्दको भान नहीं होय है ॥ ८४ ॥ एसी पण्डितनकी जो परस्पर कोटि ( शंका ) हैं जिनको उनने खडन कियो है। उनकों फिर शम्भुभट्टप्रभृतिके उठावने पें सन्यासीनके सामनें

योयाः परस्परं तैरपि खंडिताङ्गैः ॥ उत्थापिताः शम्भुमुखैः पुनस्ता विखंडितामस्कारिणां पुरोद्धा ॥ ८५ ॥

इत्यष्टदितान्तंमिथोविवादप्रकरणम् ।

ततोमुक्तिवादे विदां सद्विवादे स्फुरद्युक्तिसूक्त्या जगर्जात्र शम्भुः ॥ न विद्यागुरुर्नैव विद्यासुखाद्याः पुरोभागितांतत्पुरो भेजुरेते ॥ ८६ ॥ तौतातिकानामथ तार्किकाणां प्राभाकराणां मतगोमुरारेः ॥ प्राज्ञैर्विजिज्ञे द्रुहिणः प्रसादाद्गुरोः सभायां परतः प्रमाणे ॥ ८७ ॥ विदां कथा लक्षणलक्ष्यसिद्धिं श्रीहर्षमिश्रोदितखंडनस्य ॥ चखंड नारायणनामधेयोनारायणस्याङ्घ्रि समाश्रयेण ॥ ८८ ॥ उपक्रमस्य प्रबलत्वसिद्धिं तथोपसंहारगिरोऽबलत्वम् ॥ जहार वाचामधिपप्रसादात् स केशवः केशवसम्प्रदायी ॥ ८९ ॥ हरेर्हरस्यापि विधेरमायाभानोः कृशानोर्यदुपासनास्ति॥श्रुतेर्मता श्रौतमतानुगानां भिन्नाधिकारेण विदां

आपनें खंडन कियो ॥ ८५ ॥ एसे आठ दिन परस्पर विवाद भयो फिर विद्वाननको मुक्तिवादमें अच्छो विवाद भयो वामें सुंदर युक्तीनसों ओर वचननसों शम्भुभट्ट गर्जे सो इनको सामनों विद्यागुरु विद्यासुख आदि काहू विद्वान्नें न कियो ८६ ॥ ओर श्रीमदाचार्यकी कृपासों सबमतनके जानवेसों स्वयम्भूनें दूसरे विद्वाननकों जीत्यो ॥ ८७ ॥ ओर नारायणके चरणनके आश्रयसों नारायण आपके शिष्य स्वभूनें श्रीहर्षमिश्रकी कहीभई लक्षणलक्ष्यसिद्धिको खंडन कियो ॥ ८८ ॥ वैष्णवसम्प्रदायी केशवनें श्रीमदाचार्यजीकी कृपासों उपक्रमकी प्रबलताको ओर उपसंहारकी निर्बलताको दूर कियो ॥ ८९ ॥ ओर श्रीमदाचार्यके शिष्य हरिनें सब विद्वाननसों ये कह्यो के विष्णु शिव ब्रह्मा लक्ष्मी सूर्य अग्नि इनकी उपासना वेदसम्मत हे सो वेदानुयायीनकों भिन्न भिन्न अधिकार

मता सा॥९०॥विशेषलेशोन सुरेषु येषां मतेपि तेषां सगुणेरशे
ष ॥निजस्वभावानुगुणोगुणेश समर्चितोसौ सगुणामृताय ९१॥
संसेवनीय खलु सत्वमूर्तिर्मुमुक्षुभि श्रौतमतान्सुरारि ॥समाधि
भाषादिविनिर्णयोयम् गुरो प्रसादाद्धरिराह विज्ञान्॥९२॥राम
स्ततोमाध्वमुखान् जगाद हरे प्रिया द्वैतगिरोवदन्तु॥विशुद्धमद्वै
तमिहास्ति सिद्धं मयैव साकं यदि चेद्विरुद्धम्॥ ९३ ॥ इत्थं
विवादस्समभूत् सभायां नगाक्षिघस्रेषु गिराम्पतेर्वै॥ पर श्रुता
नाञ्च परस्पर वै भङ्ग्या कुरङ्ग्या यचसां विनोदे ॥९४॥दिग्घ
स्त्रमासीत् प्रथमोपि जल्प विद्यागुरुस्वामिवरैर्गुरोर्न ॥ दिनत्र
यं स्थानिवतोपि याम परे परस्ताच्च मियोपरैस्तत ॥ ९५ ॥
यथा यथा श्रीयदुनाथनाम्ना यथा यथा माधवशर्मणापि ॥
तथा तथायं विनिरूपितोऽत्र गुरोस्सभायां विजयोऽनुबुद्ध्या
॥९६॥जयजयध्वनिरास ततोविदा सदसि सर्वमतानुमता परे॥

पर हे॥९०॥जिनको विशेष आग्रह कोई देवमें नहीं है उनको ओर मुक्तिकी इच्छा करवेवारेनको सत्वमूर्ति विष्णुही सेव्य हैं ये वेदसों ओर समाधिभाषा आदिसों निर्णीत है ॥ ९१ ॥ ९२ ॥ पीछें माध्व आदिकनसों राम बोले के हे भगवत्प्रियो अपनी द्वैतवाणी कहो यहाँ तो शुद्धाद्वैत सिद्ध भयो जो आप विरुद्ध होंय तो मेरेही सग शास्त्रार्थ करें ॥ ९३ ॥ एसे वचनके विनोदकरकें सभामें ( श्रीमदाचार्यकोविवाद ) अठाइस दिन भयो तामें प्रथम विवाद विद्यागुरुतथास्वामिवरनसों ( १० ) दिन भयो ( ३ ) दिन स्थानिवत्सूत्रमें भयो ओर परस्पर भयो नित्य एक प्रहर विवादको समय हो ॥ ९४ ॥ ९५ ॥ जेसे जेसे श्रीयदुनाथजीनें कह्यो हे ओर जेसे जेसे माधवशर्मा में कह्यो हे वेसेही वेसेही श्रीमदाचार्य-जीको ये विजय मेंनें लिख्यो हे ॥९६॥ पीछें विद्वाननकी सभामें सब मत-
[illegible]

हरिजनामुदिताश्चकिताः पुनः समभवन्नितरे प्रतिवादिनः॥९७॥
धराधिनाथेन धरार्द्धिभिस्ततोनतोनुयातः स्वनिकेतमीयिवान्॥
पुराङ्गनाः पौरजनाः सुमोत्करैर्ववर्षुरेनं पथि मंगलोदयम् ॥९८॥

इतिपरविवादप्रकरणम् ।

विद्याभिर्हरितां जयः क्व च भवेत्प्रज्ञावतां संसदः को लोकस्य यथा सुखं प्रलपतोप्यास्यंप्यधास्यज्जनः ॥ दैवानाञ्च समुद्धृतिर्नतमृते कर्तुं ततोवाक्पतिर्नैजैश्यं प्रकटीचकार तदनायासेन सम्पादितुम् ॥ ९९ ॥ श्रीवेदव्यासविष्णुप्रभुचरणमिते सास्मिते ग्रन्थसार्थैः श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥ आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे प्रस्थानेऽस्मिन् द्वितीये समजनि पटहोदिग्जयाख्ये तृतीयः ॥ १०० ॥

---

होयगये ॥ ९७ ॥ पीछें राजासों प्रणाम किये गये आप अपने स्थानमें पधारे मार्गमें पुरके स्त्रीपुरुषननें पुष्पनकी वृष्टि करी ॥ ९८ ॥ विद्वाननकी सभामें दिशानको विघानकरकें जय केसें होतो स्वच्छन्द बोलवेवारे लोगनको मुख कोन बन्द करतो दैवीजीवनको उद्धार केसे होतो ये सब अनायाससों करवेकें लियें वाक्पति श्रीमदाचार्यजीको प्राकट्य भयो ॥ ९९ ॥ देशकालके जानेववारे जगद्गुरु श्रीगोविन्दाचार्यजीमहाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यासविष्णुस्वामिसम्प्रदायके ग्रंथनके अनुकूल भगवद्भक्तनके सुखदेववारे या आचार्य चारित्रग्रन्थमें दूसरे प्रस्थानमें तीसरो पटह समाप्त भयो ॥ १०० ॥

---

ततोरजन्यामिह वल्लभ प्रभु कृतक्रिय नित्यकथासमुत्थितम् ॥
समागतोव्यासगुरुस्समादृतोरहोवदत्तद्गुणतुष्टधीरयम् ॥ १ ॥
भवान् मदीयाध्वसुरक्षणक्षमोविचक्षणानां प्रवरोविदामपि ॥ अ
लङ्कुरुष्वार्पितमेव मे पदं पदं यतोदुर्लभमत्र धीमताम् ॥२ ॥
जगुस्तदाचार्य्यवराभवद्भुतमनीषिणा सम्यगिवेह दृश्यते॥ तथा
पि चान्तस्स्थितदेवताज्ञया विचार्य्य भूय कथयिष्यते मया
॥ ३ ॥ निशम्य वाच विमनास्समस्कारिर्गतो गते य शयन
व्यधात् प्रभु ॥ प्रभुस्तत स्वप्नगत समूचिवान् भवानमुष्यो
क्तिमपाकरोत्त्विमाम् ॥ ४ ॥ सुदुर्लभ किं भवत पद पदं सु
दुर्लभं यस्य कृपेव यच्छति ॥ मया यदर्थ भवतोऽवतारण कृ
तं तमर्थं कुरु मत्प्रिय प्रिय ॥ ५ ॥ विष्णुस्वामिमत तथागत
जनै पाषण्डिभिर्मायिभि प्राय कालवशेन नाशितमद कुर्वं

पीछें रातमें सन्ध्योपासनादिकर्म ओर भगवान्‌की कथाकों करकें जब श्रीवल्लभ महा प्रभु विराजे तब आपके पास मध्वमतके व्यासाचार्य आये ओर आदरकों पायकें प्रभुनके गुणनसों तुष्ट होयकें एकान्तमें बोले ॥ १ ॥ जो आप हमारे मार्गकी रक्षा करवेमें समर्थ हें ओर विद्वाननमें श्रेष्ठवी हें यासों हमारी गद्दीकों स्वीकार करें ये ओर विद्वाननकों दुर्लभ हे ॥ २ ॥ तब आप बोले जो आपको कथन सत्यहे तथापि हमारे शरीरमें रहवेवारी देवताकी आज्ञासों विचारके पीछें हम कहेंगे ॥ ३ ॥ ये सुनकें वे सन्यासी उदास होयकें चले गये उनके गये पीछें प्रभुनने शयन कियो तब स्वप्नमें भगवान्‌नें आज्ञा करी जो व्यासाचार्यके कथनकों दूर करो ॥ ४ ॥ जिन आपकी कृपासों दूसरेनकों पद मिलि हे उनको पद कहा दुर्लभ हे हमनें जाके लिये अवतार कियो हे वा हमारे प्रिय कार्यकों करो ॥ ५ ॥ विष्णुस्वामीके मतको बौद्धननें ओर मायिक पाखण्डीनन कालवशसों प्रायः नष्ट कर दियो हे ताको उज्जीवन करो

त्र तज्जीवनम् ॥ मन्त्रं मे खलु बिल्वमङ्गलमुनेः स्वीकृत्य ता तेरितम् लोके चारय वारयासुरजनान् श्रीशस्य घंटापथम् ॥ ६ ॥ आज्ञामेवं विधायासौ देवोयातोयथागतम् ॥ निषिध्य व्यासतीर्थोक्ति दाम्ने वृत्तं स तज्जगौ ॥ ७ ॥

इतिभगवदाज्ञाप्रकरणम् ।

अथापरमिहिरोदयावसरे कृतनित्यनैमित्तिककृत्योभृतनूतना म्बरमंडनः समाहूतनिजसामन्तमन्त्रिभृत्यः सुनयविदा बहुवि दा दिष्टविदा निर्दिष्टाभिषेकविजयसमयः पुरोधसा विज्ञापि तयज्ञावसानोपान्तावयवोमुदितमना नरदेवः कृष्णदेवोनिजप्रां गणविहितमंडपे विरचितचित्रयथोचितवितानप्रसरास्तरणमुकु रमणिमालारम्भास्तम्भतोरणपताकाध्वजादिसमलङ्कृते निर्मित मखानुष्ठानसम्पादितकनकाभिषेककनककलशांचिते सभासम र्द्धसमृद्धिसाहित्यं सम्भालयितुं निजजनैः सहोपससर्प ॥ ८ ॥

ओर हमारे मन्त्रको बिल्वमंगल मुनिसों लेकें भगवानके राजमार्गको प्रचार करो ओर आसुरमतनकों दूर करो ॥ ६ ॥ एसी आज्ञा कर देव जेसें आये वेसें पीछें गये ओर आपनें व्यासतीर्थ की बातकों न मॉनके वो वृत्तान्त अपने शिष्य दामोदरदाससों कह्यो ॥ ७ ॥ या आडी दूसरे दिन सूर्योदयके समय राजा कृष्णदेव नित्य नियम करकें नवीन वस्त्र तथा आभूषणनकों धारण कर अपने मन्त्रीनकों तथा सब राजकीयवर्ग ओर सेवकवर्गकों बुलायकें नीति ओर प्रारब्धके जानवेवारे ज्योतिषीनके बताये अभिषेकके विजयमुहूर्त में पुरोहितसों प्रार्थना किये गये बडे प्रसन्न होयकें जो विचित्र चित्र चँदवा बिछौना कॉंच मणीनकी माला केलाके स्तम्भ तोरण पताका ध्वजा आ-दिसों शोभित ओर यज्ञानुष्ठानके अभिषेकके लियें सुवर्णके कलश जहॉं धरे हे एसे अपने अंगनमें विहित यज्ञमंडपमें ऋद्धि समृद्धि सब साहित्य देखवेकों

प्रविश्यात्र समवलोक्य निजानुमत विन्यासविशेषनिहिताशेष पदार्थसार्थशोभितसभासदनम् निजनिदेशकारिणम् सकलका र्य्यमुख्याधिकारिण प्रत्यादेशमाश्रावयत् ॥ ९ ॥ मच्चिकीर्षित सकलविद्वज्जनविजयिद्विजाग्रजनवरकनककुसुमाभिषेकाचार्य्यसम्राट्सिंहासनाधिरोहण दृष्टश्रुतानुभावस्यानुमहैकस्वभास्यापराधृष्यप्रभावस्य श्रीपुरुषोत्तमवदनानलावतारस्य सम्पादयितु समाहूयताम् वरिवस्यास्पदाव्यासतीर्थविद्यातीर्थादिमहान्तो नितान्तकान्तामदातविद्योदया सर्वेपि विद्वांसोबान्धवाश्च सामन्ता सैनिकनायका चतुरगिण्यश्चम्व कुजरतुरगरथमहाडोलशिविकादयोवाहनिवहाश्चिरक्तवीरनिकुरम्बानटनर्तकगंधर्वाप्सरस्समूहा सोमयाजियाजूकद्वादशगतन्त्रस्वतन्त्रबावदूकानिमहवरानदनचन्दनश्रीलक्ष्मणभट्टनन्दनाभिस्यंदनाय ॥ १० ॥

अपने मनुष्यनके संग गयो ॥ ८ ॥ वहाँ जायकें अपनी आज्ञानुसार सब पदार्थनकी तैयारीसो शोभित या स्थानको देखकें आज्ञाकारी मुख्य अधिकारीको आज्ञा सुनाई ॥ ९ ॥ जो सब विद्वाननके जीतवेवारे ब्राह्मणनमें श्रेष्ठ ब्राह्मणको सुवर्णाभिषेक करकें आचार्यसम्राट्के सिंहासनपे बैठावनो ये मेरी करवेकी इच्छा है सो जिनको प्रभाव सुन्यो और देख्यो है जो दयालुस्वभाव वारे और बड़े तेजस्वी हैं उन पुरुषोत्तमवदनावतारको करवेको विचार है सो सब तैयारी करवेके लिये अत्यन्तमनोहर सद्विद्याके उदयवारे महात्मा आचार्य व्यासतीर्थ विद्यातीर्थ आदिकों बुलायो और सब विद्वान भाई बंधु शूर सेनानायक चतुरंगिनी सेना हाथी घोडे रथ पालकी मियाने आदि सवारी विरक्त वीरनकी सेना नाचने गायने वारे नट गन्धर्व अप्सरा आदि इन सबनको तैयार करो सोमयज्ञ करवेवारे बारहो तन्त्रनमें स्वतन्त्र विद्वाननके आनन्द देवेवारे श्रीलक्ष्मणभट्टजीके पुत्रके पधरायवेकेलिये ॥ १० ॥

ततोवरमन्त्रिणा समुक्तजनामंत्रणाय दूतप्रवरनिकराविशिष्टाः समादिष्टपंचजनान् स्वल्पतरेण नेहसा समानयामासुः ॥११॥ समुपयातेष्वखिलेषु समागताचार्यान् यथोचिताभिमुखसर्पणवागमृततर्पणवरासनसमर्पणसमर्चनादिना प्रणतः प्रांजलिः प्राह ॥ १२ ॥ अथ सम्प्राप्तसमयः चिकीर्षिताभिषेकमहोत्सवस्य तत्र भवद्भिः सद्भिर्महद्भिर्बहुभिरनवद्यहृद्भिःशोभनविद्यावद्भिः विचार्य आचार्यपदप्राप्तये श्रीवल्लभाभिषेकाय कनकाभिषेकाय सद्धर्मनिकाय गोपनाय विहितकायाय विजितमायाय मदीयनारायणायादेशः प्रदीयताम् ॥ १३ ॥ एतद्विज्ञापनं निशम्य सर्वेपि वैकुंठप्रिया व्यासतीर्थादितीर्थवराश्च महेशद्धषीकेशाम्नायप्रचारका वैदिकाम्नायसंधारका निजसमाश्रितसमुद्धारका हर्षोत्कर्षा विकासितवदनवनरुहो निजाभीप्सितं पुंडरीकाक्षकृपाकटाक्षोपनतं बाढं बाढं विधीयतामित्याज्ञापयाम्बभूवुः १४

तब मुख्यमन्त्रीसों भेजे गये दूत जल्दीसों सबको बुलाय लाये ॥ ११ ॥ ओर सबके आवने पे आये भये आचार्यनके सामनें जायकें अपनी अमृतमयी वाणीसों तृप्त कर अच्छे आसननपें बैठायकें उनको पूजन कर नम्र होयकें हाथ जोडके राजा बोल्यो ॥ १२ ॥ के हमारे करवेकों अभिषेक महोत्सवको समय प्राप्त भयो हे वामें शुद्ध अन्तःकरणवारे अच्छीविद्यावारे सज्जन महात्मा आप सब विचार कें आचार्य पद प्राप्तिके लियें ओर सुवर्णाभिषेकके लियें सद्धर्मकी रक्षा करवेवारे इन्द्रियनके तथा मायाके जीतवेवारे हमारे नारायण श्रीवल्लभके लियें आज्ञा करिये ॥ १३ ॥ ये राजाकी विज्ञप्ति सुनकें सब सम्प्रदायके वैष्णवाचार्य अपने२ शिष्यनके उद्धार करवेवारे व्यासतीर्थादिक बडे हर्षसों भगवान्‌की कृपा कटाक्षसों प्राप्त अपने मनोरथकों बहोत अच्छो २ करिये ये आज्ञा देते भये॥ १४॥

अथ परेपि प्राप्तसमयानुरूप दैवेन विहितस्वरुपं निजसम यानातिविरूप सकलसत्समयानुरूपम् अचिन्त्यधिपणा स द्धिपणा परमनिपुणा. पवित्रचित्तचारित्रचणा विद्यागुरुस्वामि प्रभृतिगुरवोपि स्मार्त्ताचार्यवरा अन्तर्वाणिप्रवरा वृन्दारकवृन्द समर्चकनिकरा. सर्वेपि सम्यक् सम्यगवश्य विधेयं विधेयमिति कथयाञ्चक्रुः ॥१५॥अथ महीपतिना सुमतिना सुकृतिना पुरो धस पुरोधाय महान्तो बान्धवा मन्त्रिप्रवरा चतुरंगिण्यश्च शिविकादय सर्वेपि समभिसारिता श्रीमदाचार्यसमानयनाय ॥ १६॥ अथ ते सर्वेपि तदीयाश्रमबहिराजिरोपाजिरे सम्प्राप्ता वाद्यविशेषविज्ञापना कारितविज्ञापना निजप्रवेशाज्ञां प्रतीक्ष्य समानीताज्ञा समागतेषु प्रवरा विनीतवेषा केतुकमण्डलुनीता द्वारि प्रविश्य श्रीलक्ष्मणनन्दन निरीक्ष्य साष्टांग प्रणम्य रा जसमर्पितोपायन चरणोपान्तप्रान्ते समर्प्य करयुगल मुकुली

पीछें ओर भी बुद्धिमान् परम चतुर पवित्र चित्तवारे विद्वान प° चेदेवतानकी उपासना करवेवारे स्मार्त्ताचार्य विद्यागुरू प्रभृतिक सबनें कहोत अच्छो।२ अवश्य करिये ये कह्यो ॥ १५ ॥ तब पुण्यात्मा बुद्धिमान राजाने पुरोहितकों आगे कर बडे२भाई बेटे मन्त्री चतुरंगिणी सेना पालकी आदि सब साहित्य श्रीमदाचार्यजीके पधरायवेकेलियें भेजी ॥१६॥ सो वे सब जायकें आपके आश्रमके बाहेर ठाडे रहे यद्यपि बाजानसों ओर धूमधामसों सूचना होयगई तोभी अपने भीतर जायवेकी आज्ञाकी प्रतीक्षा करते भये तब उनमेंसों बुद्धिमान् नम्र वेषवारेनकों केतुकमण्डलु भीतर ले गये वे सब श्रीलक्ष्मणनन्दनके दर्शन कर साष्टांग प्रणाम कर राजाकी करी भई भेट चरणकमलनके पास धरकें हाथ जोडकें सभामें पधारवेकेलियें प्यारी

कृत्य सभासदने समुपधारणाय राजप्रार्थनां प्रियवाचा व्याचख्युः ॥ १७ ॥ ततः श्रीमदार्यनयननलिननिष्पन्दाभिज्ञाताकूतसमुद्भूताज्ञां विज्ञाय दामोदरः सम्यगिति तेभ्यः श्रावयित्वा निजेभ्योऽभिगमनाभिरूपं वेषादि धापयित्वा निवृत्तमाध्याह्निकाः शिविकायामार्यपादुकां चतुःपादिकां निधाय श्रीमदार्यं पुरोधाय राजवाहिनीपरिवृता अमरवाहिनीमिव नगरनीरनिधिं पूरेण पूरयंतः ढक्कानकमुरजमर्दलझर्झरापणगोमुखनिस्वानभांकारकाहलगर्जितेन नटनर्तकगन्धर्वकुतूहलाकर्षितनरनारीबालकुमारनिकरकलकलकोलाहलेन सकलजनं प्रबोधयंतः भाविन्यभिषेकमहोत्सवे निमन्त्रयद्भिः सुरपरिवृढान् कुसुमनिचयासाराक्षते राजद्वारं सुशोभयंतः समाजग्मुः ॥ १८ ॥ अथ नरेश्वरो विविधनिनादपूरपांथिकाभिज्ञापितसमीपागमनसंभावनाय सह निजजनैः समीपमुपेत्य साष्टांगप्रणामोपढौकि

बोलीसों राजाकी प्रार्थनाकों करी ॥ १७ ॥ तब श्रीमदाचार्यके कमलनेत्रनकेओर देखवेसों आपकी आज्ञा समझकें दामोदर अच्छो ठीक है ये उनकों सुनायकें मध्याह्नसों निवृत्त होयकें अपने मनुष्यनकों तैयार करकें पालकीमें चतुःपादिकाके ऊपर पादुका पधरायकें श्रीमदाचार्यकों आगें पधरायकें राजसेनाके सहित ढोल नगाड़ा मृदंग मर्दल झाँझ गोमुख तुरही नरसिंहा आदि बाजानकी गर्जनासों नट नर्तक गन्धर्वनके तमासानसों इकठे भये स्त्री पुरुष बालकनके कलकल कोलाहलशब्दसों सब मनुष्यनकों जनावते होयवेवारे अभिषेकउत्सवमें लोगनकों निमन्त्रण करते सुंदर पुष्पनकी वृष्टि करते राजद्वारमें पहुँचे ॥ १८ ॥ राजानेंबी विविधबाजानकी ध्वनिसों पासमें आये जानकें अपने मनुष्यनके संग पासमें जायकें साष्टांग प्रणाम ओर

अथ परेपि प्राप्तसमयानुरूप दैवेन विहितस्वरुप निजसम यानतिविरूप सकलसत्समयानुरूपम् अचिन्त्याधिषणाः स द्धिषणा परमनिपुणा. पवित्रचित्तचारित्रत्वणा विद्यागुरुस्वामि प्रभृतिगुरवोपि स्मार्ताचार्यवरा अन्तर्वाणिप्रवरा वृन्दारकवृन्द समर्चकनिकरा. सर्वेपि सम्यक् सम्यगवश्य विधेयं विधेयमिति कथयाञ्चक्रु ॥ १५॥ अथ महीपतिना सुमतिना सुकृतिना पुरो धस पुरोधाय महान्तो बान्धवा मन्त्रिप्रवरा चतुरंगिण्यश्चम्व. शिबिकादय' सर्वेपि समभिसारिता श्रीमदाचार्यसमानयनाय ॥ १६॥ अथ ते सर्वेपि तदीयाश्रमबहिराजिरोपाजिरे सम्प्राप्ता वाद्यविशेषविज्ञापना कारितविज्ञापना निजप्रवेशाज्ञां प्रतीक्ष्य समानीताज्ञा समागतेपु प्रवरा विनीतवेषा केतुकमडलुनीता द्वारि प्रविश्य श्रीलक्ष्मणनन्दन निरीक्ष्य साष्टांग प्रणम्य रा जसमर्पितोपायन चरणोपान्तप्रान्ते समर्प्य करयुगलं मुकली

पीछें ओर धी बुद्धिमान् परम चतुर पवित्र चित्तवारे विद्वान् पं- चेदेधलानकी उपासना करवेवारे स्मार्ताचार्य विद्यागुरु प्रभृतिक सबनें यहोत अच्छो २ अवश्य करिये मे कयो ॥ १५ ॥ तब पुण्यात्मा बुद्धिमान् राजाने पुरोहितकों आगे कर बडे भाई बेटे मन्त्री चतुरंगिणी सेना पालकी आदि सब साहित्य श्रीमदाचार्यजीके पधरायबेकेलियें भेजी ॥ १६॥ सो वे सब जायकें आपके आश्रमके बाहेर ठाडे रहे यद्यपि बाजानसों ओर धूमधामसों सूचना होयगई तोभी अपने भीतर जायवेकी आज्ञाकी प्रतीक्षा करते भये तब उनमेंसों बुद्धिमान् नम्र वेषवारेनकों केतुकमडलु भीतर ले गये वे सब श्रीलक्ष्मणनन्दनके दर्शन कर साष्टाग प्रणाम कर राजाकी करी भई भेट चरणकमलनके पास धरकें हाथ जोडकें सभामें पधारवेकेलियें प्यारी

कृत्य सभासदने समुपधारणाय राजप्रार्थनां प्रियवाचा व्याच ख्युः ॥ १७ ॥ ततः श्रीमदार्यनयननलिननिष्पन्दाभिज्ञाता कृतसमुद्भूताज्ञां विज्ञाय दामोदरः सम्यगिति तेभ्यः श्रावयि त्वा निजेभ्योऽभिगमनाभिरूपं वेषादि धापयित्वा निवृत्तमाध्या ह्निकाः शिबिकायामार्यपादुकां चतुःपादिकां निधाय श्रीम दार्यं पुरोधाय राजवाहिनीपरिवृता अमरवाहिनीमिव नगरनी रनिधिं पूरेण पूरयंतः ढक्कानकमुरजमर्दलझर्झरापणगोमुखनि स्वानभांकारकाहलगर्जितेन नटनर्तकगन्धर्वकुतूहलाकर्षितनर नारीबालकुमारनिकरकलकलकोलाहलेन सकलजनं प्रबोधयं तः भाविन्यभिषेकमहोत्सवे निमन्त्रयद्भिः सुरपरिवृढान् कुसुम निचयासाराक्षते राजद्वारं सुशोभयंतः समाजग्मुः ॥ १८ ॥ अथ नरेश्वरो विविधनिनादपूरपांथिकाभिज्ञापितसमीपागमनसं भावनाय सह निजजनैः समीपमुपेत्य साष्टांगप्रणामोपढौकि

बोलीसों राजाकी प्रार्थनाकों करी ॥ १७ ॥ तब श्रीमदाचार्यके कमलने-त्रनकेओर देखवेसों आपकी आज्ञा समझकें दामोदर अच्छो ठीक है ये उन-कों सुनायकें मध्याह्नसों निवृत्त होयकें अपने मनुष्यनकों तैयार करकें पाल-कीमें चतुःपादिकाके ऊपर पादुका पधरायकें श्रीमदाचार्यकों आगें पधरायकें राजसेनाके सहित ढोल नगाड़ा मृदंग मर्दल झाँझ गोमुख तुरही नरसिंहा आदि बाजानकी गर्जनासों नट नर्तक गन्धर्वनके तमासानसों इकट्ठे भये स्त्री पुरुष बालकनके कलकल कोलाहलशब्दसों सब मनुष्यनकों जनावते होयवेवारे अभिषेकउत्सवमें लोगनकों निमन्त्रण करते सुंदर पुष्पनकी वृष्टि करते राजद्वारमें पहुँचे ॥ १८ ॥ राजानेंबी विविधबाजानकी ध्वनिसों पासमें आये जानकें अपने मनुष्यनके संग पासमें जायकें साष्टांग प्रणाम और भेट करकें अपने हाथको आपके श्रीहस्तको अवलम्ब करायकें किञ्चित्

तसम्भावनाभावितभारतीभेगेण सम्भावनां चरन् दत्तनिजहस्त हस्तावलम्बन सस्मितप्रसादालापविलम्बितहलनेन संजवने प्रविश्य विद्वद्भिर्नमस्कृताय तान् नमस्कुर्वाणाय वरासन प्रदाय विश्रामयामास ॥ १९ ॥ अथाह वचन विद' सदसि शम्भुभट्टोऽभवत् खिल यदुत बाधितं गदत योभिऽ योगेषु न ॥ यतोतिरभसोदिते स्खलितमस्ति नैवाहसे तथापि विनिरूपित पुनरित समाधास्यते ॥ २० ॥ रुत बुधजनैर्नतैर्न खलु वाक्पतेरग्रतोऽमरोपि यदि साम्प्रत किं सु परो वदेत्प्राकृत ॥ उरुक्रमपदक्रमे कथय तुल्यता विक्र म करोति ननु दर्दुरो बहुरटन्नटन् पल्वले ॥ २१ ॥ उवाच व चन भवत्करुणया स शम्भुर्विद सभाभिभवसम्भवो भवतु मा पराधाय न ॥यतो जनसुबुद्धये निगमसारसंसिद्धये पुरैव मुनिना कृतो मिहिरसेविना योगिना ॥ २२ ॥ पुनर्बुधवरा जगु कथ

हास्यपूर्वक बात करते सभामें पधरायके नमस्कार किये गये विद्वाननको नमस्कार करने आपको अच्छे आसनपे विराजमान कराये ॥ १९ ॥ पीछे विद्वाननकी सभामें शम्भुभट्ट बोले जो कलह समाधान करवेमें जो कछू रह गयो होय अथवा अधिक भयो होय सो कहो क्यों के अतिशीघ्रतामें जो कछु अशुद्ध होय जाय सो पापके लिये नहीं होयहे सो अब फिर आपलोग कहिये फिर समाधान करेंगे ॥ २० ॥ तब नम्र होयके विद्वाननने कह्यो जो वाक्पतिके सामने स्वर्गवासी नहीं बोलसकेहे और प्राकृत मनुष्य तो कहा बोलेंगे विष्णुका गतिको कीचम बहुत शब्द करतो भयो चलनो मेंडूक कहा पावेहे ॥२१॥ फिर शम्भुभट्टने कह्यो जो सभामें तिरस्कारको सभय रहे है सो कभी निरस्कार हायगयो होयतो क्षमा करनो पहलेभी जनक-याज्ञवल्क्यके सम्वादम भयो है ॥ २२ ॥ तब विद्वाननने कह्यो के सारी प्रनि-

कयोर्मिथोजल्पतोर्भवेत्परुषभाषणं हितकृते न मिथ्यापि वाक् ॥ मणेरिव विशुद्धये भवति शाणसंघर्षणं मलापहामितोपरं खलु विलेपनं स्नेहतः ॥ २३ ॥ इत्थं सौहृदसंलापकलापं कुर्वतां पुरः नरदेवः कृष्णदेवःपुरोधागणकनिवेदिते सद्गुणसमये साक्षाद्विष्णुरूपस्य विष्णुरूपातिथेर्वैष्णवीं सपर्यां विधातुं वैष्णवोद्धाराय वैष्णवाचार्यतामापादयितुं वैष्णवाचार्यानुमत्या अन्येषामपि सम्मत्या श्रीमदार्यं समुत्थाप्य कृतमंडले धौतकलधौतकलितपट्टोपरि ऋत्विगुपाध्यायमहीध्रसन्निधिं विधाय सदस्यैःपरितो विराजमाने विराजमानमकरोत् ॥२४ ॥ ततः नूत्ना राजविभूतीर्दैवविभूतीर्दैववर्चोभ्योभूदेवेभ्योवैष्णवेभ्यः शम्भ्वादिभट्टेभ्योनरदेवः कृष्णदेवः समर्प्य आचार्यार्चनं कर्तुं निजपुरोधसमुपाध्यायं चानुज्ञाप्य संकल्पादिपुरस्सरं पाद्यार्घ्याचमनादि

वादीके परस्पर भाषणमें कठोर वचन हितकेलिये होय हे मणिको सानमें घिसनो मल दूर करकें ताकी शुद्धिकेलियें होय हे पीछें स्नेहसों लेप होयहे ॥ २३ ॥ या प्रकार मित्रतासों बात करते विद्वाननके समक्ष राजा कृष्णदेव पुरोहित ज्योतिषीनके बताये अच्छे समयमें विष्णुरूप अतिथिकी वैष्णवी पूजा करवेकेलियें वैष्णवनके उद्धारके लियें वैष्णवाचार्यताको सिद्ध करवेकें लियें वैष्णव आचार्यनकी आज्ञासों दूसरेनकीबी सम्मतिसों श्रीमदाचार्यजीकों चौकके ऊपर सुवर्णकलित पट्टाके ऊपर विराजमान करते भये ओर ऋत्विज उपाध्याय राजा सभ्य इन सबनकोंबी पासमें बेठावते भये ॥ २४ ॥ ओर नवीन राजविभूति छत्र चमर देवविभूति घंटा शंख आदि देवता सरीखे वैष्णव ब्राह्मण शम्भुभट्टप्रभृतिनकों देकें राजा कृष्णदेवनें आचार्यके पूजन करवेके लियें अपने पुरोहित उपाध्यायकों कहकें संकल्प आदि पहलें करकें यथाविधि विधानसों पाद्य अर्घ्य आचमन आदिसों पूजा कर पवित्रतीर्थनके जल-

ना समर्च्य यथाविधिविधानेन पूतैस्तीर्थसमुद्भूतैर्मन्त्रपूतैर्वैदिकै स्वर्णघर्मादिमन्त्रैर्महाभिषेकाचार्यसाम्राज्याभिषेकमन्त्रैश्च ऋत्विग्भि पुरोधसा साकमभ्यषिंचत् ॥ २५ ॥ अथ पट्टान्तरे समुपविष्टान् निजेष्टान् श्रीमदाचार्यान् निजशिष्यै गुर्जरगोविन्दरामसुकुन्दरामशंकरानदश्यामानन्दै समानीतजलै शम्भुभट्ट संस्नाप्य वस्त्रान्तरेण सम्प्रोक्ष्य नूतनकौपीनकटिवस्त्रोत्तरीययज्ञसूत्रतुलसीकाष्ठस्रक्मृगचर्म्मादि धापयित्वा काश्मीरतिलकगोपीचन्दनपण्मुद्रालङ्कृतान् सम्भृतपादुकान् कनकसिंहासनाग्रे समानमानयत ॥ २६ ॥ अथ व्यासतीर्थादय सर्वेपि वैष्णवाचार्या महीभृता पुरोधसा स्वोपाध्यायेन पुरो नीता तेषामन्येषामाचार्याणां पंडितानां वैदिकानां देवोपासकानां सम्मत्या राजसिंहेन श्रीमदाचार्या सम्भृतकौशेयाम्बरमहासने सिंहासने समुपवेशिता ततोवशिष्टपूजन विदधन् राजदेवविभूत्या

सों वैदिक स्वर्णघर्मादिमन्त्रनसों ऋत्विजपुरोहितके संग साम्राज्य महा अभिषेक कियो ॥ २५ ॥ पीछे दूसरे पट्टाके ऊपर विराजमान अपने इष्ट श्री मदाचार्यजीको निजशिष्य गुर्जर गोविन्दराम शंकरानन्द श्यामानन्दके लाये जलसों शम्भुभट्टन स्नान करायके दूसरे वस्त्रसों पोछके नवीन कोपीन कटिवस्त्र उपरणा यज्ञोपवीत तुलसीकाष्ठकी दो कंठी मृगचर्म आदि धरायके तिलक गोपीचन्दनकी छे मुद्रानसों शोभित पादुकानकों धारण किये श्रीमदाचार्यकों बडे मानसों सुवर्णके सिंहासनके पास पधराये॥ २६ ॥ और व्यासतीर्थादि सब वैष्णवाचार्यनकों आगे बुलायके उनकी तथा और आचार्य पंडित वैदिकनकी सम्मतिसों राजसिंह कृष्णदेवने केशरी-वस्त्रकी बडी गादीमें सिंहासनके ऊपर पधरायके और अवशिष्ट पूजन करने

संयोजिताः ॥ २७ ॥ तत्र शम्भुभट्टः सितातपवारणं हरिभट्टः सूर्याभिमुखवारणं शंकरानन्दश्यामानन्दौ चामरे स्वभूस्वयम्भ्वाचार्य्यौ मायूरपिच्छगुच्छे केतुकमंडलू सौवर्णदंडे गोविन्दराममुकुन्दरामौ राजतलकुटे रामभट्टकेशवभट्टौ राजतशंखचक्रदंडे अन्ये सात्वतवैष्णवाः घंटाझिल्लरीगोमुखादिवादित्राणि जगृहुः ॥ २८ ॥ ततस्तिलकं माल्यमाले धूपं दीपं नैवेद्यम् आचमनीयं मुखवासं दर्शयित्वा वहुसुवर्णनिचयो दक्षिणापर्यायेणोपढौकिततयाग्रे निवेशितः तदवसरे विज्ञापितम् अभिषेकेऽर्पितं सुवर्णपात्रादीन्यपि श्रीमद्भ्यो मया निवेदितानि स्वीकुर्वन्तु ॥ २९ ॥ तदा श्रीमदाचार्यनयनाभिनीताकूतं निजहृद्यनुभूतं सुन्दरया गिरा दामोदरः सभासदः श्रावयन् अवनिवृद्धश्रवसं कृष्णदेवं सम्बोध्य नैतच्छ्रीमदाचार्य्यैः

राजदेवविभूतीनकों भेट कियो ॥ २७ ॥ तामें शम्भुभट्टनें सुपेद छत्र लियो हरिभट्टनें सूर्यमुखीकों लियो शंकरानन्दश्यामानन्दनें चामर लिये स्वभूस्वयम्भूनें मूर्छल लिये केतुकमंडलुनें सुवर्णके छडीनकों लियो गोविन्दराम मुकुन्दरामनें चाँदीकी छडी लीनी रामभट्ट केशवभट्टनें चाँदीके शंखचक्रके दंडानकों लियो ओर सब वैष्णवननें घंटा झांझ गोमुख आदि बाजानकों लियो ॥ २८ ॥ पीछें राजानें तिलक करकें पुष्पमाला धरायकें धूप दीप नैवेद्य आचमन मुखवास दिखायकें दक्षिणाके बदलेमें बहोत सुवर्णकी राशि भेटमें आगे धरी ओर ताही समय विज्ञप्ति करी जो अभिषेकमें आये सब पदार्थ ओर सुवर्णके पात्रबी आपके लियें मेनें निवेदन किये हें सो आप स्वीकारकरें ॥ २९ ॥ तब श्रीमदाचार्यके नेत्रकमलनके ओर देखकें आपको अभिप्राय समझकें अपनें हृदयमें अनुभव करकें सुन्दर वाणीसों दामोदर सब सभासदनको सुनावतें पृथिवीपति कृष्णदेवकों सम्बोधन करकें ये बोले के

कनकस्नानीयकनकामत्रादिस्पर्शितमपि स्नानाम्बुवत् अस्पर्शनीयम् यत प्रपन्नजनमन्तरान्येनार्पितमुपढौकितमपि न गृह्यत इति गृहीतानियमा निर्वर्तनाय किमपि न गृह्यत इत्याह ॥ ३० ॥ इत्येव पठितवचन निशम्य विमनस्केऽवनीशे देयमेतेभ्यो दूराशात समागतेभ्यो सिद्दिताशापाशेन चिरतरनिवद्धेभ्य स्नानीयमुपढौकितं चेति पार्षद्ये स्थितो दामोदर एव पुनर्निजगाद ॥२१॥ अथ धरणिधवेन निजोपाध्यायपुरोधोभ्यां सम्म न्त्र्य यथोचितविभाग सविभज्य तद् द्रव्य व्यासतीर्थाद्याचार्यशिष्येभ्य समागतेभ्यो वैदिकेभ्यो विद्वद्भ्यो विप्रेभ्यो कूपारामकन्यादानादिधर्म्मकार्यार्थिभ्यो देवालयाधिकारिभ्य कारागारादिनिरुद्धेभ्योरुग्णेभ्योऽधपग्वादिभ्यो दीनेभ्यश्चादापि ते व्यासतीर्थाद्याचार्या विष्णुस्वामिसम्प्रदायिनोहरिस्वामिशेषस्वामिनोर्हस्ताभ्याम्

सुवर्णाभिषेकके सुवर्णके पात्र स्नानके जलके समान श्रीमदाचार्यके स्पर्श करवेके योग्य नहीं हैं ओर अपनी शरणागतिके विना दूसरेकी भेटकोंभी नहीं ग्रहण करनो एसे नियमकों ग्रहण कियो है सो ताके पालवेकें लिये कछूभी नहीं ग्रहण करते ॥ ३० ॥ या वचनकों सुनकें राजाके उदास होयवे पे दूरदेशनसों आये आशारूपी रस्सीनसों बहुतदिनानसों बँधे भये इन विद्वाननकों मे अभिषेकके भेटको द्रव्य देवेके योग्य हे ये पार्षदपनेमें ठाडे भये दामोदरनें फिर थी कह्यो ॥ ३१ ॥ तब पृथिवीपतिनें अपने उपाध्याय पुरोहितसों सलाह करकें या द्रव्यको यथोचित विभाग करकें आये भये व्यासतीर्थादिक आचार्यनके शिष्यनकों वैदिकनको विद्वान्ब्राह्मणनकों कूप बगीचा कन्यादानादिक धर्म्मकार्यके लिये जो आये हे उनकों मंदिरनके अधिकारीनकों कैदीनको रोगी अन्ध लँगडे दीन इनसबनकों दिवायो ओर व्यासतीर्थादिक आचार्यननें विष्णुस्वामीसम्प्रदायके हरिस्वामी शेष-

आचार्यसाम्राज्यतिलकं कारयित्वा स्वयमप्यकुर्वन् सम्राजा चा
कारयन् ॥३२॥ अथ श्रीमदाचार्येभ्यः श्रीवेदव्यासविष्णुस्वा
मिसम्प्रदायसमुद्धारसंभृतश्रीपुरुषोत्तमवदनावतारसर्वाम्नायसंचा
रवैष्णवाम्नायप्राचुर्यप्रकारश्रीबिल्वमंगलार्पितसम्राजासनाखंड
भूमंडलाचार्य्यवर्यजगद्गुरुमहाप्रभुश्रीमदाचार्य इति विरदावलि
रूपवालिस्तैः कृता ॥ ३३ ॥ ततो राज्ञा सकुटुम्बेन तथान्यैरपि
स्वकीयैः सह प्रपत्तिरर्थिता आचार्यैश्च तेभ्यः कृतविज्ञापनेभ्यः
शरणाष्टाक्षरं दत्वा हरिगुरुसमर्पिता तुलसीकाष्टमाला अर्पिता
ततस्तैः सह धराधिपेन स्वर्णपात्रिकासम्भृताः सुवर्णसतसहस्रमुद्रा
उपढौकिते निवेदिताः ततः श्रीमद्गुरुपादावनेजनं संहृतविविध
जनजानिसमुद्वेजनं विहितसहितांगप्रपत्तिसम्पत्तिसम्पादकं संपा
दयितुं सिंहासनाग्रे चतुष्पादिकां निधाय तदुपरि गुरुचरण
पादुके स्थापयित्वा ततः चरणं पवित्रमित्यादिमन्त्रैः प्रक्षाल
नपुरस्सरं सम्पूज्य तत्तीर्थं पात्रे गृहीत्वा नरदेवकृष्णदेवेन स

स्वामीजीके हाथसों आचार्यसाम्राज्यको तिलक आपके करायकें आपनेंबी कियो ओर राजासोंबी करायो ॥ ३२ ॥ ओर श्रीमदाचार्यके लियें 'श्रीमद्वेदव्यास' इत्यादि ऊपरकी लिखी पदवीकों दियो ॥ ३३ ॥ पीछें कुटुम्ब ओर दूसरे अपने मनुष्यनके संग राजानें शिष्य होयवेकी प्रार्थना करी तब आपनें प्रार्थना करवेवारे उनसबनकों शरणाष्टाक्षर मन्त्र देकें प्रसादी तुलसीकाष्टकी माला दीनी तब उनके संग राजानें सुवर्णके थारमें धरके सात हजार असरफी भेट कीनी ओर अनेक जन्मनके पाप दूर करवेवारे शरणहोयवेको एक अंग एसे चरणामृत करवेके लियें सिंहासनके आगें चौकी धरकें ताके ऊपर गुरूकी चरणपादुकानको स्थापन करकें 'चरणम्पवित्रम्'इत्यादि मन्त्रनसों स्नान करवायकें पजन करकें वो तीर्थ पात्रमें धरकें

कनकस्नानीयकनकामत्रादिस्पर्शितमपि स्नानाम्बुवत् अस्पर्श नीयम् यत प्रपन्नजनमन्तरान्येनार्पितमुपढौकितमपि न गृह्यत इति गृहीतनियमा निर्वर्तनाय किमपि न गृह्यत इत्याह ॥ ३० ॥ इत्येव पठितवचनं निशम्य विमनस्केऽवनीशे देयमेतेभ्यो दूराशात समागतेभ्यो विदिताशापाशेन चिरतरनिबद्धेभ्य स्नानीयमुपढौकितं चेति पार्षद्ये स्थितो दामोदर एव पुनर्निजगाद ॥३१॥ अथ धरणिधवेन निजोपाध्यायपुरोधोभ्यां सम्मन्त्र्य यथोचितविभाग सविभज्य तद् द्रव्य व्यासतीर्थाद्याचार्यशिष्येभ्य समागतेभ्यो वैदिकेभ्यो विद्वद्भ्यो विप्रेभ्यो कूपारामकन्यादानादिधर्म्मकार्यार्थिभ्यो देवालयाधिकारिभ्य कारागारादिनिरुद्धेभ्योरुग्णेभ्योऽपपग्वादिभ्यो दीनेभ्यश्चादापि ते व्यासतीर्थाद्याचार्यो विष्णुस्वामिसम्प्रदायिनोर्हरिस्वामिशेषस्वामिनोर्हस्ताभ्याम्

सुवर्णाभिषेकके सुवर्णके पात्र स्नानके जलके समान श्रीमदाचार्यके स्पर्श करवेके योग्य नहीं हैं ओर अपनी शरणागतिके विना दूसरेकी भेटकोंभी नहीं ग्रहण करनो एसे नियमकों ग्रहण कियो हे सो ताके पालवेकें लियें कछूभी नहीं ग्रहण करते ॥ ३० ॥ या वचनकों सुनकें राजाके उदास होयवे पे दूरदेशनसों आये आशारूपी रस्सीनसों बहुतदिनानसों बँधे भये इन विद्वाननकों ये अभिषेकके भेटको द्रव्य देवेके योग्य हे ये पार्षदपनेंमें ठाडे भये दामोदरनें फिर भी कह्यो ॥ ३१ ॥ तब पृथिवीपतिनें अपने उपाध्याय पुरोहितसों सलाह करकें वा द्रव्यको यथोचित विभाग करकें आये भये व्यासतीर्थादिक आचार्यनके शिष्यनकों वैदिकनको विद्वान्ब्राह्मणनकों कूप बगीचा कन्यादानादिक धर्म्मकार्यके लियें जो आये हे उनकों मंदिरनके अधिकारीनको कैदीनकों रोगी अन्ध लँगडे दीन इनसबनकों दियो ओर व्यासतीर्थादिक आचार्यननें विष्णुस्वामीसम्प्रदायके हरिस्वामी शेष-

र्यैता साधिता तस्याचार्यशिरोमणेश्चरणयोः पुष्पाञ्जलिर्दीय
ते ॥ ३८॥ उपाध्यायः–कुम्भोद्भूतप्रपूतपूतहरितश्चांध्रद्विजाते
रथो भारद्वाजमुनेश्च तित्तिरिरुताम्नायस्य सौभाग्यभूः ॥ वेदव्या
समुनेर्मतस्य भृतये प्राप्तः सदाचार्यतां यज्ञर्षेः कुलमंडनो
विजयतां श्रीलक्ष्मणस्यात्मजः ॥ ३९ ॥ अन्ये आचार्य्याः-
ब्रह्मात्मैक्यमतं तदात्मकतया सद्वादसंस्थापनं यद्वर्णाश्रमसेव
नाभिमुखतो विष्णोः सदा सेवनम्॥तन्नाम्नोप्युपदेशनं स्वशरणप्रा
प्ताय सर्वात्मने एवं यस्य मतं मतं स विदुषां तत्केन नो म
न्यते ॥ ४० ॥ अन्यदेवोपासकाः–सर्वे येन सुराः परेशवपुषः
कल्पप्रभेदाद्भुताः सत्यं येन समस्तमेव गदितं सत्यात्मना साध
नम्॥भक्तिर्येन विमुक्तयेऽपि पठिता लोके विरक्तिर्धृता कस्यायं

भग्न वैष्णवनकों उद्धार करकें वेदमार्गके प्रचार करवेके लियें जिननें आचार्य पद धारण कियो हे उन आचार्यशिरोमणीके चरणकमलनमें हम पुष्पाञ्जलि दें हें ॥ ३८॥ उपाध्याय–अगस्त्य ऋषिसों पवित्र करी गई दक्षिणदिशाके भारद्वाजमुनिके आन्ध्र ब्रह्मणनके तैत्तिरीयशाखाके सौभाग्यके स्थान जो हें और वेदव्यासमुनिके मतके रक्षाके लियें आचार्यपदको जिननें स्वीकार कियो हे वे यज्ञर्षिकुलकेभूषण श्रीलक्ष्मणभट्टजीके पुत्र सबसों श्रेष्ठ होंय ॥ ३९ ॥ दूसरेआचार्य–ब्रह्मजीवकीएकता ब्रह्मात्मक जगत् सद्वादस्थापन वर्णाश्रमधर्म पालते विष्णुकी सदा सेवा उनके नामको उपदेश एसो जिनको मत हे उनको कौन नहीं मानें हें ॥ ४० ॥ और देवतानकी पूजाकरवेवारे सब देवता कल्पभेदसों परत्माके शरीर हें ये जगत सत्य हे मुक्तिके लियें भक्ति हे ये उपदेश करवेवारे संसारमें विरक्तिकेधारण करवेवारे ये आचार्य किनके मतमें पूज्य नहीं

कुटुम्बेन सह निजजनैः सह प्रजाभिः पीत्वा शिरसि धारितम् ॥ ३४ ॥ ततो हस्तप्रक्षालनं विधायाचशिष्टार्चनमारब्धम् । तत्र हरिस्तोत्रेण नीराजनं गुरुस्तोत्रेण पुष्पाञ्जलिं विधाय सर्वे स्तुतिमचकलन् ॥ ३५ ॥ तत्र राजा—वन्दे श्रीपुरुषोत्तमस्य सुहृदं वन्दे पुरारेर्मतं वन्दे नारदकृष्णयोरभिमतं सदर्शयन्तं सताम् ॥ वन्दे विष्णुमुनेर्गुरुक्रमगताचार्यत्वमासादितं वन्दे देवहिताय सम्भृततनुं श्रीवल्लभम् वल्लभम् ॥ ३६ ॥ आचार्य श्रीमत्पुरुषोत्तमात्पुरभिदो यो नारदाद्व्यासतो विष्णुस्वामिसुबिल्वमंगलमुखाल्लब्ध्वा पदं लक्ष्मणात् ॥ आचार्योसि निसर्गतो हरिमताचार्यांतितायाधुना तस्याचार्यपदार्पणं विजयतां पूष्ण प्रदीपं यथा ॥ ३७ ॥ पुरोधा—कृत्वा विज्ञजयं सभासु बहुधा सम्भर्त्स्य पापण्डिनः प्रोद्धृत्यैव च वैष्णवान् परजितान् शोकाब्धिमग्नानपि ॥ येनाम्नायपथप्रचारणविधेराचा

कुटुम्ब और निजजनप्रजाके संग राजा कृष्णदेवनें पानकर मस्तकमें धारण कियो ॥ ३४ ॥ पीछें हाथ धोयकें बाकीके पूजनको प्रारम्भ कियो तामें हरिस्तोत्रसों नीराजन गुरुस्तोत्रसों पुष्पाञ्जलि करके सब स्तुति करवे लगे ॥ ३५ ॥ राजा—श्रीपुरुषोत्तमके सखा महादेव नारद व्यास इनके अभिमत मतकों सज्जननकों दिखायवेवारे विष्णुस्वामीसों आईभई गुरुपरम्परा तथा आचार्यपद्वीकों धारण करवेवारे दैवीजीवनके उद्धारकेलियें शरीरको धारण करवेवारे सबके प्यारे श्रीवल्लभकों मैं प्रणाम करूं हूं ॥ ३६ ॥ आचार्य-जो श्रीपुरुषोत्तम महादेव नारद व्यास विष्णुस्वामी बिल्वमंगल लक्ष्मण एसी परम्परासों आये पदको पायकें स्वभावहीसों आचार्य हो उनको या समयको आचार्यपद सूर्यकें प्रकाशके समान प्रकाश होय ॥ ३७ ॥ पुरोहित-सभानमें विद्वाननकों जय करके अनेक प्रकारसों पाखंडीनकों तिरस्कार करकें दुःखेनमें जीन शोकसमुद्रमें

भ्यासप्रवीणतागमततो नैपुण्यतात्यद्भुता ॥ व्यासार्यस्य मतो हरेः प्रियतयाप्याचार्यतायाः पदं के के सन्ति गुणा नृभाव करणे के तेनु लोकोत्तराः ॥४५॥ प्रजाः—जातो योह्यनले तटे ननु महानद्याः शमिद्रोस्तले जेता दिग्जयिनां विदां दिविषदां भव्यप्रभावोदयः ॥ स्तव्यः सर्वगुणैर्जगद्धितकृते योऽत्राव तीर्णो हरिः श्रीमल्लक्ष्मणनन्दनो विजयतां श्रीयल्लमायाः सुतः ॥ ४६ ॥ स्वकीयाः—किं क्लेशाय प्रजल्पनेन विदुषां किं कर्मभिः स्वर्गदैः किं विज्ञानहरेण चात्र भवति ज्ञानेन भक्तिद्विषा॥ किं संसारसुखैर्विषैरपि हरेः सेवा कथा यत्र नो श्रीमद्वल्लभसंश्रयोपि न तमोरूपं तमर्थं स्तुमः ॥ ४७ ॥ तूर्याणां निनदे तते जयजयध्वन्या च तौर्यत्रिके लोके जाग्रति शोकमूलविगमे हर्षप्रकर्षोदये ॥ आचार्यैर्विहितं निवेश्य तिलकं स्वाचार्य सिंहासने सर्वाचार्यशिरोमणेर्विजयतां श्रीवल्लभाधीशितुः॥४८॥

णता भगवान्के प्रीतिसों आचार्य पद इत्यादि कोन कोन गुण संसारभरसों उत्तम नहीं हें ॥ ४५ ॥ प्रजा—जो महानदके पास अग्निमें शमीवृक्षके तरे उत्पन्न भये हे दिग्विजयी विद्वाननके जीतवेवारे देवतानके मध्यमें बडी प्रभावारे सब गुणनसों स्तुतिकरवेके योग्य जो साक्षात् भगवान्ही अवतीर्ण भये हें एसे श्रीमान् लक्ष्मणनन्दन श्रीयल्लमाजीके पुत्र विजयकों पावें ॥४६॥ अपनेमनुष्य—विद्वाननको वाद वृथा क्लेशके लिये हे स्वर्गके देवेवारे कर्मनसोंवी कहा हे विज्ञानके हरवेवारे भक्तिके द्वेषीज्ञानसोंवी कहा हे विषरूपसंसारके सुखसों कहा हे जो भगवान्की सेवा ओर कथा ओर श्रीवल्लभको आश्रय न भयो ॥ ४७ ॥ नगाडानकी चोटके संग जय जयकी ध्वनि होते बाजानके वजते सब लोगनके जागते शोकके मूलको दूर करते बडे हर्षके उदयमें आचार्यननें सिंहासनपे विराजमानकरकें जो तिलक कियो वो सर्वाचार्यशिरो

नमते मतो विजयतामाचार्यचूडामणि ॥४१॥ विद्वांस -न्यायं का णभुजीमपीपठद्य यो गौतमीं चाभ्यसत्यस्तौतातिकभारतीं स मतरद्वैयासकीं चाद्दत ।योभौजंगमभापितामचकलद्य कापिलीं चालपत्सर्वंचार्य्यशिरोमणिर्विजयतां बौद्धादिविध्वंसन ॥४२॥ वैदिका -यो वेदान्निखिलान् पपाठ सरहस्यान् वैदिकान्नागमान् वेदव्यासमुनेर्मते समचरज्जिग्ये परांस्तद्द्विप ॥ श्रौतस्मार्तप थप्रचारणकृते नद्धोहरेर्भक्तितो ब्रह्मण्यप्रवर सदैव जयता च्छ्रीवल्लभाधीश्वर ॥ ४३ ॥ अन्येब्राह्मणा -विप्रर्षि प्रथम त थाप्रसुखजोतोयज्ञविष्णो कुले जातो लक्ष्मणदीक्षितेन जठरे यो यल्लमाया भृत ॥ वेदव्यासमत दधार परमा भक्तिं हरेराश्रि तो भव्यस्तव्यगुणैर्न कस्य भवति श्लाघ्यो गुणैर्वल्लभ ॥४४॥ राजकीया -विप्रत्वं प्रथम सुदुर्लभमितो वृत्त च विद्यानुग वेदा

है सो ये आचार्यचूडामणी विजयको प्राप्त होंय ॥ ४१ ॥ विद्वान्-जो न्यायकों पढते भये वैशेपिककों अभ्यास करते भये मीमांसाकों तरते भये वेदान्तकों आदर करते भये योग सांख्यको कहते भये एसे बौद्धादिकनके विध्वंस करवेवारे सर्वाचार्यशिरोमणि विजयकों पावे ॥ ४२ ॥ वैदिक-जो रहस्यनकरकें सहित सब वेदनको पढते भये वेदव्यासमुनिके मतको प्रचार करते भये ओर उनके द्वेषीनको जीतते भये श्रौतस्मार्तमार्गके प्रचार करवेमें भक्तिसों दृढ भये एसे ब्राह्मण्य श्रीवल्लभाधीश सदा विजयकों पावे ॥ ४३ ॥ ओर ब्राह्मण-पहले ब्रह्मर्षि भये फिर आप्त ब्राह्मण याके उपरान्त लक्ष्मणदीक्षितसों यल्लमाजीके उदरमें जो भये ओर व्यासजीके मतकों ओर भक्तिकों आश्रय कियो ये श्रीवल्लभ अपने कल्याणकारी स्तुति करवेके योग्यगुणनसों किनके स्तुति करवेके योग्य नहीं है ॥ ४४ ॥ राजकीय-पहले ब्राह्मण पद दुर्लभ फिर विद्याके अनुसार सदाचार वेदके पढवेमें कुशलता आगमनमें निपु

भ्यासप्रवीणतागमततो नैपुण्यतात्यद्भुता ॥ व्यासार्येस्य मतो हरेः प्रियतयाप्याचार्यतायाः पदं के के सन्ति गुणा नृभाव करणे के तेनु लोकोत्तराः ॥४५॥ प्रजाः—जातो योह्यनले तटे ननु महानद्याः शमिद्रोस्तले जेता दिग्जयिनां विदां दिविष दां भव्यप्रभावोदयः ॥ स्तव्यः सर्वगुणैर्जगद्धितकृते योऽत्राव तीर्णो हरिः श्रीमल्लक्ष्मणनन्दनो विजयतां श्रीयल्लमायाः सुतः ॥ ४६ ॥ स्वकीयाः—किं क्लेशाय प्रजल्पनेन विदुषां किं कर्म भिः स्वर्गदैः किं विज्ञानहरेण चात्र भवति ज्ञानेन भक्तिद्विषा॥ किं संसारसुखैर्विषैरपि हरेः सेवा कथा यत्र नो श्रीमद्वल्लभसं श्रयोपि न तमोरूपं तमर्थं स्तुमः ॥ ४७ ॥ तूर्याणां निनदे तते जयजयध्वन्या च तौर्यत्रिके लोके जाग्रति शोकमूलविग मे हर्षप्रकर्षोदये ॥ आचार्यैर्विहितं निवेश्य तिलकं स्वाचार्य सिंहासने सर्वाचार्यशिरोमणेर्विजयतां श्रीवल्लभाधीशितुः॥४८॥

णता भगवान्‌के प्रीतिसों आचार्य पद इत्यादि कोन कोन गुण संसारभरसों उत्तम नहीं हैं ॥ ४५ ॥ प्रजा—जो महानदके पास अग्निमें शमीवृक्षके तरे उत्पन्न भये हे दिग्विजयी विद्वाननके जीतवेवारे देवतानके मध्यमें वडी प्रभा-वारे सब गुणनसों स्तुतिकरवेके योग्य जो साक्षात् भगवान्‌ही अवतीर्ण भये हैं एसे श्रीमान् लक्ष्मणनन्दन श्रीयल्लमाजीके पुत्र विजयकों पावें ॥४६॥ अपनेमनुष्य—विद्वाननको वाद वृथा क्लेशके लिये हे स्वर्गके देवेवारे कर्मनसोंवी कहा हे विज्ञानके हरवेवारे भक्तिकें द्वेषीज्ञानसोंवी कहा हे विषरूपसंसारके सुखसों कहा हे जो भगवान्‌की सेवा ओर कथा ओर श्रीवल्लभको आश्रय न भयो ॥ ४७ ॥ नगाडानकी चोंटके संग जय जयकी ध्वनि होते बाजा-नके बजते सब लोगनके जागते शोकके मूलको दूर करते बडे हर्षके उदयमें आचार्यननें सिंहासनपे विराजमानकरकें जो तिलक कियो वो सर्वाचार्यशिरो

ततः सर्वेपि जना जनाधिपेन सह साष्टांगप्रणतिमाकलय्य प्रणयार्द्रचित्ताः संसारभ्रमणपरिश्रमापवर्गमपवर्गप्रदं श्रीमदाचार्यचरणसिंहासनप्रदक्षिणपरिभ्रमणं व्यदधन् ॥ ४९ ॥

इति श्रीमदाचार्यकनकाभिषेकाचार्यपदप्राप्तिप्रकरणम् ।

अथ महीमहेन्द्रो मुदितमानसः समागतान् व्यासतीर्थाद्याचार्यान् विद्वत्प्रवरान् आचार्यपरिकरं च सन्तोषयितुं यथाविधि सर्वानेव समर्च्य उपढौकितादिभिर्यथार्हं समर्हयाम्बभूव ॥ ५० ॥ तत्र नारायणाचार्यद्रुहिणाचार्याभ्यां विष्णुधामद्वयाधिपत्यं शम्भवे ग्रामं हरिभट्टादिभ्योधराद्रविणादि यथोचितं सर्वेभ्यो व्यतरत् ॥५१॥ अथाचार्यान् प्रणिपत्य वसुधानाथेन विज्ञापितम् । मां सनाथं कुर्वन्तो मदर्पितं स्वीकुर्वन्तु ॥५२ ॥ ततः श्रीमदाचार्यैर्निजकरकमलेन सुवर्णपात्रिकास्थसुवर्णनिचये देव्योदीनारमुद्रिका दीनदासाख्यक्षत्रियेण भगवदर्थं निजविशुद्धाजीव्यपष्टभा

मणि श्रीवल्लभाचार्यको तिलक विजयको पावे ॥ ४८ ॥ पीछें सब मनुष्य राजाके संग साष्टांग प्रणाम करकें नम्र होयकें संसारके भ्रमणको दूर करवेवारी मोक्षके देवेवारी श्रीमदाचार्यजीके सिंहासनकी प्रदक्षिणा करते भये ॥ ४९ ॥ इति आचार्यपदप्राप्तिप्रकरणम् ॥ पीछें महीमहेन्द्र राजानें प्रसन्नमन होयकें आये भये व्यासतीर्थादिक आचार्यनकों और विद्वाननको आचार्यनके सेवकनकों सन्तोष करवेकेलियें यथाविधि सबको पूजन करकें भेंट विदाई करी ॥५०॥ तामें नारायणाचार्य द्रुहिणाचार्यको दो मंदिरनको आधिपत्य शम्भुभट्टकों गाम हरिभट्टको जमीन द्रव्य यथोचित सबकों दियो ॥ ५१ ॥ पीछें अपने आचार्यनकों प्रणाम करकें राजानें प्रार्थना करी जो मोकों उद्धार करते मेरे किये भेट को स्वीकार कीजिये ॥५२॥ तब श्रीमदाचार्यजीनें अपने श्रीहस्तमों सात असर्फी निकासके भगवानके भूषणके लियें दामोदरके

र्गविभागस्थापिता राजकोशे समागता समन्विष्योद्धृत्य भगवद्भूषार्थं दामोदरहस्ते समर्प्य तद्द्रव्यं पुरोधसा चतुर्धा विभाज्य भागमेकं कार्यार्थं हरिभट्टहस्तेन मात्रे समर्पितम् भागमेकं शम्भुभट्टहस्तेन पितुरुत्तमर्णेभ्यः समर्पितम् भागमेकं श्रीविठ्ठलनाथप्रभुभूषार्थं तदधिकारिणे समर्पितम् । भागमेकमपरधर्म्मकार्यार्थं मातुलहस्ते स्थापितम् ॥ ५३ ॥ अथाचार्यान् निजावमोचने गन्तुं राजाऽभ्यर्थयोजयत् निबद्धाञ्जलिः किंचिन्निजदासाय निजप्रसादोचितं मदुचितं कार्यं विज्ञापयन्तु ॥५४॥ ततः श्रीमदाचार्योः—आश्रित्याश्रमधर्म्ममत्र भवता स्थेयं च रक्ष्याः प्रजाः सेव्यः श्रीरमणः सदा हरिजनैः कार्याधिका संगतिः ॥ आजीव्यं विदुषां विधाय जगतां योज्याश्च ते शिक्षणे दीनानां दयया नयेन विनयैः कीर्तिर्विधेयाऽचला ॥ ५५ ॥ ततो राजा—

हाथमें दीनी ओर पीछें पुरोहितसों वा द्रव्यके चार भाग करायकें एक भाग कार्यकें लिये हरिभट्टके हाथसों माताजीकों दियो ओर एक भाग शम्भुभट्टके हाथसों पिताके ऋणवारेनको दियो ओर एक भाग श्रीविठ्ठलनाथजीके आभूषणनके लियें उनके अधिकारीकों दियो ओर एक भाग धर्मकार्यके लियें मामाके हाथमें दियो ॥ ५३ ॥ पीछें राजानें अपने उतारामें पधारनेका आचार्यनसों प्रार्थना करी ओर हाथ जोड़के बोल्यो जो कछू अपने दासके लियें मेरे लायक कार्यकी आज्ञा करिये ॥ ५४ ॥ तब श्रीमदाचार्यजीनें आज्ञा करी जो अपने आश्रमधर्ममें रहो प्रजाकी रक्षा करो भगवान्‌की सेवा करो भगवद्भक्तनके संग सत्संग करो विद्वाननकों जीविका देकें लोक शिक्षणमें उनको नियोग करो दीननके ऊपर दया करकें नीति ओर विनयसों अचल कीर्तिकों बढावो ॥ ५५ ॥ पीछें राजा वा उत्सवके

कंठीकृतसुरसासृग्लक्षितवेशाश्च वर्णिनश्चापि ॥
सम्पूजितध्वजास्ते सम्भृतशस्त्रास्त्रजेतारः ॥ २७ ॥
भवितारोमद्वचनान्मन्त्रमहिम्ना गुरोर्भक्त्या ॥
गोब्राह्मणदेवानां त्रातारः सम्प्रदायस्य ॥ २८ ॥
इत्युक्त्वान्तर्यातः श्रीकंठस्तत्समाधिस्थः ॥
स च संबुध्य तथान्यान् शिष्याँश्चक्रे व्रतस्थान् वै ॥ २९ ॥
तेषां ध्वजनीं कृत्वा जिग्ये पाषण्डिनश्च खलान् ॥
गृहिणो यतयो व्रतिनः शिष्यास्त्रिविधाः कृतास्तेन ॥ ३० ॥
तेभ्योर्पितं निजैश्यं पीठं तेभ्यः पृथक् पृथक् दत्तम् ॥
दिग्विजयाय ततोगात् प्रथमं प्राचीं प्रतस्थे सः ॥ ३१ ॥
श्रीगजदीशं नत्वा स्तुत्वासौ गद्यपद्यैश्च ॥
नैवेद्येन हरेरिह स्वीयाँश्चक्रे कृतार्थान् वै ॥३२ ॥
तस्य प्रसादमहिम्ना सर्वाचार्यातिशायि महिमोभूत् ॥
विद्यायाश्च समृद्ध्या तपसा भक्त्या च सम्पन्नः ॥ ३३ ॥

करकें या बिन्दुकरकें सहित गोपीचन्दनके ऊर्द्ध्वपुंड्र करें ॥ २६ ॥ तुलसीकी माला पहरे ब्रह्मचारी होय ध्वजा निशान रोपें शस्त्र अस्त्रसों जीतें ॥ २७ ॥ हमारी आज्ञासों ओर मंत्रकी महिमासों तथा गुरुभक्तिसों गो ब्राह्मणनकी ओर सम्प्रदायकी रक्षाकरवेवारे होंयगे ॥ २८ ॥ ये कहकें महादेव अन्तर्ध्यान होय गये ओर वो उठकें ब्रह्मचारी शिष्यनकों करते भये ॥ २९ ॥ ओर उनकी सेना करकें पाखंडी दुष्टनकों जीत्यो ओर गृही, संन्यासी, ब्रह्मचारी, ये तीन प्रकारके शिष्य किये ॥ ३० ॥ उनको पृथक् २ अधिकार ओर गादी दीनी पीछें दिग्विजय करवेकों निकसे सो पूर्वदिशाकों गये ॥ ३१ ॥ वहाँ जगदीशको नमन करकें गद्य पद्यनसों स्तुति करते भये ओर भगवान्के नैवद्यसों अपने मनुष्यनको कृतार्थ किये ॥ ३२ ॥ उनके प्रसादकी महिमासों सब आचार्यनसों अधिक महिमा-

उत्कलदेशे धर्मान् प्रचार्य तस्यैव रक्षार्थम् ॥
तद्देशीय बिल्वं विप्रवर दिक्पतिं चक्रे ॥ ३४ ॥
अथ चलित सह सैन्यै पाषण्डानां पराभव कर्तुम् ॥
आर्यावर्तमितोयात् तीर्थवराणां चरन् यात्राम् ॥ ३५ ॥
मगधे बौद्धमतस्थान् तर्कीकृतसप्तभङ्गिगिर' ॥
सद्वादेन स जिग्ये पारीन्द्रो वा करीन्द्रगणान् ॥ ३६ ॥
वाराणस्यां स्नात्वा विश्वेश बिन्दुमाधव नत्वा ॥
विद्वद्वरान् प्रतोष्य स्वाम्नायस्थान् बहूँश्चक्रे ॥ ३७ ॥
एव सतीर्थराजे ब्रह्मावर्ते चरन्नेक' ॥
माथुरमण्डलयात्रा कृत्वा सम्यङ्निजाभीष्टाम् ॥ ३८ ॥
स्वीयाम्नायकृतेऽयं भर्गश्रीकान्तमिश्रार्यम् ॥
आर्यावर्तजनानां शिक्षायै योजयामास ॥ ३९ ॥
अथ पुष्करमभियातस्तत्र वराह विरिंचि संपूज्य ॥
यातस्ततोविशालां क्षिप्रां नत्वा महाकालम् ॥ ४० ॥

वारे वे भये ओर विद्या तपस्या भक्तिसा सम्पन्न भये ॥ ३३ ॥ उत्कल देशमें धर्मको प्रचार करकें ताकी रक्षाके लियें वाही देश के ब्राह्मणराजा बिल्वको स्थापन कियो ॥ ३४ ॥ फिर वहाँसों सेनासहित पाखंडीनके जीतबेके लियें चले सो तीर्थनकी यात्रा करते आर्यावर्तमें आये ॥ ३५ ॥ मगधदेशमें तर्क करवेवारे बौद्धनको वादसों जीत्यो जैसें सिंह गजनकों जीते है ॥ ३६ ॥ फिर काशीजीमें आपकें स्नान करकें विश्वनाथ बिन्दुमाधवकों नमनकर विद्वाननकों सन्तोषकर बहुतनकों अपने मतके किये ॥ ३७ ॥ याही प्रकार प्रयाग ब्रह्मावर्तमें विचरते अच्छी तरहसों अपनी अभीष्ट ब्रजयात्रा करकें ॥ ३८ ॥ अपने सम्प्रदायकी रक्षाके लियें आर्यावर्तके लोगनके शिक्षाके लियें श्रीकान्त मिश्रको स्थापन कियो ॥ ३९ ॥ पीछें पुष्करजी आये वहाँ वराहको ओर

सोमोद्भवां ततार गोदां कृष्णां च संस्पृश्य ॥
सोमं शिष्यं कृतवान् योऽभूद्यतिराड् जगत्पूज्यः ॥ ४१ ॥
यः कोलूरेचान्ध्रं चिन्तामणिसंगतो विज्ञम् ॥
श्रीकृष्णैकप्रसक्तं कृतवान् बहुजन्मना सिद्धम् ॥ ४२ ॥
योमाधवानलोऽभूत् स्मरकंदलयाकृतासंगः ॥
शशिकलयारंजितधीर्विल्हणसंज्ञोऽथ जयदेवः ॥ ४३ ॥
नृहरिं दृष्ट्वा व्यंकटनाथं कांचीं समायातः ॥
तत्रोवास सुखेन प्रादुश्चक्रे बहून् ग्रन्थान् ॥ ४४ ॥
एवं गतः प्रतीचीं जित्वोदीचीं तथा प्राचीम् ॥
जिग्ये निजामपाचीं धर्मं संस्थापयाञ्चक्रे ॥ ४५ ॥
श्रौतनिधिं निजशिष्यं कृत्वा पट्टेऽभिषिच्याथ ॥
तपसे वनाय निरगात्तत्र मुकुन्दात्मतां दध्रे ॥ ४६ ॥
एतत्पारंपर्यात् पारंपर्यं नु युष्माकम् ॥
लोकेऽतीव पुनीतं लोकानुद्धर्तुकामानाम् ॥ ४७ ॥

ब्रह्माजीको पूजनकर वहाँसों चले सो उज्जैनमें आये वहाँ क्षिप्रामें स्नानकर महाकालकों नमनकर ॥ ४० ॥ नर्मदा गोदावरी कृष्णाकों उतरकें सोमकों शिष्य कियो सो वो शिष्य जगत्पूज्य सन्यासीभयो॥४१॥ जिननें कोलूरपुरमें चिन्तामणिनामक वेश्यासक्त कोई आन्ध्र पुरुषकों श्रीकृष्ण-सेवामें तत्पर ओर ॥ ४२ ॥ सिद्धवनायो जो पीछें वेही माधवानल भये ओर विल्हण जयदेव भये ॥ ४३ ॥ ओर ये प्रभुविष्णुस्वामी पीछें लक्ष्मणबालाजीके दर्शनकर काँचीमें सुखसों वासकर वहोतसे ग्रन्थ बनाये ॥ ४४ ॥ या प्रकार पश्चिम उत्तर पूर्व दक्षिणकों जीतकें धर्म्मको स्थापन कियो ॥ ४५ ॥ पीछें श्रौतनिधिको अपनो शिष्य-कर गादीमें अभिषेककर तपके लियें वनकों गये सो वहाँ भगवान्के शरण भये ॥ ४६॥ ये आपकी गुरुपरंपरा हे सो लोगनके उद्धार करवेके

ब्रह्मैकमेव शुद्धं जगदाकारेण निर्विकारेण ॥
भाति विचित्रं चित्रैरनन्तशक्तिप्रभावैः स्वैः ॥ ४८ ॥
तस्यानादिमहिम्ना सृष्टिप्रवाहस्य नादितासादि ॥
सृष्टिश्चैकैकेय न विरोधो वाक्यतात्पर्ये ॥ ४९ ॥
यद्यत्तर्कविरुद्धमविरुद्धं तद्धि ब्रह्मणि ज्ञेयम् ॥
श्रुत्यैवं प्रतिपन्नं सूत्रैरेतत्तथाभिहितम् ॥ ५० ॥
परमात्मा साकारोजगदाकारो निराकार ॥
सद्धर्म्मा सत्कर्मा सद्गुणपूर्ण सनिर्गुण साक्षात् ॥ ५१ ॥
श्रीपुरुषोत्तमरूपी भक्त्यागम्योऽस्त्यनन्यगत्याद्धा ॥
आत्मा ब्रह्मेतिधिया ब्रह्मैवेतीह शुद्धात्मा ॥ ५२ ॥
श्रौतात्मतानुकार्या कार्या वर्णाश्रमानुगुणा ॥
भक्तिज्ञानविरागाः सम्पाद्या शुद्धचित्तेन ॥ ५३ ॥
सद्भिश्चरितोधर्मं सेव्य शक्त्येन्द्रियाणि जेयानि ॥
आम्नायार्थो ध्येय पापकृति- सर्वथा हेया ॥ ५४ ॥

लिये अत्यन्त पवित्र हे ॥ ४७ ॥ जगतके आकारसों निर्विकार एक ही शुद्ध ब्रह्म हे सो अपनी विचित्रशालिनी अनन्तशक्तिनसों शोभ रह्यो हे ॥ ४८ ॥ ताकी अनादिमहिमासो सृष्टि प्रवाहको अनादि ओर सादिपनो हे ये कोई कहे हें ॥ ४९ ॥ जो जो तर्क विरुद्ध हे वो २ ब्रह्ममें सब अविरुद्ध हे श्रुतिनमें कह्यो हे ओर सूत्रनमेंभी एसोही कह्यो हे ॥ ५० ॥ परमात्मा साकार जगदाकार हे ओर निराकार हे सद्धर्मवारो क्रियावारो गुणवारो हे ओर निर्गुणभी साक्षात हे ॥ ५१ ॥ सो अनन्य-भक्तिसों जान्यो जाय हे दूसरी गति नहीं हे आत्मा ब्रह्मही हे या बुद्धिसों ब्रह्मही शुद्धात्मा हे ॥ ५२ ॥ परन्तु वर्णाश्रमके अनुरूप वेदोक्त कर्म करनो भक्ति ज्ञान वैराग्य सम्पादन शुद्धचित्तसों करनो ॥ ५३ ॥ आचार्यनके किये धर्मनको करनो इन्द्रियनकों जीतनो वेदके अर्थको विचारनो पापकामकों

तथाचक्रुरनुज्ञातं ज्ञातं वृत्तं ततो जनैः ॥
राज्ञा विज्ञैस्तथा सद्भिः पौरैर्जानपदैरपि ॥ ६ ॥
जनेशस्तां समाकर्ण्य विमनाविप्रियां गिरम् ॥
विद्वांसो वैष्णवाचार्याः सभ्याः सर्वे समागताः ॥ ७ ॥
प्रणेमुस्ते यथान्यायं कृतोपायनसत्क्रियाः ॥
बभाषे भूपतिस्तेषां निबद्धांजलिसंपुटः ॥ ८ ॥
श्रीमदाचार्यपादानां सांप्रतं किं चिकीर्षितम् ॥
युष्मद्दर्शनसंलापसेवासौख्याधियो वयम् ॥ ९ ॥
श्रुत्वैवं प्राहुराचार्य्यास्तीर्थयात्रासमुद्यमम् ॥
रोचिष्णुरदरोचिर्भिः प्रकाशितसभोदराः ॥ १० ॥
अगस्त्यपूता दिक् पूता तीर्थैरप्यमरालयैः ॥
दिवस्संपदमापन्नादिग्दंतिबलविश्रुता ॥ ११ ॥
तस्या यात्रां प्रति मनः सोत्कंठं चिरतो मम ॥
लब्धावकाशैरेतस्याः कृतेऽस्माभिः प्रवत्स्यते ॥ १२ ॥

कमलनमें अत्यन्त बँधे ओर आपके कथनमें अनुरागी शिष्यननें कह्यो बहुत ठीक जो आज्ञा ॥ ५ ॥ ओर ये कहकें वेसेही कियो तब या वृत्तान्तको लोगननें जान्यो ओर राजा विद्वान् सज्जन सब पुरके रहवेवारेननें जान्यो ॥६॥ राजा आपके जायवेकी सुनकें उदासभयो ओर विद्वान् वैष्णवाचार्य सभ्य सब आये ॥ ७ ॥ ओर प्रणाम करकें भेट करते भये उनमेंसों हाथ जोडकें राजा बोल्यो ॥ ८ ॥ जो श्रीमदाचार्यजीकी या समय कहा करवेकी इच्छा हे हम सब आपके दर्शनतें ओर सदुपदेशसों अतिसुखी हें ॥ ९ ॥ ये सुनकें प्रकाशमान अपने दन्तनकी किरणनकरकें सभाके मध्यकों प्रकाश करते श्रीमदाचार्यजीनें तीर्थयात्राके लियें आज्ञा करी ॥१०॥ जो अगस्त्यऋषिसों पवित्र तीर्थ ओर देवतानके मंदिरनकरकें पवित्र हाथीनकरकें प्रसिद्ध स्वर्गकी सम्पत्तिवारी जो दिशा हे ॥ ११ ॥ ताकी यात्रा करवेकों बहोत दिनासों

# अथ तृतीयप्रस्थानप्रारंभ ।

येऽकुर्वन् मुरवैरिणोतिविततां भक्तिं धरायां परा
माम्नाय पुरवैरिणोपि जगदानन्दाय नदादिवत् ॥
ये धर्मं स्मृतिसमतं श्रुतिगत सचारयत पुन
प्राचेरुस्तमनुत्तमं गुरुवरांच्छ्रीवल्लभांस्तान्नुम ॥ १ ॥
दक्षिणाविजयोत्कर्षोनपरार्कान् गुरून्नुम ॥
यत्प्रकाशे प्रकाशंते भक्ताब्जानि दिवानिशम् ॥ २ ॥
अथात श्रीमदाचार्या कृतकार्या कृताह्निका ॥
आसन् कृतधियोगंतु पुरोऽस्याश्च पुरोदिशम् ॥ ३ ॥
अंतेवासिजनानाह्वयमास्मोयिवासव ॥
ततोमातुल्मात्रादेरनुज्ञामानयंतु न ॥ ४ ॥
वाढ वाढमिति प्रोचुस्तदुक्तार्थेनुरागिण ॥
गाढ निबद्धास्तत्पादपद्मयो सुखसद्मनो ॥ ५ ॥

अब प्रथमयात्रामें तृतीयप्रस्थानको आरम्भ करते मगलकरें हैं जिनने पृथ्वी-पे भगवानकी भक्तिको विस्तार कियो ओर रुद्रसम्प्रदायकों चलायो ओर जगतके आनन्दके लियें श्रेष्ठ श्रौत स्मार्त धर्मको प्रचार करते विचरे एसे गुरुवर श्रीवल्लभाचार्यजीकों प्रणाम करें हें ॥ १ ॥ दक्षिणआदिदिशाके जयकरवेवारे दूसरे सूर्य गुरुनकों नमस्कार करें हें जिनके प्रकाशमें दिन रात भक्तरूपी कमल प्रकाशित होंयहें ॥ २ ॥ बिल्वमंगलाचार्यके गये पीछें आह्निक करकें श्रीमदाचार्यजीने या पुरसो आगे जायवेको विचार कियो॥ ३ ॥ ओर अपने सगके शिष्यनसों कह्यो जो हम जायवेकी इच्छा करें हें सो मामा तथा माताकी आज्ञा लावो ॥ ४ ॥ तब सुखके स्थान एसे आपके चरण

तथाचक्रुरनुज्ञातं ज्ञातं वृत्तं ततो जनैः ॥
राज्ञा विज्ञैस्तथा सद्भिः पौरैर्जानपदैरपि ॥ ६ ॥
जनेशस्तां समाकर्ण्य विमनाविप्रियां गिरम् ॥
विद्वांसो वैष्णवाचार्याः सभ्याः सर्वे समागताः ॥ ७ ॥
प्रणेमुस्ते यथान्यायं कृतोपायनसत्क्रियाः ॥
बभाषे भूपतिस्तेषां निबद्धांजलिसंपुटः ॥ ८ ॥
श्रीमदाचार्यपादानां सांप्रतं किं चिकीर्षितम् ॥
युष्मद्दर्शनसंलापसेवासौख्याधियो वयम् ॥ ९ ॥
श्रुत्वैवं प्राहुराचार्य्यास्तीर्थयात्रासमुद्यमम् ॥
रोचिष्णुरदरोचिर्भिः प्रकाशितसभोदराः ॥ १० ॥
अगस्त्यपूता दिक् पूता तीर्थैरप्यमरालयैः ॥
दिवस्संपदमापन्नादिग्दंतिबलविश्रुता ॥ ११ ॥
तस्या यात्रां प्रति मनः सोत्कंठं चिरतो मम ॥
लब्धावकाशैरेतस्याः कृतेऽस्माभिः प्रवत्स्यते ॥ १२ ॥

कमलनमें अत्यन्त बँधे ओर आपके कथनमें अनुरागी शिष्यननें कह्यो बहुत ठीक जो आज्ञा ॥ ५ ॥ ओर ये कहकें वेसेही कियो तब या वृत्तान्तको लोगननें जान्यो ओर राजा विद्वान् सज्जन सब पुरके रहवेवारेननें जान्यो ॥६॥ राजा आपके जायवेकी सुनकें उदासभयो ओर विद्वान् वैष्णवाचार्य सभ्य सब आये ॥ ७ ॥ ओर प्रणाम करकें भेट करते भये उनमेंसों हाथ जोडकें राजा बोल्यो ॥ ८ ॥ जो श्रीमदाचार्यजीकी या समय कहा करवेकी इच्छा हे हम सब आपके दर्शनतें ओर सदुपदेशसों अतिसुखी हें ॥ ९ ॥ ये सुनकें प्रकाशमान अपने दन्तनकी किरणनकरकें सभाके मध्यकों प्रकाश करते श्रीमदाचार्यजीनें तीर्थयात्राके लिये आज्ञा करी ॥१०॥ जो अगस्त्यऋषिसों पवित्र तीर्थ ओर देवतानके मंदिरनकरकें पवित्र हाथीनकरकें प्रसिद्ध स्वर्गकी सम्पत्तिवारी जो दिशा हे ॥ ११ ॥ ताकी यात्रा करवेकों बहोत दिनासों

आनंदनाम्नोसाग्भर्तुर्निरानदाय गी श्रुता ॥
मेघानां च यथा नादो मुदे विरहिण कथम् ॥ १३ ॥
प्रपद्यते तीर्थसर्थ्यैं सतीर्थ्यैं सह गम्यते ॥
वितीर्थैर्जीव्यतेऽस्माभि कष्ट तीर्थमृतेहि न ॥ १४ ॥
निमज्जतां भवांभोधौ भवदंघ्रिधरातलम् ॥
प्राप्त चिराद्यदृच्छातस्तत्सद्योध्य प्रहाप्यते ॥ १५ ॥
सिंधुभि सद्गुणानां वै दीनोहं दीनबंधुभि ॥
कृपार्द्रैश्च कृपानाथैर्विधेय इति नाथ्यते ॥ १६ ॥
स्मरणीया सदैव स्म स्वकीया इति चेतसा ॥
कैंकर्यमुररीकार्य्यं समर्प्य स्वात्मदर्शनम् ॥ १७ ॥
गुरूणां समदृष्टीनामनुग्राह्या जगज्जना ॥
जानन्नपि जनोथापि स्वार्थायैवार्थयत्ययम् ॥ १८ ॥

हमारो मन उत्कठित हे यासों याके लियें अवकाशसों प्रवास करेंगे ॥१२॥ एसी वाणीके पति श्रीमदाचार्यजीकी वाणी राजाके कर्णनके लियें आनन्दप्रद नहीं भई जेसें मेघको शब्द विरहीके लिये ॥१३॥ राजा बोल्यो जो आप प्रवास करेंगे तो हमारे गुरुभाई भी सग जायेंगे तब शास्त्रकथासों शून्य होयकें में कैसें रहूंगो आपके विना मोकों अत्यन्त दुःख हे ॥१४॥ संसारसमुद्रमें डूब नेवारेनको आपके चरण पृथिवीतल हें बहुतदिनमें मिले हे सो जल्दीही आज छूटें हें ॥ १५॥ सो सद्गुणनके सिन्धु दीननके बन्धु कृपानाथ में दीन हूं मेरे ऊपर फिर भी कृपा करनी ये प्रार्थना करू हूं ॥१६॥ में आपको दास हूं ये चित्तसों सदा स्मरण राखनो मेरी सेवाको स्वीकार करनो फिर जल्दी अपने दर्शन देने ॥ १७ ॥ समदृष्टी गुरुनको जगत्के मनुष्य नके ऊपर अनुग्रह करनो चाहिये ये जानतेभी ये जन अपने स्वार्थके

अवश्यं यदि गंतव्यमागंतव्यं तथा पुनः ॥
अमोघास्त्वर्थनाऽस्माकं गुरूणां का निवारणा ॥ १९ ॥
विज्ञापनां धरेशस्य निशम्योचुस्तथास्तु ते ॥
आचार्य्या विदुषश्चैवं व्यसृजँस्तानथागतान् ॥ २० ॥
निजशिष्यजनैः साकं चलिताः पुरवर्त्मना ॥
अनुयाताः प्रजेशेन विद्भिः सद्भिर्जनैरपि ॥ २१ ॥
कौपीनाच्छादने धृत्वाऽजिन दंडकमंडलून् ॥
जटोपवीतमौंजीसृङ्मुद्राः पुंड्रं च पादुके ॥ २२ ॥
शोभिताःश्रीमदाचार्याश्चेलुः श्रीवामनायिताः ॥
छत्रं दधार भूपालो ग्रंथं दामोदरः स्वयम् ॥ २३ ॥
चामरद्वितयं शंभुः स्वयंभूश्च समादधे ॥
पूजावटिं स्वभूः साक्षाच्छेषं शेषादयः परे ॥ २४ ॥
अथाक्रमन् पुरात्तस्माद्यज्ञादिव त्रिविक्रमः ॥
विक्रमंतो नरानार्यः जगुर्यात्रां परस्परम् ॥ २५ ॥

लियेंही प्रार्थना करे हे ॥ १८ ॥ सो जो अवश्य पधारनोही हे तो फिर बी अवश्य पधारनो ये मेरी प्रार्थना सफल होय ॥ १९ ॥ ये प्रार्थना राजाकी सुनकें वेसेही होयगो ये कहकें आये भये विद्वाननसों विदा होयकें अपने शिष्यनके संग श्रीमदाचार्यजी वहाँसों पधारे ओर पीछें राजा विद्वान् सज्जनबी चले ॥ २० ॥ २१ ॥ कौपीन आच्छादनवस्त्र मृगचर्म दंड कमंडलु जटा जनेऊ मौंजी माला ऊर्द्ध्वपुंड्र षणमुद्रा पादुका इनकों धारण किये श्रीवामनजी जेसें चलते श्रीमदाचार्यजी शोभते हे राजानें छत्र दामोदरनें ग्रन्थ शम्भु स्वयम्भुनें दोनों चामर स्वभूनें सेवाकी झाँपी शेषभट्ट आदिनें शेष बाकीकी चीज लीन्ही ॥ २२ ॥ २३ ॥ २४ ॥ पीछें वा पुरसों

हर्म्याट्टालगवाक्षेषु हट्टद्वाराजिरेषु च ॥
सधीभूता निशम्यैतामन्योन्यं तेऽभिभाषिरे ॥ २६ ॥
अथ हुताशन साक्षाज्जातो धर्मप्रवृत्तये ॥
श्रीविष्णुस्वामिपादानां शुद्धाद्वैतानुवादिनाम् ॥ २७ ॥
पाषण्डपक्षकक्षाणां दाहक पावकोनु किम् ॥
सुधांधसां सुधावाह्य सेव्योऽसौ भूसुधांधसाम् ॥ २८ ॥
वर्णाश्रमत्रयीधर्मकर्त्ता भर्त्ता तदध्वन ॥
समुद्धर्त्ता हरेर्भक्तिमार्गाणां चरमे युगे ॥ २९ ॥
घट्टनानेन विद्वास पटुना शास्त्रवर्त्मना ॥
जितास्सजवने राज्ञोऽधिगताचार्यपद्धति ॥ ३० ॥
अथ बालवपुश्चैकश्चरत्येव हि दिग्जयम् ॥
अर्द्धजातोऽपि पारीन्द्रः करीन्द्रान् धर्षितुं क्षम ॥ ३१ ॥

यज्ञसों वामनके जेसे पधारे सो ओर स्त्री पुरुष उनकी यात्राको परस्पर गान करते हे ॥ २५ ॥ महलनमें अटारीनमें झरोखानमें खिडकीनमे बाजारनमें द्वारनमें अगननमे चौरस्तानमें जमा होयके परस्पर बात करते हे ॥ २६ ॥ जो ये साक्षात् अग्निदेव हें धर्मको प्रवृत्त करवेके लिये प्रगट भये हे शुद्धाद्वैतवादी श्रीविष्णुस्वामीके मतके आचार्य हें ॥ २७ ॥ पाषडपक्षरूपी सूखे वनके दाह करवेवारे अग्नि हें देवतानको अमृत देवेवारे ब्राह्मणनके पूज्य हे ॥ २८ ॥ कलियुगमें वर्णाश्रम वैदिकधर्मके करवेवारे वैदिकमार्गकी रक्षा करवेवारे भगवानके भक्तिमार्गनके उद्धार करवेवारे हें ॥ २९ ॥ चतुर इन बालकन शास्त्रनके मार्गसों राजाकी सभामें पंडितनको जीत लियोहे ओर आचार्यपद पायो हे ॥ ३० ॥ ये बालशरीर एक ऐसें दिग्विजय करतहें छोटेभी सिंह हाथीनके मारवेमें समर्थ होय हे॥ ३१ ॥

किंवदंती श्रुता चास्य चंपारण्येऽभिजन्मनः ॥
सौमनस्यं सतामासीद्वृष्टिः सुमनसामपि ॥ ३२ ॥
व्यक्तीभूता दिवोवाचो याता तिष्योंचिता कृतः ॥
वर्तिष्यते त्रयीधर्मो भक्तिधर्मो विभास्यति ॥ ३३ ॥
वाराणस्यां निवसता तनुता शिवयोर्मुदम् ॥
वदतः प्रथमं वाचं व्यक्तीभूता पदावलिः ॥ ३४ ॥
अनल्पतपसां नोस्य दर्शनं नः पुरौकसाम् ॥
सुलभं वल्लभप्रभोर्द्रष्टारः पुण्यशालिनः ॥ ३५ ॥
इत्थं वृद्धांगनालापं जनालापमनेकधा ॥
शृण्वंतः श्रीमदाचार्य्यमानयंतः स्मितादिभिः ॥ ३६ ॥
विद्यानगरतो यातावियापाद्य विज्जयम् ।
सत्कृत्य तान् समायातान् परिवृत्य सहेश्वरान् ॥ ३७ ॥

ओर चम्पारण्यमें इनके जन्मकी कहावत सुनी हे जो जन्मसमय सब प्रसन्न भये ओर देवताननें पुष्पवृष्टि करी ॥ ३२ ॥ आकाशवाणी भई जो कलियुग जायगो सत्ययुग आवेगो वैदिकधर्म प्रवृत्त होयगो भक्तिधर्म विशेषकरके प्रकाशमान होयगो ॥ ३३ ॥ ओर भवानीमहादेवजीके आनन्दको बढावते काशीमें वास करते पहले पहेल इनके बोलते स्पष्ट वाणी निकसी ही ॥ ३४ ॥ जो बडी तपस्यावारे हमारे पुरमें वास करवेवारे मनुष्यनको वल्लभमहाप्रभुनको दर्शन सुलभ हे दर्शन करवेवारे पुण्यात्मा हें ॥ ३५ ॥ या प्रकार श्रीआचार्य्यजी वृद्धस्त्रीनकी ओर मनुष्यनकी अनेक तरहकी बातें सुनते स्मित आदिसों उनको मान करते ॥ ३६ ॥ आये भये राजाके सहित ओर सब लोगनको सत्कारसों पीछें लौटायकें विद्यासों जय करकें विद्यानगरसों पधारें

अथातरँस्तुगभद्रां कुर्वन्तस्तत्कथां मुदा ॥
व्रजतां पथि कस्मिंश्चिद्दिने तेषां महात्मनाम् ॥ ३८ ॥
श्रुत्वा विद्यापुरजयं तीर्थराजे समागतः ॥
कृष्णदासः प्रचलितो जवादायादिहैकलः ॥ ३९ ॥
स पादयोर्निपतितोऽनुगृहीतः कृपालुभिः ॥
शरणं समनुप्राप्तः कृपापात्रोऽभवत् प्रभो ॥ ४० ॥
तमाहुः श्रीमदाचार्याः कुतः कृष्ण समागतः ॥
आयातः कुशलं मार्गे साधु तत्किं कृते भवान् ॥ ४१ ॥
स चाह प्रणतो भूत्वा प्रयागात्समुपागतः ॥
श्रीमतां दर्शनाकांक्षी कुशली सर्वदास्म्यहम् ॥ ४२ ॥
हरेर्गुरोर्निदेशेन शरणार्थी समागतः ॥
अनुग्राह्यस्ततोनाथो नाथैः श्रीनाथमूर्तिभिः ॥ ४३ ॥
ततस्तु श्रीमदाचार्यैः कृपया मनुरर्पितः ॥
माला दत्ता मेघनाख्य क्षत्रियोऽयं कृतार्थितः ॥ ४४ ॥

॥ ३७ ॥ ओर तुंगभद्रा उतरके आनन्दसों कथा करते मार्गमें चलवे कोई दिन उन महात्मानकों ॥ ३८ ॥ प्रयागमें विद्यानगरको जय सुनके जल्दीसों एकले चले कृष्णदास आयके मिले ॥ ३९ ॥ ओर चरण कमलनमें गिरपडे तब दयालु श्रीमदाचार्यजीनें उनके ऊपर कृपा करके अपनो कृपापात्र बनायो ॥ ४० ॥ ओर उनसों आपनें आज्ञाकरी जो कृष्णदास कहाँसों आये कुशल हे क्यों आये ॥ ४१ ॥ तब वे नम्र होयके बोले जो आपके दर्शनकी इच्छासों प्रयागसों आयो हूं में आपकी कृपासों सदा कुशल हूं ॥ ४२ ॥ भगवान्की ओर गुरुनकी आज्ञासों शरण होयवेकी इच्छासों आयो हूं सो या अनाथके ऊपर भगवत्स्वरूप आप अनुग्रह करें ॥ ४३ ॥ तब श्रीमदाचार्यजीनें कृपा करके मन्त्र दियो

निजैस्तेन सहैवातः शिष्यैराचार्यसत्तमाः ॥
ससरुः सरसीं पंपां महर्ष्योपीतशंबराम् ॥ ४५ ॥
न्यग्रोधस्य तले तत्र न्यूषुरादेशिकोत्तमाः ॥
सस्नुस्तीर्थविधिं चक्रुराह्निकौपासनाहुतिम् ॥ ४६ ॥
पारायणं समारब्धं श्रीमद्भागवतस्य च ॥
तत्र वृत्तं समभवत् गीयते तत्पुराविदाम् ॥ ४७ ॥
अंतेवासिजनः कृष्णः पूजा सत्रकृते गुरोः ॥
कुशान् कुसुमपर्णैधश्चयं हर्त्तुं वनं गतः ॥ ४८ ॥
तत्राऽपश्यत् पतंगस्य पतंगं तप्तमंशुभिः ॥
तृषार्तमार्त्तं तं ज्ञात्वा नीत्वांब्वस्मै ददौ घृणी ॥ ४९ ॥
गुरुपादोदकं पीत्वा हित्वा तिर्यक्कलेवरम् ॥
सद्द्विजोऽजद्धरेर्द्धाम धृत्वा दिव्यकलेवरम् ॥ ५० ॥
श्रीमदाचार्यमाहात्म्यं छात्रेष्वेव न चित्रताम् ॥
चक्रे सुपर्ववर्गेषु भालयत्सु द्विपात्स्वपि ॥ ५१ ॥

ओर माला दीनी ओर या मेंघन क्षत्रीकों कृतार्थ कियो ॥ ४४ ॥ ओर पीछें इनकें तथा ओर सब अपने शिष्यनके संग महर्षिनसों पान कियो जाय हे जल जाको एसे पंपासरोवरकों गये ॥ ४५ ॥ वहाँ वटके नीचे विराजे स्नान तीर्थविधि आन्हिक औपासन होम कियो ॥ ४६ ॥ श्रीमद्भागवतको पारायण प्रारम्भ कियो वहाँ सबके समक्ष जो वृत्तान्त भयो वो ये हे ॥ ४७ ॥ जो वहाँ आपकी सेवा करवेके लियें कृष्णदास कुशा पुष्प पत्ता समिधा इनकों लेवेकों वन गये ॥ ४८ ॥ वहाँ सूर्यके किरणसों तपते प्यासे दुःखित एक पक्षीकों जानकें वाकों लायकें जल पियायो ॥ ४९ ॥ सो वो पक्षी गुरुनको चरणामृत पीकें पक्षीकी देह छोडकें दिव्य शरीर धारण करकें हरिकें धामको गयो ॥ ५० ॥ या श्रीमदाचार्यके माहात्म्यनें

जगुर्नित्यकथाया ते कोशलेन्द्रकथां निशि ॥
गुरवस्तत्र शिष्येभ्य शबरीसमनुग्रहम् ॥ ५२ ॥
उषित्वात्र त्रिरात्रातेऽपररात्रे समुत्थिता ॥
स्नात्वा कृत्वाह्निक याता ऋष्यमूकाय सगवे ॥ ५३ ॥
यात्राविधिं विधायात्र स्थिता सिंहासनार्चने ॥
तावत्तत्र समयातो रामदासो महत्तर ॥ ५४ ॥
सेर्ष्योदररवं श्रुत्वा निरोद्धु स्वगणान् जगौ ॥
श्रुत्वा प्रभावमार्याणां सगणश्शिष्यतां गत ॥ ५५ ॥
माहात्म्य रामनाम्नोपि मन्त्रराजस्य कीर्तितम् ॥
आचार्यै कर्णपीयूषं पीत्वायोऽमरतां गत ॥ ५६ ॥
किष्किधामृष्यमूक च यात्रया चैकघस्रया ॥
सेवित्वाऽभ्यसरैंस्तस्मात् द्रष्टु स्कदं सुरेश्वरम् ॥ ५७ ॥

शिष्यनकोहीं आश्चर्यवारे नहीं किये किन्तु याके देखवेवारे देवतावी आश्चर्य पावते भये ॥ ५१ ॥ आप रातको नित्य कथामें श्रीराम चन्द्रजीकीवी कथाकरते हे वामें शिष्यनको शबरीके अनुग्रहकी कथा सुनाई ॥ ५२ ॥ ओर तीन रात यहाँ रहकें चौथे दिन स्नानादिक नित्य आन्हिक करकें ऋष्यमूक पर्वतकों गये ॥ ५३ ॥ यहाँकी यात्रा करकें सिंहासनपे विराजमान भये तब कोई रामभक्त महात्मा आये ॥ ५४ ॥ ओर ईर्षासों शब्दको शब्द सुनकें अपने शिष्यनसों रोकवेके लियें कह्यो परन्तु आचार्य नको प्रभाव सुनकें शिष्यसमेत पीछें शिष्य भये ॥ ५५ ॥ ओर आचार्यनसों मन्त्रराज रामनामकोवी अमृतरूपी माहात्म्य सुनकें देवीजन होयगये ॥ ५६ ॥ एसे किष्किन्धा ऋष्यमूककी एक दिनकी यात्रा करकें यहाँसों

दहशुः शिखिपत्रं तं त्यक्तसाचीहरालयम् ॥
नत्वा स्तुत्वा विधिं कृत्वा तत्रत्यमवसान्निशाम् ॥ ५८ ॥
कथायां कथ्यमानायां क्षणदायां विचक्षणाः ॥
पंडिताः समनुप्राप्ताः स्कांददर्शनमंडिनः ॥ ५९ ॥
कथावसाने ते सर्वे प्रणम्योचुर्महाप्रभून् ॥
अंतस्तद्धर्मसूत्रेऽस्मिन् कथं स्कंदोन वर्णितः ॥ ६० ॥
सोंतर्यामी शक्तिधरः षडाम्नायैः समर्चितः ॥
परास्यशक्तिरित्यादौ सोक्तोमंत्रांतरेष्वपि ॥ ६१ ॥
वभाषिरे तदाचार्योवाढं तद्भक्तिशालिनाम् ॥
तथा विधिः स युष्माकं माननीयः षडाननः ॥ ६२ ॥
शैवं च वैष्णवं शाक्तं सौरं गाणपतं तथा ॥
स्कांदं च भक्तिमार्गस्य दर्शनानि षडेव हि ॥ ६३ ॥
इत्थं पुराणसारोक्त्या दर्शनानां समत्वतः ॥
स्वस्वदर्शनसंस्थेन ध्येयोंतर्याम्यसौ भवेत् ॥ ६४ ॥

स्कंदस्वामि ( कार्तिकेय ) स्वामीके दर्शनकों चले ॥ ५७ ॥ सो उनके दर्शन स्तुतिकरकें एक रात्र वहाँ वसे ॥ ५८ ॥ ओर रात्रिमें कथा करते समय वहाँके पंडित आये सो कथाके अन्तमें वे सब प्रणाम करकें महाप्रभुनसों बोले जो "अन्तस्तद्धर्म" या व्यासजीके सूत्रमें स्वामिकार्तिककोवर्णन क्यों नहीं कियो ॥ ५९ ॥ ६० ॥ वे अन्तर्यामी शक्तिके धारण करवेवारे वे दमें "परास्यशक्तिः" इत्यादिमंत्रनमें ओर दूसरेबीमंत्रनमें गाये हें ॥ ६१ ॥ तव आपनें कही बोले जो ठीक हे उनके भक्तनको वोही विधि हे वे तुमको माननीय हें ॥ ६२ ॥ शैव वैष्णव शाक्त सौर गाणपत्य ओर स्कांद भक्ति मार्गके येही छा शास्त्र हें ॥ ६३ ॥ या प्रकार पुराणके सारसों दर्शन-

मयात्र श्रुतिमार्गेण पुरुष समुदाहृत ॥
गीतादिमानबलत कथित पुरुषोत्तम ॥ ६५ ॥
यथा यथा गुणादर्शे दृश्यंतेर्का स्वतोर्कत ॥
तथा तथा क्षरा पुंसो भ्राजंते पुरुषा परे ॥ ६६ ॥
यत्र सर्वे सम यांति स्वभासेन पृथक् पृथक् ॥
सोक्षर पुरुष प्रोक्तोयोन्तस्थ पुरुषोत्तम ॥ ६७ ॥
एकत्वेन पृथक्त्वेन ध्यायता विश्वतोमुखम् ॥
पारपर्य्यात्तमेत्येव सरित सागरं यथा ॥ ६८ ॥
अन्यथा वचसा भेदे न ह्यभेद प्रसिध्यति ॥
तदसिद्धो वृथा शास्त्रं तथा वेदांतमाश्रितम् ॥ ६९ ॥
वेदांतविवृतिर्गीता गीतया पुरुषोत्तम ॥
गीयते सद्धरिर्नूनं सर्वाकारोयतोमतः ॥ ७० ॥
इत्युक्ते श्रीमदाचार्ये कुमारार्यस्तदाऽब्रवीत् ॥
सर्वाकारोयदाकारस्तदाकार स कीदृशः ॥
हरिसंज्ञा कुतस्तास्य मानं गीतैव किं प्रभो ॥ ७१ ॥

मकी समतासों अपने २ मार्गके अनुसार अन्तर्यामीको ध्यान करनो ॥ ६४ ॥ ओर हम वेदमार्गसों पुरुष कहे हें गीताआदिके प्रमाणसों पुरुषोत्तम कहे हें ॥ ६५ ॥ जेसे जेसे गुणवारे सूर्यके बिम्ब काँचमें दीख पडे हें वाहीप्रकार क्षर पुरुषभी भासे हे ॥ ६६ ॥ ओर जामें वे सब अपने २ तेजसों सम होयजाय हें वो व्यापक अक्षर पुरुष हे ताकों पुरुषोत्तम कहे हें ॥ ६७ ॥ एकतरहसों अथवा अनेकतरहसों ध्यान करवेवारेभी परम्परासों वाहीमें पहुँचतहें जेसे नदी समुद्रमें ॥ ६८ ॥ नहीं तो वचनमके भेदसों अभेद नहीं सिद्ध होयगो वाकी असिद्धिमें वृथा शास्त्र हें ओर वेदान्तको आश्रय वृथा हे ॥६९॥ वेदान्तको विवरण गीता पुरुषोत्तमको मान करे हे ओर वे सर्वाकार हें ॥ ७० ॥ एसे श्रीमदाचार्यजीके कहत पे

तमाहुः पुनराचार्या विश्वतश्चक्षुरादिभिः ॥
निरूप्यते यदाकारस्तदाकारोऽस्य संमतः ॥ ७२ ॥
हरिसंज्ञा श्रुतौ तस्य गीयते शब्दतोऽर्थतः ॥
गीतैव मानं पूर्वेषामाचार्याणां समादरात् ॥ ७३ ॥
वेदे रामायणे चैव पुराणे भारते तथा ॥
आदौ मध्ये तथा चान्ते हरिः सर्वत्र गीयते ॥ ७४ ॥
पुरुषोत्तमसंज्ञस्य हरिसंज्ञा निरूप्यते ॥
शिष्टव्याख्यातमानानां प्रामाण्यं चाप्यसंशयात् ॥ ७५ ॥
श्रुतिस्तु प्रथमं मानं स्मृतिस्तदनुगामिनी ॥
आद्यद्वैधे ह्युभौ मान्यौ कल्पः कल्पोऽपरः परे ॥ ७६ ॥
दर्शनानां मिथो बाधात् कल्प्यते विषयः परः ॥
वेदांतदर्शनात्तत्र सर्वात्मा पुरुषोत्तमः ॥ ७७ ॥

कुमारार्य बोले जो जाको आकार सर्वाकार हे वो केसो हे ताकी हरिसंज्ञा क्यों हे गीताही क्यों प्रमाण हे ॥ ७१ ॥ तब उनसों श्रीमदाचार्य फिर बोले जो 'विश्वतश्चक्षुः, इत्यादि मन्त्रनसों जो आकार निरुपण कियो गयो हे वोही उनको हे ॥ ७२ ॥ उनको हरि ये नाम श्रुतिमें शब्द ओर अर्थसों बी कह्यो गयो हे पहलेके आचार्यनके आदरसों गीताही प्रमाण हे ॥ ७३ ॥ वेद रामायण पुराण भारत इनमें पहलें, बीचमें, अन्तमें, सब जगह हरि हीं गाये जाँय हें ॥ ७४ ॥ पुरुषोत्तमहीको हरि ये नाम हे शिष्टनके व्याख्यानबी संशय न होयवेसों प्रमाण हें ॥ ७५ ॥ पहलें श्रुतिप्रमाण हे पीछें ताके अनुसार स्मृति प्रमाण हे दो तरहकी स्मृति होंय तो दोनों प्रमाण हें स्मृति विरुद्ध होयतो भिन्नाधिकारसों पक्ष कल्पना करनों ॥ ७६ ॥ शास्त्रनके परस्पर बाधसों दूसरे विषयकी कल्पना करनी वहाँ वेदान्तशास्त्रसों सर्वात्मा

तं यूय स्कंदरूपेण पूजयंत सनातनम् ॥
स्कदलोकं समासाद्य गमिष्यथ परां गतिम् ॥ ७८ ॥
इत्थं निशम्य वचनमाचार्य्याणां मुखोत्थितम् ॥
सर्वे प्रसन्नमनस साधु साध्विति सस्तुवन् ॥ ७९ ॥
सत्य सत्यगिरोयूय गुरवो गुरवो हि न
दर्शितं तत्त्वमस्माक हरि स्कदस्वरूपधृक् ॥ ८० ॥
स्कदरूपेण हि हरिं वय तु भवदाज्ञया ॥
नित्य वै पूजयिष्यामो यास्यामो हरिमव्ययम् ॥ ८१ ॥
केचित्प्राहु पुनर्विप्रा हरिर्यद्यखिलात्मक ॥
तदा तमेव देवेशं पूजयाम परैर्नु किम् ॥ ८२ ॥
शाखिनोमूलसेकेन शाखा तृप्यति चेद्यदि ॥
शाखासेकेन किं तत्र शाखितर्पणमुत्तमम् ॥ ८३ ॥
मूलनालायितोविष्णु सुरशाखिवरस्य च ॥
विशाखाद्या स्मृता शाखास्ततो विष्णुमुपास्महे ॥ ८४ ॥

पुरुषोत्तमही हे ॥७७॥ उन सनातनको स्कदरूपसों पूजन करवेवारे तुम भी स्कदलोककों पायकें अच्छी गतिकों जावोगे ॥ ७८ ॥ एसे आचार्यनके वचननकों सुनके वे प्रसन्न मन होयके बहुत ठीक बहुत ठीक एसी स्तुति करवे लगे ॥ ७९ ॥ सत्य हे सत्यवादी आप हें हमारे गुरु हें हमको आपने तत्व दिखायो स्कदरूपधारण करवेवारे हरि हें ॥ ८० ॥ स्कंदरूपसों हरिकी आपकी आज्ञासों नित्य पूजा करें गे ओर अविनाशी हरिको पावेंगे ॥ ८१ ॥ उनमेंसों कोईमें कह्यो जो हरि सर्वात्मक हे तो उन्हींकी पूजा करेंगे ॥ ८२ ॥ वृक्षके मूलमें सींचवेसों जो शाखा तृप्त होयहे तो शाखासींचवेसों कहा हे वृक्षको सींचनोही अच्छो हे ॥ ८३ ॥ देवता रूपशाखानके मूल जड विष्णु हें स्कद आदि शाखा हें यासों विष्णुहीकी

इत्युक्त्वाचार्य्यचरणौ गृहीत्वा शरणं गताः ॥
वर्णाश्रमाचारधर्मानाचार्येभ्यः प्रपेदिरे ॥
प्रणम्य च प्रशस्यैवं ते सर्वे स्वगृहान् ययुः ॥ ८५ ॥
आचार्य्याः प्रस्थितास्तस्माच्छ्रीशैलं प्रति सानुगाः ॥
श्रीशैलं समनुप्राप्य दृष्ट्वा श्रीमल्लकार्जुनम् ॥ ८६ ॥
कृतोपढौकिता नेमुश्चक्रुः क्षेत्रप्रदक्षिणम् ॥
औपासनंच निर्वर्त्य पूजयामास माधवम् ॥ ८७ ॥
पाकं समर्प्य देवाय भुक्त्वा तत्र यदा स्थिताः ॥
योगिनस्तत्र संप्राप्ता धृतभोगिकलेवराः ॥ ८८ ॥
भस्मना दिग्धसर्वांगाः शैवा विप्रविदस्तथा ॥
कश्चिदाह पुरस्तेषामाचार्याणां पुरः स्थितः ॥ ८९ ॥
के यूयं कुत आयाताः क्व यातारः क्व तिष्ठथ ॥
आचार्यास्तु तदा वाक्यं प्रहस्यैतज्जगुस्तदा ॥ ९० ॥

उपासना करेंगे ॥ ८४ ॥ ये कहके आचार्यनके चरणकमल धरकें शरण आये ओर वर्ण आश्रम के आचार धर्म सीखते भये ओर प्रणाम करकें प्रशंसा करकें सब अपने २ घरनकों गये ॥ ८५ ॥ श्रीमदाचार्य परिकरसमेत वहाँसों श्रीशैलकों गये वहाँ श्रीमल्लकार्जुनके दर्शन कर ॥ ८६ ॥ भेंट कर प्रणाम करकें क्षेत्रकी प्रदक्षिणा करते भये ओर औपासनसों निवृत्त होयकें भगवानकी सेवा कर ॥ ८७ ॥ देवकों पाक अर्पण कर भोजन करकें जब विराजमान भये तबही सर्पनकों लियें योगी आये ॥ ८८ ॥ ओर भस्मसों सब शरीरपोतें शैव ब्राह्मण विद्वान्भी आये उनमेंसों कोई एक आचार्यनके सामनें आयकें बोल्यो ॥ ८९ ॥ जो तुम कोन हो कहाँसों आये कहाँ जावोगे कहाँ ठाडे हो तब आचार्य हँसकें बोले ॥ ९० ॥

त यूयं स्कदरूपेण पूजयंत सनातनम् ॥
स्कदलोकं समासाद्य गमिष्यथ परां गतिम् ॥ ७८ ॥
इत्थं निशम्य वचनमाचार्य्याणां मुखोत्थितम् ॥
सर्वे प्रसन्नमनसः साधु साध्विति सस्तुवन् ॥ ७९ ॥
सत्य सत्यगिरोयूय गुरवो गुरवो हि न
दर्शितं तत्त्वमस्माक हरि स्कदस्वरूपधृक् ॥ ८० ॥
स्कंदरूपेण हि हरिं वय तु भवदाज्ञया ॥
नित्य वै पूजयिष्यामो यास्यामो हरिमव्ययम् ॥ ८१ ॥
केचित्प्राहु पुनर्विप्रा हरिर्यद्यखिलात्मक ॥
तदा तमेव देवेशं पूजयाम परैर्नु किम् ॥ ८२ ॥
शाखिनोमूलसेकेन शाखा तृप्यति चेद्यदि ॥
शाखासेकेन किं तत्र शाखितर्पणमुत्तमम् ॥ ८३ ॥
मूलनालायितोविष्णु सुरशाखिवरस्य च ॥
विशाखाद्या स्मृता शाखास्ततो विष्णुमुपास्महे ॥ ८४ ॥

पुरुषोत्तमही है ॥७७॥ उन सनातनको स्कंदरूपसों पूजन करवेवारे तुम बी स्कदलोकको पायकें अच्छी गतिकों जावोगे ॥ ७८ ॥ एसे आचार्यनके वचननकों सुनके वे प्रसन्न मन होयके बहुत ठीक बहुत ठीक एसी स्तुति करवे लगे ॥ ७९ ॥ सत्य हे सत्यवादी आप हे हमारे गुरु हें हमको आपने तत्व दिखायो स्कदरूपधारण करवेवारे हरि हे ॥ ८० ॥ स्कदरूपसों हरिकी आपकी आज्ञासों नित्य पूजा करें गे ओर अविनाशी हरिकों पावेंगे ॥ ८१ ॥ उनमेंसों कोईनें कह्यो जो हरि सर्वात्मक हे तो उन्हीकी पूजा करेंगे ॥ ८२ ॥ वृक्षके मूलमें सींचवेसों जो शाखा तृप्त होयहे तो शाखाओंसींचवेमों कहा हे वृक्षको सींचनोही अच्छो हे ॥ ८३ ॥ देवता रूपशाखानके मूल जब विष्णु हें स्कद आदि शाखा हें यासों विष्णुहीकों

इत्युक्त्वाचार्य्यचरणौ गृहीत्वा शरणं गताः ॥
वर्णाश्रमाचारधर्मानाचार्येभ्यः प्रपेदिरे ॥
प्रणम्य च प्रशस्यैवं ते सर्वे स्वगृहान् ययुः ॥ ८५ ॥
आचार्य्याः प्रस्थितास्तस्माच्छ्रीशैलं प्रति सानुगाः ॥
श्रीशैलं समनुप्राप्य दृष्ट्वा श्रीमल्लकार्जुनम् ॥ ८६ ॥
कृतोपढौकिता नेमुश्चक्रुः क्षेत्रप्रदक्षिणम् ॥
औपासनंच निर्वर्त्य पूजयामास माधवम् ॥ ८७ ॥
पाकं समर्प्य देवाय भुक्त्वा तत्र यदा स्थिताः ॥
योगिनस्तत्र संप्राप्ता धृतभोगिकलेवराः ॥ ८८ ॥
भस्मना दिग्धसर्वांगाः शैवा विप्रविदस्तथा ॥
कश्चिदाह पुरस्तेषामाचार्याणां पुरः स्थितः ॥ ८९ ॥
के यूयं कुत आयाताः क्व यातारः क्व तिष्ठथ ॥
आचार्यास्तु तदा वाक्यं प्रहस्यैतज्जगुस्तदा ॥ ९० ॥

उपासना करेंगे ॥ ८४ ॥ ये कहके आचार्यनके चरणकमल धरकें शरण आये ओर वर्ण आश्रम के आचार धर्म सीखते भये ओर प्रणाम करकें प्रशंसा करकें सब अपने २ घरनकों गये ॥ ८५ ॥ श्रीमदाचार्य परिकरसमेत वहाँसों श्रीशैलकों गये वहाँ श्रीमल्लकार्जुनके दर्शन कर ॥ ८६ ॥ भेंट कर प्रणाम करकें क्षेत्रकी प्रदक्षिणा करते भये ओर औपासनसों निवृत्त होयकें भगवानकी सेवा कर॥८७॥ देवकों पाक अर्पण कर भोजन करकें जब विराजमान भये तबही सर्पनकों लियें योगी आये ॥८८॥ओर भस्मसों सब शरीरपोतें शैव ब्राह्मण विद्वान्भी आये उनमेंसों कोई एक आचार्यनके सामनें आयकें बोल्यो ॥ ८९ ॥ जो तुम कोन हो कहाँसों आये कहाँ जावोगे कहाँ ठाडे हो तब आचार्य हँसकें बोले ॥ ९० ॥

वय तु ब्राह्मणा ब्रह्मनीवृत्त समुपागता ॥
ब्रह्मैव पुनरेष्यामो नित्य ब्रह्मनिवासिन ॥ ९१ ॥
भोगिकायस्तदा प्राह वयं योगप्रभावत ॥
गधर्वयक्षवेतालसिद्धलोकान् व्रजामहे ॥ ९२ ॥
आचार्यास्तु तदा प्राहु किमाभि क्षुद्रसिद्धिभि ॥
येषां स्वर्गेऽपवर्गेपि न स्पृहा जायते हृदि ॥ ९३ ॥
अणिमाद्या महत्यो या योगीन्द्रैरपि वांछिता ॥
ता स्वयं समनुप्राप्ता ये न पश्यति चक्षुपा ॥ ९४ ॥
तेषां श्रीहरिभक्तानां किं नस्ते क्षुद्रसिद्धिभि ॥
पदवाक्यप्रमाणेषु वद सिद्ध्याऽसि गर्वित ॥ ९५ ॥
शेषभट्टस्तदा प्राह ह्याचार्याणां पुरस्तव ॥
सिद्ध्यो न समेष्याति सिद्धश्चेद्याहि केतनम् ॥ ९६ ॥

जो हम ब्राह्मण हैं ब्रह्मदेशसों आये हैं ब्रह्महीकों जायेंगे ब्रह्महीमें वसे हैं ॥ ९१ ॥ तब सर्पधारी बोल्यो जो हम योगके प्रभावसों गधर्व यक्ष वेताल सिद्ध इनके लोकनकों जॉय हैं ॥ ९२ ॥ तब आचार्य बोले जो इन क्षुद्रसिद्धीनसों कहा है जिनके हृदयमें कभी स्वर्गमोक्षकीभी इच्छा नहीं रहे है ॥ ९३ ॥ जिनकी बडे २ योगी इच्छा करे हैं वे अणिमादिक बडी सिद्धि अपने आप प्राप्त होंय हैं तो बी नेत्रसों उनकों नहीं देखें हैं ॥ ९४ ॥ एसे हरिभक्तनकों तुम्हारी क्षुद्रसिद्धीनसों कहा है ओर जो सिद्धिको अहंकार राखो हो तो पद वाक्य प्रमाणमें कछु बोलो ॥ ९५ ॥ तब शेषभट्ट बोले जो आचार्यनके सामने तुम्हारी सिद्धि नहीं चलेगी सिद्ध होवो तो स्थानकों जावो ॥ ९६ ॥ तब वो बड़ो क्रोध करकें अपने मनुष्यनके संग उठ्यो ओर जायवेकों बडो यत्न

स तदा क्रोधमुन्निन्ये निजैः सह समुत्थितः ॥
गंतुं प्रयतमानोपि भग्नयत्नोऽपतद्भुवि ॥ ९७ ॥
दंडवत्प्रणिपत्याह वयं शंभुगणाः प्रभो ॥
क्षंतव्या अनुकंप्याश्च महद्भिस्तु भवादृशैः ॥ ९८ ॥
शेषभट्टस्तदा प्राह गच्छ गच्छ यथासुखम् ॥
गुरूणां पादयोर्नत्वा मुच्यते संसृतेरपि ॥ ९९ ॥
ततस्तु स गतः सिद्धो वृद्धः शिष्यजनैः सह ॥
विदो विप्राः प्रणम्याथ शिष्यत्वं समुपागताः ॥ १०० ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते संमिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिंस्तृतीये समजनिपटहश्चैषआद्योजयाख्ये॥ १०१॥



कियो तो बी जमीन पे गिर पड्यो ॥ ९७ ॥ ओर दंडवत् प्रणाम करकें बोल्यो जो हम महादेवके गण हें हे प्रभो क्षमा करो ॥ ९८ ॥ तब शेष-भट्ट बोले जो जावो २ सुखसों गुरूनके चरणनकों नमस्कारकर संसारसोंबी मुक्त होयजाँय हें ॥ ९९ ॥ तब वो वृद्ध अपने शिष्यनके संग गयो ओर वहाँके विद्वान् ब्राह्मण प्रणाम करकें शिष्य होते भये ॥ १०० ॥ समय-नीतिके जाननेवारे जगद्गुरु श्रीगोविन्दाचार्यजी महाराजकी आज्ञासों कृष्ण-शास्त्रीके बनाये भये श्रीमद्वेदव्यासविष्णुस्वामिसम्प्रदायके ग्रन्थनके अनुकूल हरिभक्तनके सुख देवेवारे या श्रीमदाचार्यचरित्रग्रन्थके तीसरे प्रस्थानमें ये प्रथम पटह समाप्त भयो ॥ १०१ ॥



गुरस परमानंदास्तत प्रचलिता शनैः ॥
पाठयंतश्च शास्त्राणि त्रिपतिग्राममाययु ॥ १ ॥
गोविन्दस्वामिन तत्र दृष्ट्वा नत्वा कृतार्चना ॥
स्नात्वा कपिलधारायां शेषाचलमथारुहन् ॥ २ ॥
ततो वेदाचल जग्मुरितोऽथ गरुडाचलम् ॥
वृषभाचलमारुह्यांजनाचलमुतारुहन् ॥ ३ ॥
नारायणाचल प्राप्यावतीर्णा व्यंकटाचलम् ॥
अधित्यकायां तस्याऽपि क्षेमकरतरोरध ॥ ४ ॥
उपविष्टा वेदिकायां सस्नुश्चक्रुर्निजाह्निकम् ॥
श्रीलक्ष्मणप्रभो श्रुत्वा तदाचार्याश्च सेवका ॥ ५ ॥
आयाताञ्छ्रीमदाचार्यानभिनेतुं समागता ॥
शंखघंटादिनिनदैर्गद्यपद्यजयस्वनै ॥ ६ ॥
चामरव्यजनच्छत्रैर्नीता स्वाचार्यवर्त्मना ॥
प्रणेमुर्व्यंकटाधीश दृष्ट्वा कृत्वोपढौकितम् ॥ ७ ॥

पीछें परमानन्दस्वरूप आप वहाँसों धीरें २ चल्ते शास्त्रनकों पढावते त्रिपतिग्राममें आये ॥ १ ॥ वहाँ गोविन्दस्वामीके दर्शन नमन अर्चन ओर कपिलधारामें स्नान करकें शेषाचलमे चढे ॥ २ ॥ सो वेदाचल गरुडाचल वृषभाचल अजनाचल ॥ ३ ॥ नारायणाचल इन पर्वतनपे चढकं व्यंकटाचलपे उतरे ओर वाके उपरकी भूमिमें क्षेमकरवृक्षके नीचे ॥ ४ ॥ वेदीके ऊपर विराजे ओर स्नान करकें आह्निककर्म कियो तब श्रीलक्ष्मणप्रभुके आचार्य तथा सेवक सुनकें ॥ ५ ॥ आये भये श्रीमदाचार्यकों लेवेके लियें आये ओर शख घटा आदिके शब्दसों गद्यपद्यके जय जय शब्दसों ॥ ६ ॥ चामर पखा छत्र इनसों अपने आचार्यनकी रीतिसों आपको पधराये ओर

नैवेद्यं कारयामासुः स्नानं पूजांशुकादिकम् ॥
तीर्थं प्रसादं जगृहुस्तीर्थयात्रां तथा व्यधुः ॥ ८ ॥
मधुद्विषो मुदे तत्र चक्रुः पारायणं श्रुतेः ॥
श्रीमद्भागवतस्यापि कथासत्रं कृतं महत् ॥ ९ ॥
तेन श्रीलक्ष्मणेशस्य प्रीतिः प्रत्ययदाभवत् ॥
व्यंकटाद्रेः परस्तात्तु धारां पातकहारिणीम् ॥ १० ॥
मूर्ध्नां विमलपानीयमूद्वासस्तुः पृथक् पृथक् ॥
इंदिरामलवालंबां स ददर्शानुगैस्ततः ॥ ११ ॥
अहोबलनृसिंहं च परस्ताद्ददृशुर्गताः ॥
परावृत्यागतास्तस्माल्लब्ध्वाऽनुज्ञां हरेरथ ॥ १२ ॥
कामकोष्णीं समायाताः प्रेमधूरीं ततो गताः ॥
तत्राहुः परमानंदाचार्याः कांचीनिवासिनः ॥ १३ ॥
विष्णुस्वामिप्रभोरत्र तृतीयस्य जनिः शुभा ॥
श्रीसंप्रदायाचार्यस्य रामानुजमुनेरपि ॥ १४ ॥

आप व्यंकटाधीशकों प्रणाम दर्शन भेट करकें ॥ ७ ॥ स्नान पूजा वस्त्र आदि करायकें नैवेद्य करावते भये ओर तीर्थ चरणामृत प्रसाद लेकें तीर्थयात्रा करते भये ॥ ८ ॥ ओर श्रीहरिकी प्रसन्नताके लियें वेदको पारायण श्रीमद्भागवतको पारायण एसो बडो कथायज्ञ कियो ॥ ९ ॥ तामें श्रीलक्ष्मणबालाजीकी प्रीति परिचयके देवेवारी भई ओर वा पर्वतसों आगे पापनाशिनी गंगाकों गये ॥१०॥ ताकी विमलधारा मस्तकपे लेकें स्नान कियो पीछें अलंवालम्बा लक्ष्मीके ओर अहोबलनृसिंहके दर्शन करक पीछे आये फेर भगवान्‌की आज्ञा लेकें ॥ ११ ॥ १२ ॥ कामकोष्णीकों आये वहांसों प्रेमधुरी गये वहाँ कांचीके निवासी परमानंद आचार्यने कह्यो जो काञ्ची निवासी तीसरे विष्णुस्वामीजी ओर श्रीसम्प्रदायके

संभूतिस्तेन विख्यातो भूतिग्रामोयमेव हि ॥
तत्रत्यै पूजिताचार्यै कांचीं प्रति ततो गता ॥ १५ ॥
नित्य पुण्यजनाकीर्णां वृषाकप्यो प्रियां पुरीम् ॥
सप्ततंतो शतधृतेर्मिपत्स्वनिमिपेषु च ॥ १६ ॥
प्रादुर्भूतो हरिर्यत्र श्रीहस्तगिरिनायकः ॥
एकाम्बरेश्वर तत्र शिवकांच्यां महेश्वरम् ॥ १७ ॥
सुरासुरशिरोरत्नैर्नीराजितमनीनमन् ॥
गगाधर प्रसाद्यैव समर्हणसमर्पणे ॥ १८ ॥
नदीं वेगवतीं नत्वा कृत्वा तीर्थविधिं पुन ॥
विष्णुकाञ्च्यामनुप्राप्ता निविष्टाश्च शमेरध ॥ १९ ॥
द्रष्टु श्रीवरदेशांघ्री यद्यप्युत्कंठिताश्चिरात् ॥
तथापि नाचलञ्छ्रुत्वाऽष्टपद्यांकितपद्धतिम ॥ २० ॥

रामानुजाचार्यजीकी ये जन्मभूमि हे ॥ १३ ॥ १४ ॥ याहीसों याको नाम भूतिग्राम पर्‍यो हे पीछें वहाँके आचार्यनसों पूजा किये गये काञ्चीकों गये ॥ १५ ॥ जो पुण्यात्माजननसों व्याप्त हे हरिहरकी प्यारी पुरी हे जहाँ ब्रह्माके यज्ञमें देवनानके देखतें ॥ १६ ॥ श्रीहस्तपर्वतके नायक श्रीवरदराज हरि प्रगट भये हे यहाँ शिवकाञ्चीमें एकाम्बरेश्वर महादेवजी ॥ १७ ॥ जिनकी देवदैत्यनके मस्तकरूपीरत्ननसों नीराजना होयहे उनकों नमन कर भेट आदिके अर्पणसों उनकों प्रसन्न कर ॥ १८ ॥ वेग वती नदीका नमस्कार कर तीर्थविधि कर विष्णुकाञ्चीमें आये ओर शमीवृ क्षके तल विराजे ॥१९॥ यद्यपि श्रीवरदराजजीके चरणनके देखवेकी बहुत दिनासों उत्कठाही तोभी अष्टपदीसो चिन्हितभई सीढीनकों सुनके न पधारे२०

तद्धर्मसंकटे तप्ता दधुस्तं श्रीहरिं हृदि ॥
अपृच्छत् कारणं व्यक्तोनिश्यसावववदंस्तु ते ॥ २१ ॥
न चोल्लंघति नाम्नाऽपि सरितं यः सरस्वतीम् ॥
सोल्लंघति कथं साक्षाद्भवत्कीर्तिसरस्वतीम् ॥ २२ ॥
श्रुत्वैतद्भगवानाह विष्णुस्वामिमतानुगः ॥
जयदेवोवसदिह तेन चित्ते विचिंतितम् ॥ २३ ॥
कीर्तिकायोऽक्षरैर्नद्धो नित्त्यस्स्यादिति सोऽकरोत् ॥
स्तोत्रात्मना भक्तपद्मां सोपानालिं समाश्रितम् ॥ २४ ॥
मया पूर्वमपूर्वं ते भावं चित्ते विजानता ॥
गीतगोविंदगीतालिस्तद्भित्तिषु निवेशिता ॥ २५ ॥
अतः सुखेनागंतव्यं मंतव्यं वचनं मम ॥
युष्मास्वहं सदा प्रीतोवशन्नीतो भवादृशैः ॥ २६ ॥
विष्णुस्वामिमुखैः प्रत्नैः संप्रदायप्रवर्तकैः ॥
लालितो भवदाचार्यैर्धाम चाप्यावितं मम ॥ २७ ॥

ओर वा धर्मसंकटमें तप्त होयकें हृदयसों हरिको ध्यान कियो तव हरिनें रातमें प्रगट होयकें आपसों न पधारवेको कारण पूँछ्यो तव आपनें कह्यो ॥ २१ ॥ जो जानें नामकीवी सरस्वती नदीकों नहीं नाँघी वो आपकी साक्षात्कीर्तिरूपी सरस्वतीको कैसे नाँघे ॥ २२ ॥ ये सुनकें भगवान् बोले जो विष्णुस्वामि संप्रदायके जयदेव यहाँ वसते हे उननें चित्तमें विचाऱ्यो ॥ २३ ॥ जो अक्षरनसों बँध्यो कीर्तिरूपी शरीर नित्य रहे यासों उननें कियो हे स्तोत्ररूपीशरीरसों भक्तनके चरणनमें पडें यासों सीढीनमें लिख्यो ॥ २४ ॥ सो अब अपूर्वभाव आपके चित्तको जानकें गीतगोविन्दकी पंक्तीनकों भीतमें कर दीनी हें ॥ २५ ॥ यातें सुखसों आवो हमारे वचननकों मानों हम आपसों सदा प्रसन्न हें आपनें मोकों वशमें कर लियो हे ॥ २६ ॥ विष्णु-

इत्युक्त्वांतर्भतो विष्णुरार्याश्चोपसि प्रोत्थिता ॥
कृत्वाह्निकं समुचित दर्शनार्थं द्रुत गता ॥ २८ ॥
तत्रत्याचार्यपुरुषा आचार्याणां समागमम् ॥
श्रुत्वाचार्यविधानेनोपाधारयितुमागता ॥ २९ ॥
श्रीमद्वरदराज त हस्तागाधित्यकाश्रितम् ॥
आचार्या सानुगा दृष्ट्वा नेमु सोपायना प्रभुम् ॥ ३० ॥
कृत्वा स्तोत्रवरं तस्य नैवेद्य कारयन हरे ॥
तीर्थं च प्रायण चास्मिन् प्रसाद्याध समागता ॥ ३१ ॥
तीर्थयात्रां विधायास्य वेदपारायण तथा ॥
श्रीभागवतशास्त्रस्याऽरभन् पारायणाध्वरम ॥ ३२ ॥
चक्रवर्तिनृसिंहार्यशिष्यास्तत्र समागताः ॥
विवादाय तथा नीलकंठाचार्यमताऽनुगा ॥ ३३ ॥
तेभ्यो दत्वासन विद्भ्योनतिं कृत्वोपवेशयन् ॥
तैर्वैदितास्स्तुताश्चाह्नुर्भवन्मतमुदीर्यताम् ॥ ३४ ॥

स्वामि आदि सम्प्रदायके प्रवर्तक आपके आचार्यन ने हमारो लालन कियो हे ओर हमारे धामकी रक्षा करी हे ॥ २७ ॥ ये कहके विष्णु अन्तर्धान होपगये तब श्रीमदाचार्यजी सवेरे उठके आह्निक करके जल्दीसों दर्शनके लिये गये ॥ २८ ॥ सो वहाँके आचार्यनके मनुष्य श्रीमदाचार्यको समागम सुनके आचार्यनकी रीतसों पधरायवेके लिये आये ॥ २९ ॥ श्रीमदाचार्य अपने शिष्यनके सहित श्रीवरदराजप्रभुके दर्शन करके भेटके सहित प्रणाम करते भये ॥ ३० ॥ ओर स्तुति करके नैवेद्य करायके तीर्थ नैवेद्य लेके उनको प्रसन्न करके नीचे आये ॥ ३१ ॥ तीर्थयात्राकरके वेदको पारायण कियो ओर श्रीमद्भागवतके पारायणको प्रारम्भ कियो ॥ ३२ ॥ वहाँ चक्रवर्ती नृसिंहार्यके शिष्य ओर नीलकंठाचार्यके मतानुयायी विवाद करवेकों आये ॥ ३३ ॥ उनकों आसन देके नमस्कार करके वेठावते भये ओर उनसों मम

ते समूचुस्ततोगर्वगरिष्ठं प्रथमं वचः ॥
विशिष्टाद्वैतमस्माकं मतं सिद्धाततः पृथक् ॥ ३५ ॥
नारायणः परो देवोऽपरो देवो महेश्वरः ॥
जीवाः परात्मनो भिन्ना बंधो मायाकृतः प्रभो ॥ ३६ ॥
तस्योपासनया मुक्ता भवंतीति द्वयोर्मतम् ॥
किमत्र शंक्यतेऽस्माकं मते तदभिधीयताम् ॥ ३७ ॥
श्रूयतामाह तत्रार्यः वैशिष्टयं कस्य कुत्र भोः ॥
ब्रह्मैवेदं जगत्सर्वमित्यादिश्रुतिबाधितम् ॥ ३८ ॥
तत्राह वैष्णवाचार्योन्तर्यामिब्राह्मणादिदम् ॥
चिदचिद्वस्तुनोस्तत्त्वे वैशिष्टयं प्रतिपाद्यते ॥ ३९ ॥
तत्राहुः श्रीमदाचार्या मुख्या व्याप्तिस्तदात्मनः ॥
मृत्सुवर्णादिदृष्टांतैर्दर्शितोद्दालकेन सा ॥ ४० ॥
प्रतिवादी पुनः प्राह व्याप्यव्यापकयोर्भिदा ॥
मानसिद्धा तथा कार्यात्कारणस्यापि सा न किम् ॥ ४१ ॥

स्कार किये गये आप बोले जो अपने मतको कहो ॥ ३४॥ तब वे अहंकारपूर्वक बोले जो विशिष्टाद्वैत हमारो मत है ॥ ३५ ॥ नारायण प्रधान देवता हैं अप्रधान महेश हैं जीव परमात्मासों भिन्न हैं संसार मायाकृत है ॥ ३६ ॥ नारायणकी उपासनासों मुक्त होते हैं ये दोनोंनको मत है यामें कहा शंका करो हो सो कहो ॥ ३७॥ तब श्रीमदाचार्यबोले जो सुनो वैशिष्टयकाकी कामेहे "ब्रह्मैवेदं जगत् सर्वम्" या श्रुतिसों बाधितहे ॥ ३८ ॥ तब वे बोले "अन्तर्यामिब्राह्मणात्" या श्रुतिसों चित् अचित्वस्तुको तत्वमें वैशिष्टय हे ॥ ३९॥ तब श्रीमदाचार्यबोले जो मुख्यव्याप्ति आत्माकी हे मृत्तिका सुवर्ण आदि दृष्टान्तनसों उद्दालकऋषिनें दिखायो हे॥ ४०॥ प्रतिवादी फिर बोल्यो

तत्राचार्यो जगुर्भूय शृणुध्व वचन मम ॥
यौक्तिकानां च मानानां सूत्रसिद्धा प्रतिष्ठिता ॥ ४२ ॥
नेहनानेत्यादिवाक्ये सा श्रुतावतिनिंदिता ॥
तस्मान्न भेदगधोपि व्यासपादैर्निरूप्यते ॥ ४३ ॥
शैवाचार्यस्तदा प्राह पृथगात्मेति या श्रुति ॥
विस्मृता व्यासपादेन किं वा न स्मर्यते हि वः ॥ ४४ ॥
अस्माक दर्शने जीवा पशव सप्रकीर्तिता ॥
तेषां पतिर्महेशान पाशो मायानिबंधन ॥ ४५ ॥
पाशविच्छित्तये योग साक्षात्पाशुपतो महान् ॥
जीवेशयोस्ततो भेदश्चाभेदस्त्स्मृतिलक्षण ॥ ४६ ॥
वभाषिरे तदाचार्यो पृथगात्मेति या श्रुति ॥
सा भक्त्या मुक्तिमाख्याति नाभेद दूषयत्यलम् ॥ ४७ ॥
उपक्रमोपसहाराभ्यामभेदस्य साधनात् ॥
तत्रैवान्यत्र च तया श्रुतियुक्तिशत ब्रुवे ॥ ४८ ॥

जो व्याप्यव्यापकके भेदसों कार्य सो कारणको भेद क्यो नहीं ॥ ४१ ॥ तब श्रीम दाचार्य फिर बोले जो सुनो युक्तिरूपप्रमाणनको मान सूत्रसिद्ध हे ॥ ४२ ॥ "नेहनानास्ति" इत्यादि वाक्यनसों श्रुतमें वो निन्दित हे यासों भेदको गन्धभी नहीं हे ये व्यासजीनें निरूपण किया हे ॥ ४३ ॥ तब शैवाचार्य बोले जो "पृथगात्मा" या श्रुतिको व्यासजी भूल गये हें कहा आप स्मरण नहीं करते ॥ ४४ ॥ हमारे शास्त्रम जीवनकी पशु सज्ञा हे उनके पति महादेवहें बन्ध मायासों हे ॥ ४५ ॥ बन्धनके नाशके लिये महान पाशुपत योग हे जीवईश को भेद हे चेतन्यलक्षण अभेद हे ॥ ४६ ॥ तब श्रीमदाचार्य बोले जो पृथ गात्मा ये जो श्रुति हे वो भक्तिसों मुक्तिकों कहे हे अभेदको दूषित नहीं करे हे ॥ ४७ ॥ उपक्रम उपसहारसो अभेदके साधनसों वहाँ ओर दूसरी जगह सो

तत्र श्रुतिशतं प्राहुर्नानाविच्छित्तिमंडितम् ॥
पुनराहुस्तथाचार्याः स्वतंत्रं हि भवन्मतम् ॥ ४९ ॥
व्यासैः पत्युरसामंज्यस्यादित्यत्र निराकृतम् ॥
व्याख्यानेच कृते तस्य जहसुर्वैष्णवोत्तमाः ॥ ५० ॥
सेर्ष्याः शैवास्तद्दिशंतोजगुरीशमहेशताम् ॥
शैवागमानां प्रामाण्यं तदाचारस्य चोन्नतिम् ॥ ५१ ॥
तत्र भागवताः प्राहुस्तैः साकं कलहं गताः ॥
तदागमतदाचारतदीशानामनर्हताम् ॥ ५२ ॥
परस्परं कलकले जायमाने महत्तरे ॥
मध्यस्थास्तु तदा स्मार्त्ताः शांतयित्वेदमब्रुवन् ॥ ५३ ॥
ब्रुवंतु श्रीमदाचार्याः शिवकेशवयोरिह ॥
जीवतेश्वरता कस्य कस्य नेत्यनयोर्भ्रमे ॥ ५४ ॥
गुरवस्तु तदा प्राहुर्ब्रुवे कस्य मतादहम् ॥
शैववैष्णवयोरत्र विवादोऽनादिरेव हि ॥ ५५ ॥

श्रुति ओर युक्ति कहे हें ॥ ४८ ॥ वहाँ अभेदके मंडनकी सौ श्रुति पढीं ओरवी श्रीमदाचार्यजीनें कह्यो जो तुम्हारे मतको ॥ ४९ ॥ "पत्युरसामंज्य स्यात्,, या सूत्रमें व्यासजीनें निराकरण कियो हे ओर याके व्याख्यान करवे पे वैष्णव हँसे ॥ ५० ॥ तब ईर्षासों भरे शैव महादेवकी प्रधान ईशता शैवदर्श-ननकी प्रामाणिकता ओर अपने आचारकी उन्नतिकों दिखावते बोले ॥ ५१ ॥ ओर उनके शास्त्रनको आचारनको उनके ईशको अयोग्य ठहरावते उनसों लड़ते वैष्णव बी बोले ॥ ५२ ॥ परस्पर बड़ो कोलाहल होयवे पे मध्यस्थ स्मार्त दोनोनको शान्त करकें ये बोले ॥ ५३ ॥ जो श्रीमदाचार्य आज्ञा करें शिवकेशवके मध्यमें कोनको जीवपनो ओर कोनको ईश्वरपनो हे ॥ ५४ ॥ तब आप बोले जो कोनके मतसों कहें शैव वैष्णवनको विवाद तो अनादि हे ॥ ५५ ॥

तत्राचार्यो जगुर्भूय शृणुध्व वचन मम ॥
यौक्तिकाना च मानानां सूत्रसिद्धा प्रतिष्ठिता ॥ ४२ ॥
नेहनानेत्यादिवाक्ये सा श्रुतावतिनिंदिता ॥
तस्मान्न भेदगंधोपि व्यासपादैर्निरूप्यते ॥ ४३ ॥
शैवाचार्यस्तदा प्राह पृथगात्मेति या श्रुति ॥
विस्मृता व्यासपादेन किं वा न स्मर्यते हि व ॥ ४४ ॥
अस्माक दर्शने जीवा पशव सम्प्रकीर्तिता ॥
तेषां पतिर्महेशान पाशो मायानिबंधन ॥ ४५ ॥
पाशविच्छित्तये योग साक्षात्पाशुपतो महान् ॥
जीवेशयोस्ततो भेदश्चाभेदस्स्मृतिलक्षण ॥ ४६ ॥
बभाषिरे तदाचार्या पृथगात्मेति या श्रुति ॥
सा भक्त्या मुक्तिमाख्याति नाभेद दूषयत्यलम् ॥ ४७ ॥
उपक्रमोपसहाराभ्यामभेदस्य साधनात् ॥
तत्रैवान्यत्र च तथा श्रुतियुक्तिशत ह्युषे ॥ ४८ ॥

जो व्याप्यव्यापकके भेदसों कार्य सों कारणको भेद क्यों नहीं ॥ ४१ ॥ तब श्रीम दाचार्य फिर बोले जो सुनो युक्तिरूपप्रमाणनको मान सूत्रसिद्ध है ॥ ४२ ॥ "नेहनानास्ति" इत्यादि वाक्यनसों वेदमें वो निन्दित है यासों भेदको गन्धभी नहीं है ये व्यासजीनें निरूपण कियो है ॥ ४३ ॥ तब शैवाचार्य बोले जो "पृथगात्मा" या श्रुतिको व्यासजी भूल गये हैं कहा आप स्मरण नहीं करते ॥ ४४ ॥ हमारे शास्त्रमें जीवनकी पशु संज्ञा है उनके पति महादेव हैं बन्ध मायासों है ॥ ४५ ॥ बन्धनके नाशके लिये महान् पाशुपत योग है जीवईश्वरको भेद है चैतन्यलक्षण अभेद है ॥ ४६ ॥ तब श्रीमदाचार्य बोले जो पृथगात्मा ये जो श्रुति है वो भक्तिसों मुक्तिकों कहे है अभेदको दूषित नहीं करे है ॥ ४७ ॥ उपक्रम उपसंहारसों अभेदके साधनसों यहाँ और दूसरी जगह सो

तत्र श्रुतिशतं प्राहुर्नानाविच्छित्तिमंडितम् ॥
पुनराहुस्तथाचार्याः स्वतंत्रं हि भवन्मतम् ॥ ४९ ॥
व्यासैः पत्युरसामंज्यस्यादित्यत्र निराकृतम् ॥
व्याख्यानेच कृते तस्य जहसुर्वैष्णवोत्तमाः ॥ ५० ॥
सेर्ष्याः शैवास्तद्दिशंतोजगुरीशमहेशताम् ॥
शैवागमानां प्रामाण्यं तदाचारस्य चोन्नतिम् ॥ ५१ ॥
तत्र भागवताः प्राहुस्तैः साकं कलहं गताः ॥
तदागमतदाचारतदीशानामनर्हताम् ॥ ५२ ॥
परस्परं कलकले जायमाने महत्तरे ॥
मध्यस्थास्तु तदा स्मार्त्ताः शांतयित्वेदमब्रुवन् ॥ ५३ ॥
ब्रुवंतु श्रीमदाचार्याः शिवकेशवयोरिह ॥
जीवतेश्वरता कस्य कस्य नेत्यनयोर्भ्रमे ॥ ५४ ॥
गुरवस्तु तदा प्राहुर्ब्रुवे कस्य मतादहम् ॥
शैववैष्णवयोरत्र विवादोऽनादिरेव हि ॥ ५५ ॥

श्रुति ओर युक्ति कहे हें ॥ ४८ ॥ वहाँ अभेदके मंडनकी सौ श्रुति पढीं ओरबी श्रीमदाचार्यजीनें कह्यो जो तुम्हारे मतको ॥ ४९ ॥ "पत्युरसामंज्य स्यात्" या सूत्रमें व्यासजीनें निराकरण कियो हे ओर याके व्याख्यान करवे पे वैष्णव हँसे ॥ ५० ॥ तब ईर्षासों भरे शैव महादेवकी प्रधान ईशता शैवदर्शननकी प्रामाणिकता ओर अपने आचारकी उन्नतिकों दिखावते बोले ॥ ५१ ॥ ओर उनके शास्त्रनको आचारनको उनके ईशको अयोग्य ठहरावते उनसों लड़ते वैष्णव बी बोले ॥ ५२ ॥ परस्पर बड़ो कोलाहल होयवे पे मध्यस्थ स्मार्त दोनोनको शान्त करकें ये बोले ॥ ५३ ॥ जो श्रीमदाचार्य आज्ञा करें शिवकेशवके मध्यमें कोनको जीवपनो ओर कोनको ईश्वरपनो हे ॥ ५४ ॥ तब आप बोले जो कोनके मतसों कहें शैव वैष्णवनको विवाद तो अनादि हे ॥ ५५ ॥

वयं च वैष्णवास्तत्र विष्णोरुत्कर्षदर्शिन ॥
तथ्य ब्रूतेति व प्रश्ने ब्रुवे वेदांतदर्शनात् ॥ ५६ ॥
उभयोरीशितैवास्ति प्रमाणंचोभयागमम् ॥
अधिकारानुसारेण रुच्याचारोऽपि संमत ॥ ५७ ॥
वैदिकैर्वैदिकाचारान्निर्गुणोय स सेव्यते ॥
स्वस्वाभेदाभिदामुक्तिस्तत्तद्भक्त्याभिजायते ॥ ५८ ॥
निर्दोषपूर्णगुणता द्वयोरस्मन्मतेशयो ॥
इत्युक्ते श्रीमदाचार्ये स्मार्ता साध्विति चाब्रुवन् ॥ ५९ ॥
गर्जतो वैष्णवा शैवा विवदंतोबहिर्गता ॥
पारायणं समाप्यैव ह्याचार्या प्रसृतास्तत ॥ ६० ॥
गच्छन्त सगवे नित्य मध्ये माध्यान्हिकीं क्रियाम् ॥
चरतश्चाययु पक्षितीर्थं ते योजनद्वयम् ॥ ६१ ॥
तत्र पूपाविधाताख्यो गृध्रौ शापवशानुगौ ॥
यच्छतोदर्शन पुण्यवद्भ्य क्षीराज्यभोजिनो ॥ ६२ ॥

तामें विष्णुके उत्कर्ष दिखावनेवारे हम वैष्णव हैं तुम कहो हो सत्य कहो सो या तुह्मारे प्रश्नमें वेदान्तसों कहें हैं ॥ ५६ ॥ दोनोंही ईश हैं दोनोंहीके शास्त्र प्रमाण हैं अधिकारके अनुसार रुचिसों आचार यी दोनोंको प्रमाण है ॥ ५७ ॥ वैदिक वैदिकाचारसों निर्गुणकी सेवा करें हैं भेदअभेदसों उनकी भक्तिसों मुक्ति कहें हैं ॥ ५८ ॥ हमारे मतमें निर्दोषपूर्णगुणता दोनोंहीको है श्रीमदाचार्यके एसे कहवे पे स्मार्तननें कह्यो जो बहुत उत्तम है ॥ ५९ ॥ वैष्णव शैव विवाद करते गर्जते बाहेर गये ओर श्रीमदाचार्य पारायण समाप्तकरके वहाँसों चले ॥६०॥ सो नित्य प्रातःकालकेआह्निकके पीछें तीन मुहूर्त तक चलते मध्यमें माध्याह्निककी क्रिया करते एसे दोयोजन (आठकोश) नित्यचलते पक्षि तीर्थमें आये ॥ ६१ ॥ जहाँ शापसों भये पूषा

निर्वृत्यैव च तद्यात्रां कथयित्वा तयोः कथाम् ॥
ततः प्रचलिताभूयश्चिदंबरमुपाययुः ॥ ६३ ॥
आकाशलिंगरूपं तं सद्यः प्रत्ययदायकम् ॥
महेशं दृष्टवंतस्ते प्रणेमुः सोपढौकितम् ॥ ६४ ॥
अर्चनं कारयामासुः स्तुतिं चक्रुर्महेशितुः ॥
पुरारिर्गुरुरस्माकं विजयस्व जगत्पते ॥ ६५ ॥
क्षपयंतः क्षपां तत्र कथांतेऽकथयन् कथाम् ॥
गुरवः शंकरार्यस्य जयिनो वेदविद्द्रुहाम् ॥ ६६ ॥
इहासीद्ब्राह्मणः कश्चित्सर्वज्ञश्च तपोधनः ॥
तस्य भार्यापि कामाक्षी जितकामा पतिव्रता ॥ ६७ ॥
ताभ्यां प्रसादितो देवः स्वयमेव चिदंबरः ॥
तुष्टः कन्यां ददौ ताभ्यां विशिष्टा नामरूपतः ॥ ६८ ॥
शिष्टैः संमानिता साध्वी विशिष्टगुणशालिनी ॥
पूर्णाख्या सरितः कालत्यग्रहारे द्विजन्मने ॥ ६९ ॥

विधाता नामके गीध हैं जो दूधघृतको भोजन करत हैं पुण्यात्मानको दर्शन देत हैं ॥ ६२ ॥ ताकी यात्रा करकें उनदोनोंनकी कथा कहकें फिर वहाँसों चले सो चिदम्बरकों आये ॥ ६३ ॥ वहाँ जल्दी परिचयदेवेवारे आकाश-लिंग महादेवके दर्शन कर भेंट सहित प्रणाम करते भये ॥ ६४ ॥ ओर पूजा करायकें स्तुति करी जो हमारेगुरुमहादेवपुरारि हैं तासों हे जगत्पते तुम्हारो विजय होय ॥ ६५ ॥ पीछें नित्य कथाके वाद वेदविरोधीनके जयकरवेवारे शंकराचार्यकी कथा कहते रातकों विताते बोले जो ॥ ६६ ॥ यहाँ एक सर्वज्ञ तपोधन ब्राह्मण हे उनकी कामकों जीतवेवारी पतिव्रता कामाक्षी नाम-की स्त्री ही ॥ ६७ ॥ उन दोनोंस्त्रीपुरुषननें इन्हीं चिदम्बर महादेवको प्रसन्न कियो सो प्रसन्न होयकें इननें उनको नामरूपसों विशिष्टा नामकी कन्या-दीनी ॥ ६८ ॥ विशेषगुणवारी साध्वी वा कन्याकों पूर्णानदीके पास कोई

लब्धुरिद्रविडायैषा दत्ता विश्वजिते सती ॥
स तां चिदम्बरे सक्तां विरक्तां विषयांतरे ॥ ७० ॥
विरक्तः सोपि विषये त्यक्त्वैष विपिनं ययौ ॥
तस्या भक्त्या विरक्त्या च तुष्टोऽथ जगदीश्वरः ॥ ७१ ॥
माहात्म्यं निजपूजाया दर्शयन् जगतीतले ॥
आविशज्जृम्भमाणाया पूजाकाले स्वतेजसा ॥ ७२ ॥
पश्यतां विस्मयो जातस्सुराणां च नृणां मुखे ॥
देवानां कार्यसिध्यर्थमसुराणां क्षयाय च ॥ ७३ ॥
आम्नायानां च रक्षायै गर्भे श्रीशंकरोऽवसत् ॥
ससत्त्वा शुशुभे साध्वी विशिष्टा महसा प्रभो ॥ ७४ ॥
चक्रुः कृत्वाथ संस्कारं यजमानं द्विजा हरम् ॥
दशमे मासि सञ्जातः शंकरः शंकरः स्वयम् ॥ ७५ ॥
माधवे सितपञ्चम्यां गुरावाद्येश्वरे समे ॥
संस्कृतः पंचमे वर्षे सन्न्यस्तः सोष्टमे समे ॥ ७६ ॥

अग्रहारमें ॥ ६९ ॥ लम्बूरी प्रविड विश्वजित नामके ब्राह्मणको दीनी वो ब्राह्मण चिदम्बरमें आसक्त विषयनमें विरक्त ॥ ७० ॥ अपनी स्त्रीकों देखकें आप भी विषयनमें विरक्त होयकें वाकों छोड वनमें चल्यो गयो पीछें वाकी भक्तिसों चिदम्बर प्रसन्न भये ॥ ७१ ॥ ओर संसारमें अपनीपूजाके माहात्म्यको दिखावते पूजाके समय वाके जमुहाई लेते अपने तेजसों मुँहमें प्रवेश होयगये ॥ ७२ ॥ सो देखते भये देवता ओर मनुष्यनको बडो विस्मय भयो ओर जब देवनके कार्यसिद्धिके लियें असुरनके नाशके लियें ॥ ७३ ॥ वेदकी रक्षाके लियें गर्भमें श्रीशंकर बसे तब वो साध्वी विशिष्टा सगर्भा बडे तेजसों शोभती भई ॥ ७४ ॥ ताको पीछें ब्राह्मणनें महादेवको यजमान करकें संस्कार कियो ओर दशवें महीना आप शंकर उत्पन्न भये ॥ ७५ ॥ विक्रमादित्यसों चौर

श्रीमद्गोविंदयोगींद्राच्छुकस्वामिमतानुगात् ॥
स बाल एव पुरुषः कृतविद्यो महोदयः ॥ ७७ ॥
मध्यार्जुनाल्लब्धवरः शिष्यान् कृत्वा बहून् बुधान् ॥
कर्मतंत्रप्रणेतारं मिश्रं श्रीमंडनाभिधम् ॥ ७८ ॥
जित्वैव सपणं वादे शिष्यं चक्रे सुरेश्वरम् ॥
सुधन्वनः सहायेन पद्मपादमुखैर्निजैः ॥ ७९ ॥
बौद्धानुत्सार्य कापालिकादीन् पाषंडिनः परान् ॥
वर्णाश्रमाचारधर्मान् विष्णुमुख्यसुरार्चनम् ॥ ८० ॥
देशकालानुगुण्येनासद्वादं समघोषयत् ॥
वैदिकान् सकलानेकीकृत्य बौद्धान् विजित्य सः ॥ ८१ ॥
निर्माय ग्रंथान् शिष्यांश्च धृत्वा हरपुरं ययौ ॥
एवं शंकरचारित्रं कथयित्वाऽपराः कथाः ॥ ८२ ॥

हवे ईश्वर नामक सम्बत्सरमें वैशाख शुक्लपंचमीको प्रगट भये पाँचवे वर्षमें उपवीत भयो ओर आठवेमें सन्यासी भये ॥ ७६ ॥ शुकस्वामीजीकेमतके अनुयायी श्रीमद्गोविन्दयोगीन्द्रसों विद्या पायकें बालकहीवे बडे तेजसों शोभते भये ॥ ७७ ॥ ओर मध्यार्जुनसों वर पायकें बहोत विद्वाननकों शिष्य करकें कर्मतन्त्रके चलायवेवारे श्रीमंडनमिश्रकों बाजीके संग जीतकें शिष्य करकें सुरेश्वराचार्य ये नाम धन्यो ॥ ७८ ॥ ओर सुधन्वा नामके राजाकी सहायतासों अपनें शिष्य पद्मपादाचार्य आदिकनसों बौद्ध कापालादिक आदि पाखंडनकों निकासकें ॥ ७९ ॥ वर्णाश्रम धर्म आचार विष्णुआदिदेवनकी पूजा चलाई ओर देशकालके अनुसार असद्वादकी घोषणा करी ॥ ८० ॥ सब वैदिकनकों एक मत कर बौद्धनकों जीतकें ग्रन्थनकों बनायकें शिष्यनकों करकें कैलाशकों गये ॥ ८१ ॥ एसें शंकरके चारितकों कहकें ओर दूसरीवी कथा कहकें थोरो सोयकें प्रातःकाल अपनों

किंचित्सुप्तास्ततश्चक्रु प्रत्यूषे ते निजाह्निकम् ॥
प्रभाते प्रस्थितास्तस्माद्वैद्यनाथे समागता ॥ ८३ ॥
तत्र यात्राविधिं चक्रु शिवभक्तानतोषयन् ॥
श्रीवेदव्यासविष्णुप्रमुखचरणमिते सम्मिते ग्रन्थसार्थे
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णेनिबद्धे
प्रस्थानेऽस्मिंस्तृतीये समजनि पटहो दिग्जयाख्ये द्वितीय ८४

---

गौरमायूरमायाता शिखिनाभमहेश्वरम् ॥
दृष्ट्वा नत्वा च तत्क्षेत्रयात्रां कृत्वा ततोगता ॥ १ ॥
कुंभकोणं समासाद्य द्वादशेश्वरदर्शनम् ॥
चक्रपाणिमुखान् विष्णून् दृष्ट्वैव चतुरोऽव्यधु ॥ २ ॥
तत्र विप्रान् समायातान् वेदविद्याविशारदान् ॥
विद्यान्तरेषु कुशलान् विद्यया समतोषयन् ॥ ३ ॥

कृत्य करे ॥ ८३ ॥ चले सो वैद्यनाथको आये यहाँ तीर्थविधि करके शिवभक्तनको प्रसन्न कियो ॥ ८४ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्विद्यानन्दार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये भये श्रीमद्व्यास विष्णु स्वामीके मतके ग्रन्थनके अनुकूल या चरित्रग्रंथमें दक्षिण दिग्विजयमें तीसरे प्रस्थानमें दूसरो पटह समाप्त भयो ॥ ८४ ॥

---

यहाँसों गौरमायूरम आये शिखिनाभिमहादेवके दर्शन नमन कर या तीर्थकी यात्रा करके आगे चले ॥ १ ॥ सो कुम्भकोणको गये यहाँ बारह महादेवनके दर्शनकर चक्रपाणि आदि चार विष्णुमूर्तिनके दर्शन किये ॥ २ ॥ यहाँ वेदविद्याके पंडित और विद्यानमें कुशल जो आये उनको विद्यासों संतुष्ट

अभूवँस्ते स्वयं शिष्या आचार्याणां प्रभावतः ॥
दृष्टं श्रुतं स्वकीयेभ्यः कृष्णदेवसभाजयम् ॥ ४ ॥
दक्षिणां द्वारकां तस्मात् सशिष्या गुरवो गताः ॥
तत्र श्रीराजगोपालं प्रेम्णैव प्रणताः प्रभुम् ॥ ५ ॥
ऊषुस्तत्र निजस्थाने तन्माहात्म्यंजगुर्हरेः
राजविष्णुस्वामिसेव्यं गोपालं तं समादिशन् ॥ ६ ॥
अबोधयन् स्वशिष्येभ्योऽतिष्ठँस्तत्र निशाद्वयम् ॥
तेषां समागमं श्रुत्वा तद्देशीयाः स्ववैष्णवाः ॥ ७ ॥
आचार्याणां दर्शनार्थं समायाताः सहस्रशः ॥
साष्टांगं प्रणताः सर्वे सोपढौकितपाणयः ॥ ८ ॥
चक्रुस्ते सुमनोवृष्टिं गीतवाद्यमहोत्सवम् ॥
जगुराशीर्मंत्रगणं तोत्रसामरथंतरम् ॥ ९ ॥
प्रोचुर्बद्धांजलिपुटा वयमद्य सनाथिताः ॥
श्रीमद्भिर्नोनिजाचार्यैर्दिक्चक्रविजयोद्यतैः ॥ १० ॥

किये ॥ ३ ॥ पीछें आचार्यनके प्रभावसों वे सब अपने आप शिष्य होते भये क्यों के उननें राजाकृष्णदेवकी सभाको जय देख्यो हो और सुन्यो हो ॥४॥ पीछें शिष्यनके सहित आप दक्षिणद्वारका ( मन्नारगुडी ) कों गये वहाँ राजगोपालकों प्रेमसों प्रणाम कियो ॥ ५ ॥ अपने स्थानमें ठहरे और उनको माहात्म्य वर्णन करतेभये और राजविष्णुस्वामीके सेव्य उन श्रीगोपालकों बताते भये ॥ ६ ॥ अपने शिष्यनकों बोध देते दो दिन वहाँ रहे सो आपको आगमन सुनकें श्रीमदाचार्यके दर्शनके लिये वा देशके अपने हजारन वैष्णव आये वैष्णवननें भेट करकें साष्टांग प्रणाम कियो ॥ ७ ॥ ॥ ८ ॥ पुष्पनकी वृष्टि कर गाजे बाजेसों बडो उत्सव कियो और तोत्र सामरथंतर या आशीर्वादमंत्रकों पढ्यो ॥ ९ ॥ और हाथ जोडकें बोले जो

समा पचशत याता विष्णुस्वामिप्रभोरध ॥
नासीत्कोपि जगज्जेता देशिक सर्वदेशग ॥ ११ ॥
श्रीमद्भि कृष्णदेवस्य सभाया वैष्णवाध्वन ॥
रक्षा कृता तथा लब्धा वैष्णवाचार्यताथ न ॥ १२ ॥
तीर्थं यच्छतु धर्म नो ब्रुवतु सांप्रदायिकम् ॥
भवत श्रीमदाचार्यास्तथाचक्रुस्तदीप्सितम् ॥ १३ ॥
हरि सेव्यो हरि सेव्यो भक्तियुक्तेन चेतसा ॥
वर्णाश्रमसदाचार सदा कार्यः स्वशक्तित ॥ १४ ॥
स्वधर्माचरण शक्त्या विधर्माच्च निवर्तनम् ॥
कार्यश्चेवेंद्रियजयो घातकानींद्रियाणि हि ॥ १५ ॥
परद्रव्येषु मलवत्परस्त्रीषु च मृत्युवत् ॥
परद्रोहेषु विषवद्यस्य धी स हि वैष्णव ॥ १६ ॥
अर्थे पचदशानर्था साक्षाद्भगवतोदिता ॥
स कष्टसाध्यो ह्यनर्थस्तदर्थेऽज्जनार्थेना ॥ १७ ॥

आज हम सनाथ भये हमारे आचार्य आप दिग्विजयमें उद्यत हें ॥ १० ॥ पाँचसौ वर्ष व्यतीत भये विष्णुस्वामीके पीछें कोई जगत्को जीतवेवारो सर्वदेशी गुरु नहीं भयो ॥ ११ ॥ श्रीमाननने कृष्णदेवराजाकी सभामें वैष्णवमार्गकी रक्षा करी ओर हमारे आचार्यपदकों पायो ॥ १२ ॥ सो आप अपनो चरणामृत दीजिये ओर साम्प्रदायिक धर्म कहिये तब श्रीमदाचार्यजीनें उनकी इच्छा पूरी करी ॥ १३ ॥ ओर आज्ञा करी जो भक्तियुक्तचित्तसों हरिको भजन करो अपने शक्तिके अनुसार वर्णाश्रम धर्म सदाचार सदा करो ॥ १४ ॥ यथाशक्ति स्वधर्मको आचरण करनों दूसरेके धर्मसों निवृत्त होंनों इन्द्रियनको जय करनों क्योंकि जो इन्द्रियही नाश करवेवारी हें ॥ १५ ॥ पराये द्रव्यमें मलकी जेसी परस्त्रीमें मृत्युकी जेसी ओर परद्रोहमें विषकी जेसी जाकी बुद्धि होय ताको नाम वैष्णव हे ॥ १६ ॥ अर्थमें पन्द्रह अनर्थ

मातरं पितरं भ्रातॄन् गुरून् भार्यां सुतानपि ॥
निर्हंति सुहृदोऽन्यान् किं कपर्दार्थेऽपि लुब्धधीः ॥ १८ ॥
मलमूत्रास्थिमांसासृक्पूर्णां घूर्णन्मदेक्षणाम् ॥
कामिनीं कामिनो यांति विष्टामिव हि विड्भुजः ॥ १९ ॥
सुरते सुखधीर्येषां तेषां हास्याय किं पुनः ॥
यत्सुखं तत्र तत्किं न मलमूत्रविसर्जने ॥ २० ॥
परापवादपैशुन्यपरद्रोहे च किं सुखम् ॥
तथापि प्राणिनो मूढाः साटोपास्तत्कथां विना ॥ २१ ॥
कामे किंचित्सुखं बौद्धं क्रोधे स्वप्नेऽपि तन्न हि ॥
तथापि क्रोधिनो लोकाः शिष्टायंते सुसंविदा ॥ २२ ॥
द्रोहोभूतेषु नो कार्यो द्रोग्धुर्वै परतो भयम् ॥
देवानां देशिकानां च विदां तन्नाचरेत्क्वचित् ॥ २३ ॥

साक्षात् भगवाननें कहे हैं तासों वे अनर्थ हैं तामें मरवेनकी इच्छा होय हैं ॥ १७ ॥ माता, पिता, भाई, गुरू, स्त्री, पुत्र, मित्र, इनकोंवी कौडीके लियें लोभी मनुष्य मारडारें हैं दूसरेनकों कहा कहें ॥ १८ ॥ मल, मूत्र, हाड, मांस, लोहू, इनसों भरी मदसों बाँके नेत्रवारी कामिनी स्त्रीकों कामी लोग जाँय हैं जेसे शूकर विष्टाकों ॥ १९ ॥ जिनकी सुखबुद्धि काममें हे उनकों हास्यके सिवाय कहा कहें जो सुख वामें हे वो कहा मलमूत्र छोडवेमें नहीं हे ॥२०॥ पराई निन्दा चुगुली दूसरेको बुरो विचारनो यामें कहा सुख हे तो वी मूर्ख प्राणी इनके विना नहीं रहें हैं ॥ २१ ॥ कदाचित् काममें कल्पित सुखकी कल्पना करो परन्तु क्रोधमें तो स्वप्नमेंवी सुख नहीं हे तोवी क्रोधी जन अपनी गोष्ठीमें शिष्ट बनें हैं॥ २२॥ द्रोह ( अनिष्टचिन्तन ) करवेवारेकों दूसरेसों डर हे तासों प्राणीनमें द्रोह न करे ओर देवता गुरु विद्वान् इनको तों कवी

वैष्णवेषु चरेन्मैत्रीमनुकंपां परेष्वपि ॥
आत्मवत्सर्वभूतानि प्रपश्येत् सुखदुःखयो ॥ २४ ॥
नवयोगेश्वरैर्धर्मा वैष्णवा ये निरूपिता ॥
ते सदैवानुसर्त्तव्या कर्त्तव्या भक्तिरुत्तमा ॥ २५ ॥
इत्यूचुः श्रीमदाचार्यास्तेभ्यः सिद्धांतमात्मन ॥
शुद्धाद्वैतमत सूत्रै श्रुतिभिस्तान्समादिशन् ॥ २६ ॥
भक्त्याचार पुन प्राहुर्वैष्णवादेशिक चरेत् ॥
विशुद्ध विद्यया योऽन्यशीलाचारेण भूसुरम् ॥ २७ ॥
सस्कृतो वैदिके पूर्व कुर्वन् कर्माणि सूत्रत ॥
चरेद्भागवताचार भक्त्या सपूजयेद्धरिम् ॥ २८ ॥
व्रतानां पचक कुर्यादविद्ध हरिवल्लभम् ॥
नवम्यां शोधयेद्देह गेह पूजार्हमानयेत् ॥ २९ ॥
दशम्याद्युत्सव कुर्यात्रिदिन व्रतमाचरेत् ॥
शास्त्रोक्तेन विधानेन हरेर्जन्मदिनेषु च ॥ ३० ॥

पी दोहन करे॥ २३ ॥ वैष्णवनमें मित्रता करे दूसरेनमेंभी दया राखे सुखदु खमें प्राणीनका अपनी आत्माके समान देखे ॥ २४ ॥ नवयोगेश्वरनन जो वैष्णवधर्म कहे है उनको सदा पाले ओर उत्तम भक्ति करे ॥ २५ ॥ ये अपनो सिद्धान्त उनसो श्रीमदाचार्यजीनें कह्यो ओर श्रुति सूत्रनसों शुद्धाद्वैतमतको उपदेश कियो ॥ २६ ॥ फिर भक्तिमार्गको आचार कह्यो जो पहले वैष्णवाचार्यको गुरुकरे जो विद्यामें शीलमें आचारमें शुद्ध ब्राह्मण होय ॥ २७ ॥ ओर वैदिक संस्कारनसों संस्कृत होयके सूत्रनके अनुसार कर्मको करतो भयो भागवताचारको आचरण करे भक्तिसों हरिको पूजन करे ॥ २८ ॥ भगवानके प्यारे वेधरहित पाँच व्रत करे नवमीको देह ओर पूजाके योग्य घर शुद्ध करे ॥ २९ ॥ दशमी एकादशीद्वादशी उत्सव करे ऐसे तीन दिन व्रत करे ओर शास्त्रमें कहे

कुर्याद्द्वादशपुंड्राणि मुद्राषट्कं च धारयेत् ॥
तुलसीकाष्ठजां मालां नाद्याद्विष्णोरनर्पितम् ॥ ३१ ॥
श्रवणं कीर्तनं कुर्यात्स्मरणं च समर्चनम् ॥
प्रदक्षिणं वंदनं च तथा तीर्थनिषेवणम् ॥ ३२ ॥
वैष्णवेभ्यो विभज्याग्रे शेषं नैवेद्यमाहरेत् ॥
पठेद्भागवतं शास्त्रं चरेद्यात्रां महोत्सवान् ॥ ३३ ॥
न निंदेद्देवताः क्वापि तद्भक्तान्नैव दूषयेत् ॥
बुद्धिभेदमनुत्पाद्य साधयेद्धर्ममात्मनः ॥ ३४ ॥
पूर्वाचार्यनिबंधेषु यदुक्तं तत्समाचरेत् ॥
दुष्टाग्रहं च दुर्वादं दौष्ट्यं निर्दयतां त्यजेत् ॥ ३५ ॥
श्रुत्वा धर्मान्निजार्येभ्यो वैष्णवा मोदमागताः ॥
नत्वा स्तुत्वा गताः केचित्केचित्तानेव संश्रिताः ॥ ३६ ॥
आचार्यैः प्रस्थितं तस्मादयोध्यां दक्षिणां प्रति ॥
दृष्ट्वा स्पृष्ट्वा च तां तत्र रामभक्तानशिक्षयन् ॥ ३७ ॥

विधानसों भगवान्के जन्मदिनमें व्रत करे ॥ ३० ॥ बारह तिलक षट् मुद्रा तुलसीकाष्ठकी माला धारण करे विष्णुके विना अर्पण किये भोजन न करे ॥ ३१ ॥ श्रवण कीर्तन स्मरण सेवा प्रदक्षिणा वंदन तीर्थसेवा करे ॥ ३२ ॥ वैष्णवनको भोजन करायकें पीछें शेष आप लेवे भागवत शास्त्र पढ़े यात्रामहोत्सव करे ॥ ३३ ॥ कोई देवताकी निन्दा न करे न उनके भक्तनकों दोष लगावे बुद्धिको भेद न करकें अपने धर्मको साधन करे ॥ ३४ ॥ पूर्वाचार्यनकें ग्रन्थनमें कही भई बार्तानको आचरण करे तथा दुराग्रह दुर्वचन दुष्टता निर्दयताकों छोड़े ॥ ३५ ॥ एसे वैष्णवनके धर्मनकों अपने आचार्यसों सुनके वे वैष्णव प्रसन्न भये ओर दंडवत् स्तुति करकें कोई गये कोई उन्हींके आश्रित होयगये ॥ ३६ ॥ ओर श्रीमदाचार्यजी वहाँसों दक्षिणअयोध्यामें जायकें

राजधानीं च चोलाना तजावरमुपागता ॥
तत्रत्येन प्रजेशेन प्रजाभि समुखीकृता ॥ ३८ ॥
राजभृत्या समानीता श्रुतविद्या महोदया ॥
कृष्णदेवसभावृत्त वृत्त तीर्थांतरस्य च ॥ ३९ ॥
राज्ञा पृष्टं समवदैंस्तच्छिष्या दिग्जय पुन ॥
तत्रापि भारतेशाख्य शिवलिंग महत्तरम् ॥ ४० ॥
दृष्टवतश्च तान् शिष्यानकुर्वंश्च शरणागतान् ॥
तत प्रचलितायाता श्रीरगाख्य हरे पदम् ॥ ४१ ॥
कावेरीद्वीपमध्यस्थ सप्तावरणमडितम् ॥
तत्र स्नात्वा तु विधिवत् कृत्वा तीर्थविधिं पुन ॥ ४२ ॥
शेपशायिरमेशस्य दर्शनार्थं गतास्तत ॥
तत्रत्या वैष्णवाचार्या समानेतु समागता ॥ ४३ ॥
निन्यु स्वाचार्यविधिना शठकोपपुर सरम् ॥
श्रीदेव्या चापि भूदेव्या सहित ददृशुर्हरिम् ॥
दडवत्प्रणता देव स्तुतिं चक्रु प्रहर्षिता ॥ ४४ ॥

दर्शन आदि करकें रामभक्तनकों उपदेश करते गये ॥ ३७ ॥ पीछें चोलनकी राजधानी तजावरमें पधारे सो वहांको राजा अपनी प्रजाके सग सामनें आयो ॥ ३८ ॥ सुनी है विद्या जिनकी एसे बडे उदयवारे आपकों राजविभूतिसों पधरायकें कृष्णदेवराजाकी सभा तथा ओर तीर्थनको वृत्तान्त पूँछ्यो ॥ ३९ ॥ राजाके पूँछवेपे शिष्यननें पीछे दिग्विजय बतायो वहांभी भारतेश नामक बडो शिवलिंग हे ॥ ४० ॥ उनके दर्शन कर शरणागतनकों शिष्य करते वहाँसों चले सो हरिके स्थान श्रीरगजीकों गये ॥ ४१ ॥ जो कावेरीके द्वीपकें बीचमें ओर सातप्राकरनसों मडित हे वहाँ स्नान विधिपूर्वक तीर्थविधि करकें पीछें ॥ ४२ ॥ शेपशायी भगवान्के दर्शनकों चले सो वहाँके वैष्णव आचार्य लेवेकों आये ॥ ४३ ॥ ओर अपने आचार्यनकी रीतिसों पधराये

चिदानंदाकारं सकलजगदाधारममलं ॥
स्फुरत्संविद्रूपं भृतविविधरूपेप्यनुपमम् ॥
स्वयं श्रीभूदेव्यौ चरणकमले यस्य भजतो ॥
भजे तं देवेशं भुजगशयिनं रंगनिलयम् ॥ ४५ ॥
सुरा यं सेवंते निगमनिचया यस्य विमलान्
गुणान् संगायंति स्फुरति हृदये यश्च विदुषाम् ॥
स्वयं शेते शेषे जगदपि च यच्छेषमयते
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ४६ ॥
रमा रामा कामो भुवनविजयी यस्य तनयो
क्षमादेवी दासी भवति यदुमाधीश्वरहरः ॥
विकुंठप्रासादो खगपतिरसौ वाहनवरो
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ४७ ॥
गजो येन त्रातो मकरगलितो वारिधिगतो ॥
हरीत्याख्या प्राप्ता शरणमयतां दुःखहरणात् ॥

हाँ शठकोप श्रीदेवी भूदेवी सहित हरिके दर्शन किये दंडवत् प्रणाम करकें हर्षसों स्तुति करवेलगे ॥ ४४ ॥ जो चिदानन्दाकार सब जगत्के आधार सुंदर ज्ञानरूप धारण कियें भयें रूपनमें अनुपम श्रीदेवीभूदेवी जिनके चरणकमलनकी सेवा करें हें उन सर्पके ऊपर सोयवेवारे देवतानके ईश रंगनिलयको में भजूँहूँ ॥ ४५ ॥ जिनकी देवता सेवा करें हें वेद जिनके विमलगुणनकों गान करें हें जो विद्वाननके हृदयमें प्रकाशित होंयहें आप शेषके ऊपर सोवें हें ओर जगत् जिनको अवशेष हे उनकूं में भज हूँ ॥ ४६ ॥ जिनकी स्त्री लक्ष्मीजी हें ओर पुत्र संसारको विजयकरवेवारो काम हे दासी पृथिवी हे स्थान वैकुंठ हे गरुड वाहन हें एसे देवतानके ईश रंगनिलयको में भजूं हूँ ॥ ४७ ॥ जिननें जलमें मगरसों लीले गजकी

स्वतो विश्वांभोजं समजनि यतो नाभिसरसो ॥
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ४८ ॥
निजान्पातु मीनो जरठकमठोप्यर्भककिटि ॥
द्विपाद् पचास्यस्तुरगवदनो हंसतनुभृत् ॥
धरादेवो देवो समजनि स देवो नरकजिद् ॥
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ४९ ॥
सदा शेषे शेते निगदितगुणोऽशेषनिगमैः ॥
निवृत्तः सक्लेशैर्भवति भजनादस्य मनुजः ॥
विशेषैर्भव्यानां स्फुरति महिमा काप्यनुपमा
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ५० ॥
वसतः कावेर्य्यां स्वकृतनिजवैकुंठभवने ॥
विशाले प्राकारे रचितसदने द्राविडभुवि ॥
सिषेवे यं धाता सुरमुनिवरा विप्रतनवो ॥
भजे तं देवेशं भुजगशयनं रंगनिलयम् ॥ ५१ ॥

रक्षा करी ओर शरण आये भयनके दुःख हरवेसों हरि ये नाम पायो जिनके नाभिसरोवरसों विश्वरूपी कमल उत्पन्न भये हे उनकों में भजूं हूं ॥ ४८ ॥ अपने भक्तनकी रक्षा करवेकों मत्स्य कच्छप वराह नृसिंह हयग्रीव हंस परशुराम वामन आदि रूप धरे हैं उन श्रीरंगजीकों में भजूं हूं ॥ ४९ ॥ जो सदा शेषमें सोवें हें जिनके अशेष गुण वेद गान करें हैं जिनके भजन करवेसों मनुष्य दुःखनसों छूट जॉय हैं जिनकी सुंदरतासों अनुपम महिमा दीख पडे हे उन श्रीरंगजीकों में भजूं हूं ॥ ५० ॥ द्रविडदेशमें विशाल परकोटवारे कावेरीनदीके बीचमें अपने किये भये वैकुंठ भवनमें जो विराजमान हे जिनकों ब्रह्मा आदि देवता

चतुर्वक्त्रैर्वेधा विषमनयनः पंचवदनैः
षडास्यैः सेनानीः फणपतिरसौ दिक्छतमुखैः ॥
गृणंतो यत्कीर्तिं न हि परमितास्तेपि चिरतो
रमेशं तं वंदे भुजगशयनं रंगनिलयम् ॥ ५२ ॥
इत्थमाचार्यवर्यास्ते स्तुतिं रंगेश्वरप्रभोः ॥
कुर्वंतः प्रणतिं चक्रुरर्चांनैवेद्यमार्पयन् ॥ ५३ ॥
तत्प्रसादं च तत्पादोदकमश्नन् निजैः सह ॥
चक्रुः पारायणं तत्र सूपविष्टा दिनाष्टकम् ॥ ५४ ॥
तत्र श्रीराघवाचार्यमुख्याश्चायन् बुधोत्तमाः ॥
प्रणता स्सत्कृतास्तेन स्वासनोत्थानमानतः ॥ ५५ ॥
पूजितास्तैश्च संपृष्टा विद्यानगरविज्जयम् ॥
यथावृत्तं च तद्वृत्तं तदंतेवासिनो जगुः ॥ ५६ ॥
द्वैताद्वैतमते तत्र जाता विप्रतिपत्तयः ॥
तत्राहुर्वैष्णवाचार्या विशिष्टाद्वैतमेव नः ॥ ५७

मुनिगण सेवें हें उन रंगनिलयकों में भजूं हूँ॥५१॥ जिनकी कीर्ति ब्रह्मा चार मुखसों शिव पांच मुखसों कार्तिकेयस्वामी ६ मुखसों शेषजी हजार मुखसों गान करें हें बहुत दिनासों तोबी पार नहीं पायो उनकों मैं भजूं हूं॥५२॥ या प्रकार श्रीमदाचार्य श्रीरंगजीकी स्तुति करकें प्रणाम करते भये पीछें पुजाके सँहित नैवेद्यकों अर्पण कियो ॥ ५३ ॥ ओर अपने मनुष्यनके संग उनको चरणामृत प्रसाद लेते आठ दिन विराजे पारायण कियो ॥५४ ॥ वहाँ उत्तम विद्वान् श्रीराघवाचार्यनें आयके प्रणाम किये। ओर अभ्युत्थान आसनकों पायकें ॥५५॥ विद्यानगरके विद्वाननके जयको वृत्तान्त पूँछ्योसो विद्यार्थीननें यथावत् वृत्तान्त कह्यो॥५६॥ओर वहाँ द्वैताद्वैतमतके पूर्वपक्ष भये तामें वैष्णवाचार्यननें

सम्यङ्मत यतो वेदा सर्वे यत्रैकसस्थिता ॥
तदाह श्रीमदाचार्यो द्वैताद्वैत कुतो न सत् ॥ ५८ ॥
व्याख्यान प्रथमं सूत्रे गीतायां तत्र सशये ॥
समाधिभाषा तत्रापि सशये निर्णयाय न ॥ ५९ ॥
सोऽनुवीक्ष्येत्यादिमंत्रे प्रागेकात्मानुगीयते ॥
निषेधादितरस्यैव जडजीवो न तत्र यो ॥ ६० ॥
सूत्रे चात्मकृतेरित्यादावात्मैकोऽस्य कारणम् ॥
अह सर्वस्य प्रभव इत्यादौ च तयोदित ॥ ६१ ॥
अहमेवासमेवाग्रे यथा स्वर्णादिसद्गिरा ॥
समाधिभाषया चैकात्मन कारणतोदिता ॥ ६२ ॥
वादिनस्तत्र सामर्षा साश्चर्या उच्चकैर्जगुः ॥
समाधिभाषा का चेयं प्रमाणेषु गरीयसी ॥ ६३ ॥
वाल्मीकिना तु या प्रोक्ता व्यासैर्दृष्टा समाधित ॥
रामायण भागवत सा चास्माक समाधिगी ॥ ६४ ॥

कह्यो विशिष्टाद्वैतही हमारो मत ॥ ५७ ॥ समीचीन है जामें सब वेदनको समन्वयहे तब श्रीमदाचार्य बोले जो द्वैताद्वैत क्यों ठीक नहीं ॥ ५८ ॥ प्रथम व्याससूत्रमें निर्णय हे फिर गीताजीमें यामें भी संदेह होय तो निर्णयके लिये समाधि भाषा हे ॥ ५९ ॥ ओर "सोऽनुवीक्ष्य" इत्यादि मन्त्रनमें पहलें एक आत्माही हे दूसरेको निषेध हे यहाँ जड ओर जीव नहीं हे ॥ ६० ॥ "आत्मकृते" इत्यादिक सूत्रनमें भी सबको कारण एक आत्माही कह्यो हे ओर "अहसर्वस्यप्रभव" इत्यादिकनमेंभी वेसोही कह्यो हे ॥ ६१ ॥ मेंही पहलें हो जेसें सुवर्ण एसें समाधिभाषा सो भी एक आत्माहीकी कारणता कही गई हे ॥ ६२ ॥ सबते वादी कुछ होयके आश्चर्यके सग जोरसों बोले जो ये समाधिभाषा कहा हे जो प्रमाणनमें भेठ गिनी हो ॥ ६३ ॥ तब श्रीमदाचार्यजीने कह्यो जो वाल्मीकि-

इत्युक्ते श्रीमदाचार्यैः प्रतिवादी तदा जगौ ॥
किं वैशिष्ट्यं भागवते श्रद्धा वोऽत्र गरीयसी ॥ ६५ ॥
प्रोचुस्तदा निजाचार्याः पुराणानां शिरोमणिः ॥
श्रीमद्भागवतं नाम पुराणं व्यासतुष्टिदम् ॥ ६६ ॥
अर्थोऽयं व्याससूत्राणां भारतार्थविनिर्णयः ॥
गायत्रीभाष्यरूपोसौ ग्रंथो भागवताभिधः ॥ ६७ ॥
इत्येवं निर्णये तस्य सर्वाभ्यर्हत्वकीर्तनात् ॥
वैशिष्ट्यं दर्शनादेव तस्य भाति विदां हृदि ॥ ६८ ॥
यदि रामानुजाचार्यैः पुराणं वैष्णवं मतम् ॥
प्रचारात्तद्धि लिखितं नाप्रामाण्यमलेखनात् ॥ ६९ ॥
बहूनामपि ग्रन्थानां तदलेखादमानता ॥
स्यादन्यथोपनिषदां तथा स्मृतिपुराणयोः ॥ ७० ॥
मृत्स्नाभक्षणलीलायाः शंकरार्यैर्निरूपणात् ॥
व्याख्यानाच्चित्सुखस्यापि तदीयानां च संमतम् ॥
हेमाद्रिमाधवाद्यैश्च धर्मशास्त्रादिदिग्गजैः ॥ ७१ ॥

जीनें जो कह्यो हे ओर व्यासजीनें जो समाधिसों कह्यो हे वो वाल्मीकिरामायण ओर श्रीमद्भागवत हमारी समाधिभाषा हे ॥ ६४ ॥ ये कहवेपें वे वादी बोले जो भागवतमें कहा विशेष हे जासों आपकी बडी श्रद्धाहे ॥ ६५ ॥ तब श्रीमदाचार्य बोले जो पुराणनमें शिरोमणि व्यासजीको तुष्टि देवेवारो श्रीमद्भागवत पुराणहे ॥ ६६ ॥ व्यासजीके सूत्रनको अर्थ भारतके अर्थको निर्णय गायत्रीको भाष्यरूप ये भागवत ग्रंथ हे ॥ ६७ ॥ एसे निर्णय होयवेसों सबसों पूजनीय हे ओर विद्वाननके हृदयमें देखवेहीसों विशेषपनों भासे हे ॥ ६८ ॥ रामानुजाचार्यजीनें जो विष्णुपुराण मान्यों हे सो प्रचारसों लिख्योहे ओर उनके न लिखवेसों भागवतको अप्रामाण्य नहीं होयसके हे॥६९॥ओर एसें मानोंगे तो उनके न लिखवेसों बहुत ग्रंथ उपनिषद् स्मृति ओर पुराणनकी अप्रामाण्यता होयजायगी ॥ ७० ॥ मृत्स्नाभ-

प्रमाणैस्तस्य वैशिष्ट्य कस्य शिष्टस्य नोन्मितम् ॥
तस्मात् समाधिभाषायाव्याख्यानाच्छ्रुतिसूत्रयो ॥ ७२ ॥
गीताया गृह्यते चार्थे शुद्धाद्वैत तत प्रमा ॥
लक्षण तत्र चाचार्यै शुद्धाद्वैतस्य साधितम् ॥ ७३ ॥
श्रुतित सूत्रतो युक्त्या प्रीता जातास्ततो बुधा ॥
आचार्यान् समनुज्ञाप्य प्रशस्य च प्रणम्य ते ॥ ७४ ॥
यथागता गता केचित्केचिच्छरणमागता ॥
श्रीरंगेशमनुज्ञाप्य सशिष्या गुरवोऽव्रजन् ॥ ७५ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थे
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शाब्दिकृष्णैर्निबद्धे ॥
प्रस्थानेऽस्मिँस्तृतीये समजनि पटलो दिग्जयाख्ये तृतीय ७६

---

क्षणलीलाको शंकराचार्यजीने निरूपण कियो है और चित्सुकके व्याख्यानसों उनके अनुयायीनकों संमत है ॥ ७१ ॥ धर्मशास्त्रके दिग्गज हेमाद्रि माधवके प्रमाणन करकें विशिष्ट होयवेपे कोनसे शिष्टजनकों याको वैशिष्ट्य प्रमाण नहीं है ॥ ७२ ॥ श्रुतिसूत्रनके व्याख्यान औरगीताके अर्थ होयवेसों सामाधिभाषावो प्रामाण्य है और इन्हींसों शुद्धाद्वैत प्रमाण है और यहाँ श्रीमदाचार्यजीने श्रुति सूत्र युक्ति इनसों शुद्धाद्वैतको लक्षण कियो तब विद्वान् प्रसन्न भये ॥ ७३ ॥ ७४ ॥ और आचार्यनकी प्रशंसा करकें प्रणाम करकें आज्ञा लेकें जेसे आये हे वेसेंही गये उनमेंसों कोई शरणभी भये और आप श्रीरंगजीकी आज्ञा लेकें शिष्यसमेत यहाँसों पधारे ॥ ७५ ॥ समयनीतिके जाननेवारे जगद्गुरु श्रीगोविन्दाचार्यजी महाराजकी आज्ञासों श्रीमद्वेदव्यासविष्णुस्वामिसम्प्रदायके ग्रन्थनके अनुकूल श्रीकृष्णशास्त्रीके बनाये या दिग्विजयग्रन्थके तीसरे प्रस्थानमें ये तीसरो पटल समाप्त भयो ॥ ७६ ॥

ऋषभाद्रिं प्रचलिता यः स्वयं ह्यृषभादृतः ॥
तं दृष्ट्वाद्रिं परिक्रम्य चालगर्दं चतुर्भुजम् ॥ १ ॥
दृष्ट्वा प्रणम्य ते याता दक्षिणां मथुरां प्रति ॥
सत्यव्रतस्य राजर्षेर्मत्स्यरूपी जनार्दनः ॥ २ ॥
प्रव्यक्तः कृतमालायां कुर्वतो जलतर्पणम् ॥
तत्र पारायणं चक्रुर्मीनाक्षीं सुंदरेश्वरम् ॥ ३ ॥
अपश्यँस्तत्र संप्राप्ता विद्वांसो वैष्णवा अपि ॥
प्रणम्य श्रीमदाचार्यान् प्रोचुस्ते पूर्वदर्शनान् ॥ ४ ॥
वयं शृणुमहे पूर्वं पांड्यान्विजयिनो नृपान् ॥
आसीद्गुरुर्गुरुस्तेषां विष्णुस्वाम्यत्र शिक्षकः ॥ ५ ॥
श्रौतस्मार्तसमाचारवैष्णवाचारदेशिकः ॥
जगज्जेता निजाम्नायं स्थापयामास भूतले ॥ ६ ॥
तत्संप्रदायनेतार आचार्या बहवोऽभवन् ॥
इदानीं नैव दृश्यंते तादृशा लोकशिक्षकाः ॥ ७ ॥

ऋषभदेवनें जाको आदर कियो हे एसे ऋषभाद्रिपर्वतमें आये ओर ताके दर्शन परिक्रमाकरकें चार भुजा वारे आलगर्दजीके ॥ १ ॥ दर्शन प्रणाम करकें दक्षिण मथुराकों गये जहाँ राजर्षि सत्यव्रतके कृतमाला नदीमें तर्पण करते मत्स्यरूपी भगवान् प्रगट भये हे वहाँ पारायण कियो ओर मीनाक्षी देवी तथा सुंदरेश्वरके दर्शन किये वहाँ विद्वान् वैष्णवबी आये सो अपूर्व हे दर्शन जिनको एसे श्रीमदाचार्यजीकों प्रणाम करकें बोले जो हम सुनें हें जो पांड्य विजयी राजानके शिक्षा देवेवारे गुरू गुरुविष्णुस्वामी यहाँ भये हे ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ जिननें श्रौतस्मार्त सदाचार वैष्णवाचारको उपदेश कर जगत्को जीतकें संसारमें अपने सम्प्रदायकों चलायो हो ॥ ६ ॥ उनके सम्प्रदायके चलायवेवारे बहोत आचार्य भये परन्तु या सम-

किंवदती श्रुता काचित् विद्यानगरविज्जयी ॥
समुद्भूतोऽधुनाचार्यो विष्णुस्वामिमतेश्वर ॥ ८ ॥
किं श्रीमंतस्त एव स्युर्वैकुंठआचार्यवेषिण ॥
चिरात्कर्णपुट प्राप्ता अद्यदृष्टास्सुभाग्यत ॥ ९ ॥
दामोदरस्तदा प्राह श्रीमंतोऽमी त एव हि ॥
तदा ते ननृतुर्भक्ता कुर्वंतोजयनिस्स्वनम् ॥ १० ॥
शखघटामृदगाद्ये कीर्तयतो गुरोर्यश ॥
पप्रच्छु संप्रदायस्य प्रस्थानानि च सस्कृतिम् ॥ ११ ॥
सदाचारं विचारं च तदंतेवासिनो जगु ॥
वेदा सूत्राणि गीता च श्रीमद्भागवतं तथा ॥ १२ ॥
अस्माक दर्शने मुख्य प्रस्थानानां चतुष्टयम् ॥
सस्कृति शरणापत्तिर्ग्रहण मत्रयोर्हरे ॥ १३ ॥
आचारो भक्तिशास्त्रीयो धर्मशास्त्रानुसारत ॥
भावाद्वैत क्रियाद्वैत द्रव्याद्वैत तथा पुन ॥ १४ ॥

यमें लोकके शिक्षा करवेवारे वेसे कोई नहीं दीख पर्डे हें ॥ ७ ॥ अब सुनें हैं के विद्यानगरके विद्वाननके जीतवेवारे विष्णुस्वामीसम्प्रदायके आचार्य प्रगट भये हें ॥८॥ कहा आपही हे बहोत दिनासों सुनते हे सो आज भाग्यसु दर्शन भये ॥ ९ ॥ तब दामोदरनें कही जो आपही हे तब वे भक्त बडे स्वरसों जयध्वनि करके नाचवे लगे ॥ १० ॥ शख घंटा मृदग आदि बाजानसों गुरुनके यशको कीर्तन करते सम्प्रदायके प्रस्थाननकों ओर सदाचार विचारकों पूंछ्यो ॥ ११ ॥ तब आपके विद्यार्थी बोले जो वेद सूत्र गीता श्रीमद्भागवत ये चार प्रस्थान हमारे दर्शनमें मुख्य हैं ॥ १२ ॥ शरणागति ओर भगवान्‌के मन्त्रनको ग्रहण येही सस्कृति हे ॥१३॥ धर्मशास्त्रके अनुसार भक्तिशास्त्रीय आचार हे ओर भावाद्वैत

विचारणीयं नित्यं हि तद्वेदांतमनुत्तमम् ॥
कार्यकारणवस्त्वैक्यमर्शनं पटतन्तुवत् ॥ १५ ॥
अवस्तुत्वाद्विकल्पस्य भावाद्वैतं तदुच्यते ॥
भेदो विकल्पो निर्दिष्टो नास्ति सोऽवस्तुतः पृथक् ॥ १६ ॥
सर्वाकारं यतोब्रह्म साकारादि प्रकारतः ॥
यद्ब्रह्मणि परे साक्षात् सर्वकर्मसमर्पणम् ॥ १७ ॥
मनोवाक्क्रतुभिः पार्थ क्रियाद्वैतं तदुच्यते ॥
उद्देश्यफलभेदाभ्यां क्रियाभेदो निगद्यते ॥ १८ ॥
यत्रोद्देश्यफलं चैव क्रिया कर्ता तदात्मकः ॥
तत्र भेदस्य को गंधः क्रियाऽद्वैतं ततो मतम् ॥ १९ ॥
अन्यथा तु क्रियाद्वैतं नास्त्यादावपि हीयते ॥
आत्मजायासुतादीनामन्येषां सर्वदेहिनाम् ॥ २० ॥

क्रियाद्वैत, द्रव्याद्वैत, ॥ १४ ॥ या उत्तम वेदान्तको नित्य विचारे ओर कार्य कारणवस्तुको एक पटतन्तुके जेसो समझे ॥ १५ ॥ विकल्पके अवस्तु होयवेसों अर्थात् दूसरी वस्तुके न होयवेसों भावाद्वैत कहेंहें भेदको विकल्प कहेंहें सो तात अलग नहीं ॥ १६ ॥ साकारकी रीतिसों सर्वाकार ब्रह्म हे ओर मन वाणी यज्ञ आदिसों जो सब कर्मनको साक्षात परब्रह्ममें अर्पण हे ताकों क्रियाद्वैत कहें हें उद्देश्य ओर फल इनके भेदसों क्रियाको भेद कहें हें ॥ १७ ॥ ॥ १८ ॥ जहाँ उद्देश्य फल क्रिया कर्ता ब्रह्मात्मक हें वहाँ भेदको गंधवी नहीं यासों क्रियाद्वैत कहें हें ॥ १९ ॥ एसें नहीं मानोंगे तो नास्तिमेंवी क्रियाद्वैतकी हानि होयगी अपने स्त्री पुत्र आदिकनके ओर सब प्राणीनके विषयमें जो स्वार्थ तथा कामकी एकता ताकों द्रव्याद्वैत कहें हें या प्रकार-अनेकविचारसों उपदेश किये गये वे आचार्यनकों प्रणाम करकें कृतकृत्य होयकें अपनें घरनकों गये ओर श्रीमदाचार्यजीवी दक्षिणकाशीके दर्शन कर नव-

यत्स्वार्थकामयोरैक्य द्रव्याद्वैत तदुच्यते ॥
इत्येवमुपदिष्टास्ते विचार प्रति चित्रधा ॥ २१ ॥
आचार्यान् प्रणता सम्यक् कृतकृत्त्या गृहान् ययु ॥
नतस्तु दक्षिणां काशीं दृष्ट्वा याता नवग्रहान् ॥ २२ ॥
रामेश्वर तत प्राप्ता स्तत्र शैवा समागता ॥
तत्र लक्ष्मणसत्तीर्थे कर्तुं तीर्थविधिं तु ते ॥ २३ ॥
मलस्नान बहि कृत्वा तीर्थस्नान ततोऽप्यधु ॥
शिष्या पृथक् पृथक् तत्र वपन स्नपन तथा ॥ २४ ॥
विधाय श्राद्ध चेरुस्ते धृत्वा पुड्राणि मुद्रिका ॥
तद्दृष्ट्वा वीरशैवा ये विहस्योचुरमर्पिता ॥ २५ ॥
के यूयं कुत आयाता शिवक्षेत्रमनुत्तमम् ॥
भस्मरुद्राक्षविमुखा मृन्मुद्रापुड्रस्रग्धरा ॥ २६ ॥
न वैष्णवास्ततमचक्रशंखाद्यकविवर्जिता ॥
किं श्राद्धविधिनाचेहार्ऽल्गांकितशरीरिणाम् ॥ २७ ॥

ग्रहनकों पधारे ॥ २० ॥ २१ ॥ २२ ॥ वहाँसों रामेश्वर पधारे वहाँ शैव आये पीछे लक्ष्मणतीर्थमें तीर्थविधि करवेके लिय मलस्नान बाहेर करके तीर्थस्नान कियो और शिष्यननें अलग २ मुंडन करायक स्नान ऊर्द्ध्वपुड्र मुद्रा धारण कर श्राद्ध कियो ये देसकें न सहके वीर शैव हँसके बोले ॥ २३ ॥ २४ ॥ २५ ॥ जो तुम सब कोन हो कहाँसों आये हो उत्तम शिवक्षेत्रमें भस्म रुद्राक्षको न धारण करके मृत्तिकाकी मुद्रा ऊर्द्ध्वतिलक तुलसीमाला धारण किये हो ॥ २६ ॥ और तम शख चक्र आदिके चिन्हनसों वर्जित होयवेसों तुम वैष्णवभी नहीहो जिनको शरीर अंकित नहीं

वैदिकैः पशुभिः श्राद्धादिभिर्वैदिककर्मभिः ॥
स्वर्गापवर्गौ लभ्येते तौ न लिंगार्चनं विना ॥ २८ ॥
अंतर्लिंगं बहिर्लिंगं येह्यर्चंति महेशितुः ॥
ते यांति मुक्तिं हित्त्वैव कथां विधिनिषेधयोः ॥ २९ ॥
शुष्कमार्द्रं दहत्येधो वृद्धः सन्पावको यथा ॥
शैवीभक्तिर्दहत्येवं पुण्यपातकयोर्गणम् ॥ ३० ॥
यानि कानि च पापानि निषिद्धानि श्रुतौ स्मृतौ ॥
तानि शंभोर्महापूजा यज्ञखंडे समीरिता ॥ ३१ ॥
न स्पृशेद्वैदिकं कर्म न पश्येद्वैष्णवं धिया ॥
लिंगधारी महेशस्य मुमुक्षुः शरणं व्रजेत् ॥ ३२ ॥
इत्युक्ते छात्रवर्योऽत्र भट्टार्यस्तु तदाऽब्रवीत् ॥
रे रे पाषंडिनो दूरं तिष्ठताहं ब्रवीमि वः ॥ ३३ ॥
वयं तु वैष्णवा विप्रा विष्णुस्वामिमतानुगाः ॥
एते चास्माकमाचार्यानाऽसभ्यान् विवदंत्यमी ॥ ३४ ॥

ऐसे तुम्हारे श्राद्ध विधानसों कहा हे ॥ २७ ॥ वैदिक पशुनसों श्राद्धादिक वैदिक कर्मनसों स्वर्ग मोक्षकी अभिलाषा करें हैं ओर स्वर्ग मोक्ष लिंगार्चनके विना नहीं मिलेहे ॥ २८ ॥ जो बाहेर भीतर शिवलिंगकी पूजा करें हैं वे शास्त्रके विधिनिषेधको एकआडी कर मुक्तिकों पावें हैं ॥ २९ ॥ बड़ो प्रचंड अग्नि सूखे गीले काष्टनकों भस्म कर डारे हे याहीप्रकार शैवी भक्ति पुण्यपापकों भस्म कर देय हे ॥ ३० ॥ श्रुतिस्मृतिमें जो कछू निषिद्ध पाप हैं उन सबनकों शिवकी पूजा दूरकरदेय हे ॥ ३१ ॥ महादेवको लिंगधारी पुरुष वैदिक वैष्णवधर्म्मनके विना स्पर्श कियेही मुक्ति पावे हे ॥ ३२ ॥ ऐसें उनके कहवे पे श्रीमहाप्रभुनके शिष्यवर भट्टार्य बोले जो रे रे पाखंडिगो [illegible] ॥ ३३ ॥ [illegible]

विनावैदिकमार्गेण श्रेयो नास्त्येव कुत्र चित् ॥
नारायणसमाज्ञैषा महेशस्यापि चोदना ॥ ३५ ॥
शैवतन्त्रेषु युष्माकमेव वेदे न भाषितम् ॥
इत्येवमुच्यते तत्र ज्ञाप्यते वेदमूलता ॥ ३६ ॥
प्रत्यक्षवेदत सा किं विरुद्धेऽनुमिता भवेत् ॥
विचित्रवेषा के यूय सर्वे वेदबहिष्कृता ॥ ३७ ॥
वेदनिन्दापरामूढास्तन्निन्दायां हरोऽक्षम ॥
तदाह तत्प्रधानो यो वीरमाहेश्वरो नर ॥ ३८ ॥
अहं पाशुपतोभस्माच्छन्नगात्रो जटाधर ॥
ललाटभुजहन्नाभिर्लिंगधारी शिवात्मक ॥ ३९ ॥
अह तु जगमो मूर्ध्नि धातुपाषाणलिंगभृत् ॥
त्रिशूल हृदये बिभ्रत् घटाकर्णश्शिवात्मक ॥ ४० ॥
फाले लिंगांकितो भट्टोस्म्यहं शिवपरायण ॥
भाले त्रिशूलधृग्रौद्रोस्म्यह रुद्रैकतत्पर ॥ ४१ ॥

मतानुयायी वैष्णव ब्राह्मण हैं ये हमारे गुरू हैं अमाभ्यनसा नहीं विचार करते ॥ ३४ ॥ कहींभी विना वैदिकमार्गके कल्याण नहीं भगवान्की एसी आज्ञा और महेशकीभी प्रेरणा है ॥ ३५ ॥ तुम्हारे शैवतन्त्रनमेंभी ये वेदमें लिख्यो है ये कह्यो है याहीसों वेदकी मूलता है ॥ ३६ ॥ अब प्रत्यक्ष वेदके विरुद्ध होयवेसों कहा तुम्हारो अनुमान होयसके है और वेद बहिष्कृत विचित्रवेषवारे वेदकी निंदा करवेवारे तुम कोन हो ॥ ३७ ॥ शिवभी उनकी निन्दा नहीं सहेंगे तब उनमें प्रधान वीर माहेश्वर बोले ॥ ३८ ॥ जो हम पाशुपत भस्मकों सबशरीरमें लगाये जटाधारी मस्तक भुजा हृदय नाभि इनमें लिंगधारी शिवरूप ॥ ३९ ॥ मस्तकपे धातुपाषाणके लिंग त्रिशूलकों हृदयमें धारण करवेवारे जंगम घटाकर्ण शिवके अनुचर ॥ ४० ॥ शिवभक्त भट्ट हैं त्रिशूल धारण किये रुद्रकी सेवाम तत्पर रौद्र

भुजद्वये डमरुभृदुग्रोहं चोग्रशासनः ॥
भुजद्वये तत्त्वलिंगांकाः शैवाःस्मो वयं द्विज ॥ ४२ ॥
माहेश्वरा दक्षयज्ञे देवेषु द्रावितेष्वलम् ॥
जितकापा वयं शिष्टा वीरभद्रेण निर्भयाः ॥ ४३ ॥
विष्णुब्रह्ममहेंद्राद्यायैर्दंडेन निराकृताः ॥
क्रियंते नित्यदा शंभोर्दर्शनार्थं समागताः ॥ ४४ ॥
माहेशानां च तेषां नः के प्रभावं न जानते ॥
दर्शयंति प्रभावान् ये ते किं वाक्यवशानुगाः ॥ ४५ ॥
वाक्येष्वेव च त्वच्छ्रद्धा तदा वाक्यशतं शृणु ॥
वेदः शिवः शिवो वेदो वेदोऽयं शिवभाषितः ॥ ४६ ॥
वेदे यथा शिवो गीतो न तथा देवतांतरः ॥
यो नाम्नैवेश्वरोब्रह्मेशानश्च शंकरः शिवः ॥ ४७ ॥
मूर्त्याष्टमूर्त्तिर्वीर्याच्चु निर्गीर्णाण्डकटाहकः ॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिंगलम् ॥ ४८ ॥

हम हैं ॥ ४१ ॥ दोनों भुजानमें डमरूनके चिह्न धारण किये उग्र शिक्षा देवेवारे उग्र शैव हम हैं ॥ ४२ ॥ दक्षके यज्ञमें देवतानके भागवेप जीतवेवारे वीरभद्रसों निर्भय ॥ ४३ ॥ जिनके दंडसों महेशके दर्शननकों आये ब्रह्मा विष्णु इन्द्र इनको तिरस्कार नित्य होय हे वे हम हैं ॥ ४४ ॥ हमारो ओर महेशको प्रभाव कोन नहीं जानें हे जो प्रभावके दिखायवेवारे हैं वे कहा वाक्यके वशहें ॥ ४५ ॥ ओर वाक्यनमेहीं जो तुम्हारी श्रद्धा हे तो सौ वाक्य सुनो वेद शिव हे शिव वेद हे ये वेद शिवको कह्यो भयो हे ॥ ४६ ॥ वेदमें जेसो शिवको वर्णन हे वेसो दूसरे देवतानको नहीं हैं जिनको नामही ईश्वर ब्रह्म ईशान शंकर शिव हे ॥ ४७ ॥ आठ मूर्ति हैं अपने पराक्रमसों ब्रह्मांडको लीलैं हें ऋत सत्य परब्रह्म कृष्ण पिंगल

ऊर्द्धरूप विरूपाक्षं विश्वरूपाय ते नम ॥
इत्येव श्रुतिवाक्यानि त श्रयेदिति चोच्यते ॥ ४९ ॥
द्यौर्मूर्द्धानमिति श्रुत्या मुमुक्षु शरण व्रजेत् ॥
आथर्वणोपनिषदामाथर्वणशिखादिषु ॥ ५० ॥
पश्य रुद्रस्य माहात्म्य स्पष्टमेव निरूप्यते ॥
दुर्वासस प्रति पुन शंभूक्तमपि श्राव्यते ॥ ५१ ॥
अहमेवाक्षर कर्त्ता परात्परतर शिव ॥
सदात्मा ब्रह्मविष्णुश्च लोकानामादिकारणम् ॥ ५२ ॥
पुराण पूर्वग पूर्वो ज्येष्ठ श्रेष्ठोऽहमद्वय ॥
मदिच्छारूपिणी शक्तिर्जगत्संहारकारिणी ॥ ५३ ॥
लुप्ता मय्येव सा सृष्टा पुन सृष्टौ मयाऽनघ ॥
सा महत्तत्त्वमुत्पाद्य त्रिगुणांकुरकारणम् ॥ ५४ ॥
अहंकार समुत्पाद्य त्रैगुण्य पूर्वतत्त्वत ॥
गुणत्रयात्मकान् कृत्वा रुद्रानेकादशाऽव्ययान् ॥ ५५ ॥

॥ ४८ ॥ ऊर्ध्वरूप विरूपनेत्र विश्वरूप एसे उनकों नमस्कार है एसे श्रुतिवाक्य उन्हींमें घटें है ॥ ४९ ॥ "द्यौ मूर्द्धानम्" या श्रुतिसों मोक्षकी इच्छा करवेवारो उनकी शरणमें जाय अथर्वणके उपनिषदनमें रुद्रको माहात्म्य स्पष्ट कह्यो है ओर दुर्वासाके प्रति जो शिवजीनें कह्यो है वो भी सुनावे हैं ॥ ५० ॥ ५१ ॥ मैं ही अक्षर कर्ता परसों पर शिव आत्मा ब्रह्मा विष्णु लोकनके आदि कारण पुराण पूर्व श्रेष्ठ द्वितीयरहित हूं जगत्के संहार करवेवारी मेरी इच्छारूप शक्ति मेरेहीमें लीनही ॥ ५२ ॥ ५३ ॥ सृष्टिके प्रारम्भमें पीछे मोसों उत्पन्न भई यानें महत्वकों उत्पन्न करके त्रिगुणरूपी अंकुरके कारण अहंकारकों उत्पन्न करकें गुणत्रयात्मक नाशरहित ग्यारह रुद्रनकों उत्पन्न करके आदरसों राजस सृष्टिकर्त्ताकों उत्पन्न करती भई ओर पालन करवेवारे सात्विक प्रलय करवेवारे तामस ईश्वरनकों उत्पन्न

राजसं सृष्टिकर्तारं कारयामास सादरम् ॥
सात्विकान् पालनपरान् तामसान्प्रलयेश्वरान् ॥ ५६ ॥
क्रमादवर्णात्संजातानुवर्णाच्च मवर्णतः ॥
तेषु मुख्यतमाब्रह्मविष्णुरुद्रा इति त्रिधा ॥ ५७ ॥
अन्ये तदनुवृत्तिस्था एवमेकादशेश्वराः ॥
तेषां विभूतयः सर्वे देवा लोकाश्चराचराः ॥ ५८ ॥
पृथक् पृथक् नामयुतास्तत्तत्कर्मानुसारतः ॥
ते सर्वे प्रलये ब्रह्म तेजस्येव लयं गताः ॥ ५९ ॥
राजसे रक्तवर्णे च स तु ब्रह्मा समस्तभृत् ॥
कृष्णो नारायणस्यैव तेजस्यस्तोऽभवत्पुरा ॥ ६० ॥
रुद्रस्य शुक्लवर्णे तु ह्यस्तो नारायणः स्वयम् ॥
स तु रुद्रः प्रकृत्यंतर्गतशुक्लेन तेजसा ॥ ६१ ॥
मदिच्छा शुक्लवर्णा सा मय्येव विलयं गता ॥
अतोऽस्म्यनंतः सर्वार्थो वेदैरपि न गोचरः ॥ ६२ ॥

कियो ॥५४॥५५॥ ५६ ॥ क्रमसों (अ) वर्णसों ब्रह्मा (उ) वर्णसों विष्णु (म) वर्णसों रुद्र ये भये ॥ ५७ ॥ ओरबी एकादश रुद्र सब देवता चराचर मात्र सब लोग इन्हींकी विभूति हैं ॥ ५८ ॥ कर्मके भेदसों अलग २ नाम हैं वे सब ब्रह्मतेजहीमें लीन हैं ॥ ५९ ॥ समस्तसंसारके धारण करवेवारे ब्रह्मा उनके रक्तवर्णराजसमें अस्त होंय हैं कृष्ण नारायणके तेजमें लीन होंय हैं ॥ ६० ॥ रुद्रके शुक्लवर्णमें स्वयं नारायण अस्त होंय हैं वे रुद्र अपने शुक्लतेजकरकें प्रकृतिके अन्तर्गत होंय हैं ॥ ६१ ॥ मेरी शुक्लवर्ण इच्छा मेरेहीमें लीन होय हे यातें हम अनन्त पूर्णार्थ वेदसोंबी नहीं

वेत्ति कश्चिन्न मन्मायां जन्मस्थितिलयावहाम् ॥
अतो रुद्रार्चनपरा रुद्रसूक्तजपान्विता ॥ ६३ ॥
पचाक्षरीजपपरा रुद्राक्षाभरणैर्युता ॥
भूतिभूषितसर्वांगा सदा ध्यानपरायणा ॥ ६४ ॥
ईश्वर रुद्रमव्यक्त व्यक्तरूप जगल्लये ॥
येऽर्चंति नरश्रेष्ठास्तेषां मुक्तिः करे स्थिता ॥ ६५ ॥
अतस्त्व भूतिरुद्राक्षधारणं कुरु सर्वदा ॥
कुरु नित्यं महादेवपूजनं भक्तिसयुत ॥ ६६ ॥
दुर्वाससे मुनीन्द्राय ह्येवमुक्त्वासदाशिव ॥
अंतर्दधे तदाचारसक्तोऽभून्मुनिसत्तम ॥ ६७ ॥
इत्येष वाक्यसंचेषु महेशस्य महेशता ॥
प्रदृश्यते तदाचारस्तात्रिको न सदोत्तम ॥ ६८ ॥
एतदाचारविमुख शिवभक्तिपराङ्मुख ॥
शिवक्षेत्र कथ प्राप्तास्तत्र कारणमुच्यताम् ॥ ६९ ॥

जाने जाँय हैं ॥ ६२ ॥ जन्म स्थिति लय करबेवारी मेरी मायाकों कोई नहीं जाने है याते रुद्रकी पूजामें तत्पर रुद्रसूक्तके जप करबेवारो ॥६३॥ पचाक्षरी मन्त्रके जपमें तत्पर रुद्राक्षके आभूषणनसा भूषित सर्वाङ्गमें विभूति लगायें सदा ध्यान करबेवारे ॥६४॥ ईश्वर रुद्र अव्यक्त ओर व्यक्त रूपका जे भजे हैं उनपुरुषनके हाथहीमें मुक्ति मुक्ति है॥६५॥याते विभूति रुद्राक्षको तुम सर्वदा धारण करो ओर भक्तिसों नित्य महादेवजीके पूजन करो ॥ ६६ ॥ ऐसे दुर्वासा ऋषिसूँ सदाशिव कहके अन्तर्धान होयगये ओर दुर्वासा मुनि उनके आचार पूजनमें तत्पर भये ॥ ६७ ॥ इत्यादि वाक्य समूहनमें महेशकी महेशता दीखे पडे है यासों ये आचार तान्त्रिक नहीं किन्तु उत्तम है॥६८॥ आप या आचारसों विमुख शिवभक्तिसों पराङ्मुख शिवक्षेत्रमें कैसे आये

इत्युक्ते वीरशैवेन शिष्यभट्टस्तदाऽब्रवीत् ॥
शिवसंज्ञास्ति वेदस्य कल्याणस्य महेशितुः ॥ ७० ॥
न तावता तवार्थः स्याद्भवान् पाशुपतो यथा ॥
द्वे ब्रह्मणी वेदितव्ये इत्यादिश्रुतिदर्शनात् ॥ ७१ ॥
वेदोयमक्षरब्रह्म स्वयंभूर्न शिवोदितः ॥
वेदो नारायणः साक्षात् स्वयंभूरिति पठ्यते ॥ ७२ ॥
ये शैवगीरिति ब्रुयुर्नैगमास्तेऽधमास्त्रयीम् ॥
इत्येवं भट्टपादादेर्निर्णयः शिष्टसंमतः ॥ ७३ ॥
महेशमहिमा वेदे गीयते तावता तु किम् ॥
महेश्वरः परंब्रह्म शिवो वा नास्ति नः क्षतिः ॥ ७४ ॥
परमात्मा परब्रह्म मूर्त्तयस्तस्य ते मताः ॥
ब्रह्मविष्णुमहेशाद्या मूर्त्ताऽमूर्त्तात्परो हि सः ॥ ७५ ॥
नारायणशिवब्रह्मेशानविष्ण्वादिनामभिः ॥
कथ्यते परमं तत्त्वमिति वाराहभाषितम् ॥ ७६ ॥

हो वामें कारण कहो ॥ ६९ ॥ ऐसे वीरशैवके कहवे पे शिष्य भट्ट बोले जो शिव कल्याण संज्ञा वेदकी हे ओर महेशकी हे ॥ ७० ॥ यातें तुम्हारो अर्थ नहीं सिद्ध भयो कारणके आप पाशुपत हो "द्वेब्रह्मणी" इत्यादि श्रुतिसों ॥ ७१ ॥ वेद ये अक्षर ब्रह्म स्वयम्भू हे शिवको बनायो नहीं वेद साक्षात नारायण स्वयम्भू हे एसो लिख्यो हे ॥ ७२ ॥ जो त्रयीकों शिवकी वाणी कहें हें वे वैदिक नहीं अधम हें एसो शिष्टसम्मत भट्टपादादिकनको निर्णय हे ॥ ७३ ॥ महेशकी महिमा वेदमें गाई हे तासों कहा भयो महेश्वर परब्रह्म हें या शिव हें यामें हमारी हानि नहीं ॥ ७४ ॥ परमात्मा परब्रह्म हें उनकी मूर्ति ब्रह्मा विष्णु महेश हें वे मूर्तामूर्तसों पर हें ॥ ७५ ॥ नारायण शिव ब्रह्म ईशान विष्णु आदिनामनसों परम तत्त्व कह्यो जाय हे ये

यदि कोशादिमानेन शिवेशानादयोऽभिधा ॥
रूढ्या त्र्यम्बकमेवाहुस्तदापि श्रूयतामिदम् ॥ ७७ ॥
कोशे नानार्थशब्दानां तत्तदर्थेषु रोपता ॥
प्रामाणिकी प्रकरणादिषु सेशादिगा तथा ॥ ७८ ॥
ननु नारायणादीनां नाम्नामन्यत्र सभव ॥
इत्यादिवाक्यात् सूत्रेभ्य ईशाद्या विष्णुवाचका ॥ ७९ ॥
नतस्तु महिमा विष्णोर्यथा वेदे निरूप्यते ॥
तथा नान्यस्य कस्यापि देवास्तस्यांगमूर्तय ॥ ८० ॥
इत्युक्ते वीरशैवस्तु पुनराह रुषा ज्वलन् ॥
नारायणादिशब्दाये कुतो न शिववाचका ॥ ८१ ॥
विशप्रवेशने धातुश्शिवो विष्णुर्न सर्वग ॥
नारायणे तथा णत्वं रषाभ्यामिति किं न हि ॥ ८२ ॥
नारं जीवसमूह स्याच्छिवस्तस्यायन स्वयम् ॥
नारायणस्ततो नाम शकरस्य तथा परे ॥ ८३ ॥

वाराहपुराणमें कह्यो हे ॥ ७६ ॥ जो कोशादिमानसों शिव ईशान आदि नाम रूढीसों त्र्यम्बककों कहे हे तोभी ये सुनो ॥ ७७ ॥ कोशमें नानार्थ शब्दनको वा वा अर्थनमें प्रयोग प्रकरणसों होय हे वोही प्रामाणिक हे ॥ ७८ ॥ परन्तु नारायणआदिशब्दनको दूसरी जगह सभव नहीं होयसके सूत्रादिकनसों ईश आदि शब्द विष्णुवाचक हें॥ ७९॥ याहीसों विष्णुकी महिमा जेसी वेदमें हे वेसी ओरकी नहीं दूसरे देवता सब उनके अग हें ॥ ८० ॥ ये कहवे पे क्रोधसों जलते वीर शैव फिर बोले जो नारायण आदि शब्द क्यों नहीं शिववाचक हे ॥ ८१ ॥ विशप्रवेशने धातु हे विष्णु सर्वव्यापक नहीं किन्तु शिव हे ओर नारायण या शब्दमें "रषाभ्याम्" या सूत्रकरके णत्व क्यों नहीं होतो ॥ ८२ ॥ सब जीवनको नाम नार हे उनके आश्रय

नारायणोपनिषदि शंकराद्यभिधाश्च याः ॥
रुद्राणां शंकरश्चास्मीत्यादितोमूर्तयोऽस्य ताः ॥ ८४ ॥
नारायणोपनिषदा ततः प्रोक्तो महेश्वरः ॥
इत्थमन्यत्र द्रष्टव्यं त्र्यंबकान्नपरोऽपरः ॥ ८५ ॥
भट्टार्यः पुनराहैनं रे रे व्याकृतिविच्युत ॥
रषाभ्यामिति सूत्रस्य प्रवृत्तिस्त्वेकनामनि ॥ ८६ ॥
वरनाभिपदादौ तु णत्वाभावस्य दर्शनात् ॥
नारायणपदे पूर्वपदादिति प्रवर्तते ॥ ८७ ॥
संज्ञायामेव सूत्रेण णत्वं सम्यग् विधीयते ॥
गवादिषु तथा विन्देः संज्ञायामिति सूत्रतः ॥ ८८ ॥
गोविन्दपदमापादिपुरुषोत्तमपदन्तथा ॥
नारायणोपनिषदाऽनन्यसंज्ञाऽभिधायिनः ॥ ८९ ॥
सर्वोपनिषदां वाचस्तस्मिन्नेव समर्पिताः ॥
यत्तु मूर्त्त्यष्टमूर्तित्त्वं तस्यैव जगदात्मनः ॥ ९० ॥

स्वयं शिव हैं यातें नारायण ये नाम शंकरको हे औरबी याही प्रकार ॥ ८३ ॥ नारायणोपनिषदमें जो शंकरादिक संज्ञा हें वे रुद्रनके बीचमें शंकर हम हैं इत्यादि वचननसों इन्हींकी मूर्ति हैं ॥ ८४ ॥ तासों नारायणोपनिषद्सों महेश्वरही कहे गये याही प्रकार ओरबी जगह देखो त्र्यम्बकसों परें दूसरो देवता कोई नहीं हे ॥ ८५ ॥ तब भट्टार्य पीछें बोले जो अरे व्याकरणशून्य "रषाभ्याम्" ये सूत्र एकपदमें लगे हे ॥ ८६ ॥ याहीसों वरनाभि आदि पदमें णत्व नहीं देखते और नारायणपदमें तो "पूर्वपदात्" यासूत्रसों णत्व होय हे॥८७॥ सो संज्ञामें होय हे वरनाभि ये संज्ञा नहीं हे जेसे गोविन्द पद संज्ञाहीमें होय हे ॥ ८८ ॥ नारायणोपनिषद्करकें गोविन्द पुरुषोत्तम नारायण ये नाम दूसरेके वाचक नहीं ॥८९ ॥ सब उपनिषदनके वचन उन्हींमें समन्वय होंय हें ओर अष्टमूर्ति वाही जगदा-

विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जगत् ॥
इति गीताद्युक्तितस्तु वैशिष्ट्यं नाष्टमूर्त्तिगम् ॥ ९१ ॥
यस्य रोमसु ब्रह्मांडकोटीनां कोटयोऽणुवत् ॥
तस्यांडगलने किं भो वीर्यातिशयदर्शनम् ॥ ९२ ॥
ऋतं सत्यं परं ब्रह्मेति श्रुतिस्तु प्रजापते ॥
नृकेसरिपरत्वेन व्याचख्युस्तापिनीमते ॥ ९३ ॥
द्यौ मूर्द्धादिश्रुतीनां तु नास्त्येव दृढलिंगता ॥
अथर्वमूर्द्धाशिखयोर्नृहरेस्तापनी वरा ॥ ९४ ॥
यतस्तत्पाठिसाहस्र्याच्छ्रेष्ठउक्तोहितां पठन् ॥
तामसानां विमोहाय दुर्वासः शासनं न किम् ॥ ९५ ॥
श्रेयसे शिवभक्तानामथवास्तु शिवाप्तये ॥
तथैव विष्णुमहिमा किं न शास्त्रेषु गीयते ॥ ९६ ॥
सारं भागवतं सर्वपुराणानामिति स्थितिः ॥
तथैव सर्वशास्त्राणां भारतं सारमुच्यते ॥ ९७ ॥

स्मार्त्त हैं ॥ ९०॥ "विष्टभ्याह" इत्यादि गीताके वचननसों उनके एक अंशमें ये जगत स्थित है तासों विशेषपनो अष्टमूर्तिमें नहीं ॥९१॥ जिनके रोमरोमनमें कोटिब्रह्मांड अणुके समान हैं उनको ब्रह्मांड निगलवेमें कहा अतिशय पराक्रम है ॥ ९२ ॥ "ऋतसत्यम्" ये श्रुतितो नृसिंहपर है तापनीयमें व्याख्यान कियो गयो है ॥९३॥ "द्यौमूर्धा" इत्यादि श्रुतिनमें कछु दृढ प्रमाण नहीं है और अथर्व मूर्धा शिखा में नृसिंह तापनीय श्रेष्ठ है॥९४॥ और शतरुद्रीको पाठ करनेवारो श्रेष्ठ है ये जो कह्यो सो और दुर्वासाको शासन तामसनके मोहके लिये कहा नहीं ॥ ९५ ॥ अथवा शिवभक्तनके कल्याणकेही लिये या शिवकी मानिवे लिये है याभांति सगरे विष्णु महिमा सोऊ शास्त्रमें गायो गयो है ॥ ९६ ॥ जैसे सब पुराणनमें भागवत

भारतस्य तु गीतैव सारं वेदपुराणयोः ॥
तस्मिंस्तु भगवान् विष्णुः श्रीकृष्णः पुरुषोत्तमः ॥ ९८ ॥
ब्रह्मविष्णुमहेशादेः कारणं जगतस्तथा ॥
वाराहे पठ्यते रुद्रगीतायां निर्णयः श्रुतः ॥ ९९ ॥
विष्णुरेव परब्रह्म त्रिभेदमिहपठ्यते ॥
वेदसिद्धांतमार्गेषु तन्न जानंति मोहिताः ॥ १०० ॥
विशप्रवेशने धातुस्ततोनुप्रत्ययादनु ॥
विष्णुर्यः सर्वदेवेषु परमात्मा सनातनः ॥ १०१ ॥
तथैव तत्र वरदानाध्यायेऽपि निरूप्यते ॥
अन्यं देहि वरं देव प्रसिद्धं सर्वजंतुषु ॥ १०२ ॥
मूर्त्तौ भूत्वा भवानेव मामाराधय केशव ॥
मां वहस्व सदैवेश वरं मत्तो गृहाण च ॥ १०३ ॥
येनाहं सर्वदेवानां पूज्यात्पूज्यतरो भवे ॥
देवकार्यावतारेषु मानुषत्वमुपागतः ॥ १०४ ॥

सार है तेस सब शास्त्रनमें सार भारत है ॥ ९७ ॥ भारत और वेदको सार गीताहीहै तामें तो भगवान् विष्णु श्रीकृष्णही पुरुषोत्तम हैं ये कह्यो है ॥ ९८ ॥ ब्रह्मा विष्णु महेश आदिके और जगत्के कारण वाराहपुराणमें विष्णुही पढ़े हैं और रुद्रगीतामें येही निर्णय सुन्यो है ॥ ९९ ॥ विष्णुही पर ब्रह्म हैं इन्हींके वेदासिद्धान्तमार्गमें तीन भेद हैं ताकों अज्ञानी नहीं जानते ॥ १०० ॥ "विशप्रवेशने"धातुसों नु प्रत्यय होयवेसों विष्णु बने है जो सबमें परमात्मा सनातन हैं ॥ १०१ ॥ याही प्रकार वहाँ वरदानाध्यायमेंबी कह्यो है के हे केशव सब प्राणीनमें प्रसिद्ध दूसरो वरदान दीजिये स्वरूपधरके ॥ १०२॥आपही हमारी आराधना करो हमको सदा धारण करो ओर हमसोंबी वरदान लेवो ॥ १०३ ॥ जासों सबदेवनके

त्वामेवाराधयिष्यामि त्वं च मे वरदो भव ॥
यत्त्वयोक्तं वहस्वेति देवदेव शिवापते ॥ १०५ ॥
सोहं वहामि त्वां देव मेघो भूत्वा शतं समाः ॥
एवमेष हरिर्देवः सर्वगः सर्वभावनः ॥ १०६ ॥
वरदोऽभूत्परोमह्यं तेनाहं देवतेश्वरः ॥
नारायणात्परो देवो न भूतो न भविष्यति ॥ १०७ ॥
एतद्रहस्यं वेदानां पुराणानां च सत्तम ॥
मया वः कीर्तितं सर्वं यथाविष्णुरिहेज्यते ॥ १०८ ॥
गारुडेऽपि द्वितीयाध्याये महेशवचस्तथा ॥
अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम् ॥ १०९ ॥
सर्वदं सर्वगं सर्वं सर्वप्राणिहृदि स्थितम् ॥
भस्मोद्धूलितदेहस्तु जटामंडलमंडितः ॥ ११० ॥
विष्णोराराधनार्थं मे व्रतचर्या पितामह ॥
एवं पुराणवाक्येषु विष्णोरुत्कर्षदर्शनात् ॥ १११ ॥

मध्यमें हम बड़े पूज्य हुए तब विष्णुने कह्यो जो हे देवदेव उमापते देवनके कार्यके लिये मनुष्यस्वरूप धारण कर तुम्हारीही आराधना करेंगे तुम हमको वरदान देओ। और जो वहनको कह्यो सो हम मेघ होयकै सौ वर्ष तुमको धारण करेंगे या प्रकार हरि सर्वव्यापी है ॥ १०४ ॥ १०५ ॥ १०६ ॥ और हमको परदान दीनो यासों सर्वदेवनमें हम श्रेष्ठ हैं नारायणसों पर देव नहीं है ॥ १०७ ॥ ये रहस्य वेदपुराणनको है सो सब तुमसों कह्यो जैसे विष्णु पूजे जाय है ॥ १०८ ॥ याही प्रकार गरुडपुराणमेंभी दूसरे अध्यायमें महेशको वचन है जो हम उन परमात्मा ईश्वर विष्णुको ध्यान करें हैं ॥ १०९ ॥ जो सर्वव्यापी सर्वप्राणीनके हृदयमें स्थित हैं सब शरीरमें भस्म लगायके जटामंडल धारणा ये हमारी व्रतचर्या हे पितामह विष्णुके

शिवस्य श्रूयते तद्वच्छक्तेः सूर्यस्य किं ततः ॥
नारायणः परब्रह्म स एव पुरुषोत्तमः ॥ ११२ ॥
ब्रह्मविष्णुमहेशाद्याऽवतारा एवतस्य ते ॥
गुणत्रयविभागेन विष्णुः सत्त्वशरीरभृत् ॥ ११३ ॥
सत्वं संनिहितं तस्य निर्गुणस्य परात्मनः ॥
पार्थिवाद्दारुणो धूमस्तस्मादग्निस्त्रयीमयः ॥ ११४ ॥
तमसस्तु रजस्तस्मात्सत्वं यद्ब्रह्मदर्शनम् ॥
उत्कर्षो वर्ण्यते विष्णोस्तत एव त्रिमूर्तिषु ॥ ११५ ॥
ततस्तु वैष्णवाचार आदृतो द्वादशोक्तिभिः ॥
पंचरात्रस्य शास्त्रस्य महिमा भारते स्फुटा ॥ ११६ ॥
तत्र भागवताचारः स चास्माभिः समादृतः ॥
भस्मरुद्राक्षशूलादिर्वेदधर्मे न दृश्यते ॥ ११७ ॥
वैष्णवा विमुखास्तस्माद्धर्मात्पाशुपताद्धि वः ॥
पुरारिर्गुरुरस्माकं मुरारेरतिवल्लभः ॥ ११८ ॥

आराधनके लियें हे याही प्रकार पुराणनमें विष्णुकी श्रेष्ठता देखें हें ॥ ११० ॥ १११ ॥ ओर एसेही शिव शक्ति सूर्य कीबी सुने हें परन्तु तासों कहाभयो नारायण परब्रह्म हें वोही पुरुषोत्तमहें ॥ ११२ ॥ ब्रह्मा विष्णु महेशादिक उनके अवतार हें तीनों गुणनके विभागसों सत्वगुणशरीर विष्णु हें ॥ ११३ ॥ वा निर्गुणपरमात्माकी सत्ता सब जगह हे पार्थिवसों दारुण धूम तासों त्रयीमय अग्नि तासों तम तासों रजोगुण तासों सत्वगुण जो ब्रह्मदर्शन हे याहीलियें तीनोंमूर्तिके बीचमें विष्णुकी श्रेष्ठताको वर्णन हे ॥ ११४ ॥ ११५ ॥ ताहीसों बारहों तन्त्रनमें वैष्णवाचारको आदर हे ओर पंचरात्रशास्त्रकी महिमा भारतमें स्पष्ट हे ॥ ११६ ॥ तामें जो भागवताचार हे वाको हम आदर करें हें भस्म रुद्राक्ष शूलादिक वेदधर्ममें नहीं दीखते ॥ ११७ ॥ याहीसों तुम्हारें

त्वामेवाराधयिष्यामि त्वं च मे वरदो भव ॥
यत्त्वयोक्तं वहस्वेति देवदेव शिवापते ॥ १०५ ॥
सोहं वहामि त्वां देव मेघो भूत्वा शतं समाः ॥
एवमेष हरिर्देव सर्वग सर्वभावन ॥ १०६ ॥
वरदोऽभूत्परोमह्यं तेनाहं देवतैश्वर ॥
नारायणात्परो देवो न भूतो न भविष्यति ॥ १०७ ॥
एतद्रहस्यं वेदानां पुराणानां च सत्तम ॥
मया व कीर्तितं सर्वं यथाविष्णुरिहेज्यते ॥ १०८ ॥
गारुडेऽपि द्वितीयाध्याये महेशवचस्तथा ॥
अहं ध्यायामि तं विष्णुं परमात्मानमीश्वरम् ॥ १०९ ॥
सर्वदं सर्वगं सर्वं सर्वप्राणिहृदि स्थितम् ॥
भस्मोद्धूलितदेहस्तु जटामंडलमंडित ॥ ११० ॥
विष्णोराराधनार्थं मे व्रतचर्या पितामह ॥
एवं पुराणवाक्येषु विष्णोरुत्कर्षदर्शनात् ॥ १११ ॥

मध्यमें हम बडे पूज्य होय तब विष्णुनें कह्यो जो हे देवदेव उमापते देवनके कार्यके लिये मनुष्य स्वरूप धारण कर तुम्हारीही आराधना करेंगे तुम हमको वरदान देओ और जो वहनको कह्यो सो हम मेघ होयकें सौ वर्ष तुमको धारण करेंगे या प्रकार हरिदेव सर्वव्यापी हैं ॥ १०४ ॥ १०५ ॥ १०६ ॥ और हमको वरदान दीनो यासों सर्वदेवनमें हम श्रेष्ठ हैं नारायणसों पर देव नहीं है ॥ १०७ ॥ ये रहस्य वेदपुराणनको है सो सब तुमसों कह्यो जैसें विष्णु पूजे जाय है ॥ १०८ ॥ याही प्रकार गरुडपुराणमेंभी दूसरे अध्यायमें महेशको वचन है जो हम उनपरमात्मा ईश्वर विष्णुको ध्यान करें हैं ॥ १०९ ॥ जो सर्वव्यापी सबप्राणीनके हृदयमें स्थित हैं सब शरीरमें भस्म लगायके जटामंडल धारणो ये हमारो व्रतचर्या हे पितामह विष्णुके

विष्णोःप्रियो यत्प्रियएवविष्णुर्विष्ण्वंघ्रिजां विष्णुपदीं दधौयः ॥
तं वैष्णवत्त्वं भुवि दर्शयंतं रामेश्वरं नौमि रमेशरूपम् ॥ १२६ ॥
द्वन्द्वं जगुर्भेदधियो मनुष्या जगौ बहुव्रीहिरुमेश्वरोयम् ॥
हरिर्जगौ तत्पुरुषं पदेऽस्य रामेश्वरं नौमि रमेशरूपम् ॥ १२७ ॥
लब्ध्वा मनुं भागवतं ददौ यो देवर्षये श्रीपुरुषोत्तमास्यात् ॥
सत्संप्रदायः प्रचरत्यतस्तं रामेश्वरं नौमि रमेशरूपम् ॥ १२८ ॥
हिताय लोकस्य विषं पपौ यो हिताय तस्य त्रिपुरं ददाह ॥
तमीश्वराणां परमेशमाद्यं रामेश्वरं नौमि रमेशरूपम् ॥ १२९ ॥
इत्थं स्तुत्वा नमस्कृत्य संप्रदायगुरुं हरम् ॥
आचार्यो देवदेवस्य ततोऽकुर्वन् प्रदक्षिणाम् ॥ १३० ॥

रामेश्वरके प्यारे गंगाजलको अर्पण करवायो भेट द्रव्य वंदन पूजन शतरुद्री पाठ इनके भये पीछें आपनें रामेश्वरकी स्तुति पढी ॥ १२४ ॥ ॥ १२५ ॥ जो विष्णुके प्रिय ओर विष्णु जिनके प्रिय संसारमें वैष्णवताकों दिखावते विष्णुचरणसों उत्पन्न गंगाजीकों धारण करवेवारे एसे विष्णुरूप रामेश्वरकी में स्तुति करूँ हूँ ॥ १२६ ॥ रामेश्वर या नाममें शिवराममें भेद मानवेवारेननें राम ओर ईश्वर (महादेव) ये द्वन्द्व समास कह्यो इन रामेश्वरनें "राम हें ईश्वरजिनके" एसो बहुव्रीहि कह्यो ओर रामनें "रामके ईश्वर" एसो तत्पुरुष कह्यो एसें विष्णुरूप रामेश्वरकी में स्तुति करूँ हूँ ॥ १२७ ॥ श्रीपुरुषोत्तमके श्रीमुखसों वैष्णवमंत्रकों पायकें जिननें नारदकों दीनों एसें सम्प्रदायके प्रचार करवेवारे विष्णुरूप रामेश्वरकी में स्तुति करूँ हूँ ॥ १२८ ॥ जिननें लोकके हितके लियें विष पान ओर त्रिपुरकों भस्म कियो उन ईश्वरनके आद्य ईश विष्णुरूप रामेश्वरकी में स्तुति करूँ हूँ ॥ १२९ ॥ या प्रकार सम्प्रदायके गुरु हरकी स्तुति नमस्कार कर पीछें श्रीमदाचार्यजीनें प्रदक्षिण करी ॥ १३० ॥

तीर्थयात्राविधौ प्राप्त शैव क्षेत्र समागता ॥
वय तु वैष्णवा विष्णु सर्वमूर्तिषु सस्थितम् ॥ ११९ ॥
भावयामस्तथा तस्य भावुक पूजयाम्यत ॥
इत्युक्ते क्रोधताम्राक्षा वीरमाहेश्वरा जना ॥ १२० ॥
परस्परं जगु सर्वे हंतव्या दुर्धियोह्यमी ॥
तेषां तद्वचनं श्रुत्वा जगर्जुर्वीरवैष्णवा ॥ १२१ ॥
जीवन्मृता कथ यूय हंतारो न कुबुद्धय ॥
इत्युक्त्वा मुमुचुर्बाणान् पाषाणान् भिंदपालत ॥ १२२ ॥
ततस्तु दुद्रुवु सर्वे पड्विधा लिंगधारिण ॥
समाप्य च विधिं तत्र जग्मूरामेश्वरालयम् ॥ १२३ ॥
काशीविश्वेश्वर दृष्ट्वा रामेशं द्रष्टुमागता ॥
पार्वतीयै समानीत विष्णुपद्याजनैर्जलम् ॥ १२४ ॥
समर्पयति ह्यार्यास्तच्छ्रीरामेशस्यवल्लभम् ॥
निवेदिते बलेर्वित्ते विहिते वदनाहण ॥
पठिते शतरुद्रीये पेठूरामेश्वरस्तुतिम् ॥ १२५ ॥

पाशुपत धर्मसों वैष्णव विमुख हैं और मुरारिके अतिप्यारे पुरारि शिव हमारे गुरु हैं ॥ ११८ ॥ तीर्थ यात्राविधिमें प्राप्त शैवक्षेत्रका हम आये हे ओर हम वैष्णव सब मूर्तिनमे विष्णुही की भावना करते उन्हींकी पूजा करहैं एसें कहबेपे क्रोधसों लालनेत्रवारे वीर माहेश्वर जन परस्पर बोले जो सब इन दुर्बुद्धीनको मारो ये उनके वचन सुनके वीर वैष्णव गर्जवे लगे ॥ ११९ ॥ १२० ॥ १२१ ॥ ओर कुबुद्धि जीते भये मरे तुम कैसे मारोगे ये कहकर बाण ओर गोफनासो पथ्थरनको फेंके ॥ १२२ ॥ तब छहो प्रकारके लिंगधारी भगे पीछे वहाँ विधि समाप्त करके रामेश्वरके मंदिरकों गये ॥ १२३ ॥ वहाँ काशीविश्वेश्वरके दर्शन कर रामेश्वरके दर्शनकों आये ओर पर्वतीलोगनके लाय भये

दर्भशायिनमायाता गुरवोऽतःसहानुगाः ॥
नारायणं समीक्ष्यैव निष्किंचनजनादृतम् ॥ १ ॥
संपूज्योपायनं चक्रुः स्थिताश्चाथो निजार्चने ॥
शालग्रामं समर्चतः पौरुषं सूक्तमूचिरे ॥ २ ॥
निवर्त्य पूजनं विष्णोः पेठुर्भागवतागमम् ॥
सप्ताहं तत्र संप्राप्ता विपिने वीरवैष्णवाः ॥ ३ ॥
नमस्कृत्य गुरूनग्रे स्थिताः प्रोचुः परस्परम् ॥
लौकिका वैष्णवाश्चेमे नानन्यशरणाहरेः ॥ ४ ॥
ततः प्रोचे पुनर्वीरवैष्णवोज्ञानशेखरः ॥
शृणवन्तु मद्वचः सम्यग्यूयमाचार्यतां गताः ॥ ५ ॥
निर्जिता वीरशैवेशाः श्रुत्वा वयमुपागताः ॥
नारायणं समाश्रित्य येऽन्यधर्ममुपासते ॥ ६ ॥
ते लौकिका वैष्णवाः स्युर्न ते नारायणप्रियाः ॥
नान्यदेवं नमस्कुर्यात् नान्यदेवं विलोकयेत् ॥ ७ ॥

पीछें शिष्यसमेत आप दर्भशयनमें आयें वहां निष्किंचन भक्तजननसों आदर किये जांय एसे जो नारायण तिनके दर्शन पूजा भेट कर अपनी निज सेवामें विराजे ओर शालग्रामकी सेवा करते पुरुषसूक्त पढ्यो ॥ १ ॥ २ ॥ विष्णुके पूजनसों निवृत्त होयकें श्रीमद्भागवतको पाठ सप्ताह कियो तामें वीरवैष्णव आये ॥ ३ ॥ सो आपकों नमस्कार करकें ठाडे रहकें परस्पर आपसमें बात करवे लगे जो ये लौकिक वैष्णव हें भगवानूके अनन्य भक्त नहीं हें ॥ ४ ॥ फिर उनमेंसों वीरवैष्णव ज्ञानशेखर नामको बोल्यो जो हमारे वचन सुनों अच्छी तरहसों आप आचार्य हें ॥ ५ ॥ हमनें सुन्यों हे के वीरशैवनकों आपनें जीत्यो हे तासों आये हें नारायणको आश्रय लेकें जो ओर धर्मकी उपासना करें हें ॥ ६ ॥ वे लौकिक वैष्णव हें नारा-

श्रीगौर्यादर्शनं चक्रुर्ददृशुश्चापरान्सुरान् ॥
स्नातास्तत्रत्यतीर्थेषु वह्नितीर्थे सहानुगे ॥ १२१ ॥
दर्शागौर्कं ऋक्सुखान्वेदान् पेठुर्भागवतं तथा ॥
पारायणं समाप्यैव प्रसाद्यैव महेश्वरम् ॥ १२२ ॥
धनुस्तीर्थमनुप्राप्तादर्शनादेव मुक्तिदम् ॥
तत्र तीर्थविधिं चक्रुर्महाम्भोधिं समर्च्य ते ॥ १२३ ॥
रामायणकथां चक्रुर्ददृशुः श्वेतकौतुकीम् ॥
यत्र लीलां प्रकुर्वाते रत्नोदधिमहोदधी ॥ १२४ ॥
पुनस्तेनैव मार्गेण कोटितीर्थं समागताः ॥
तत्र जातापराधानां मोचकं स्नानमात्रत ॥ १२५ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थे ॥
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे ॥
प्रस्थानेऽस्मिंस्तृतीयेसमजनि पटहो दिग्जयाख्ये चतुर्थ १२६

---

ओर श्रीगौरी तथा दूसरे देवनके दर्शन कर वहाँके तीर्थनमें तथा वह्नितीर्थमें स्नान कियो चारो वेद श्रीमद्भागवत इनकी पारायण समाप्त करके महेश्वरकों प्रसन्न करके ॥ १२१ ॥ १२२ ॥ दर्शनसोंही मुक्ति देवेवारे धनुषतीर्थमें गये वहाँ तीर्थविधि तथा महोदधिकी पूजा करके रामायणकी कथा करी ओर श्वेतकौतुकीकों देख्यो जहाँ रत्नाकर महोदधि दोनों लीला करें हैं ॥ १२३ ॥ १२४ ॥ फिर वाही मार्गसों कोटितीर्थ आये किये भये अपराध जहाँ स्नान मात्र सों छूट जाँय हैं ॥ १२५ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये भये श्रीमद्वेदव्यासविष्णुस्वामिसम्प्रदायके ग्रन्थनके अनुकूल हरिभक्तनके सुख देवेवारे या श्रीमदाचार्यचरित्रग्रन्थके तीसरे प्रस्थानमें चौथो पटह ये समाप्त भयो ॥ १२६ ॥

---

तप्तांकधारणं नेष्टं नेष्टस्त्यागः स्वकर्मणाम् ॥
भेदोपि ब्रह्मणो नेष्टो नेष्टो द्वेषः सुरेश्वरैः ॥ १४ ॥
अयं वर्णवतां धर्मो हरिणा रक्ष्यते सदा ॥
धर्मरक्षाकृते कृष्णो जायतेऽसौ युगे युगे ॥ १५ ॥
कथं त्यक्तो मूढजनैर्गच्छतेतो यथासुखम् ॥
एवं हि धिक्कृताः सर्वे केचिदुक्तमुपाददुः ॥ १६ ॥
केचिद्विनिन्द्य निर्याता दौर्भाग्यं तत्र कारणम् ॥
पारायणं समाप्यात्र ह्याचार्याश्चलितास्ततः ॥ १७ ॥
ताम्रपर्णीमुपायाताः करभाजनसंस्तुताम् ॥
स्नातस्तत्र विधानेन संतर्प्य पितृदेवताः ॥ १८ ॥
पारायणं समारब्धं श्रीमद्भागवतस्य च ॥
अनंतसेनं संपूज्य मुकुंदं भक्तवत्सलम् ॥ १९ ॥
सुमनोभिस्तुलसिकादलैरपि फलैरपि ॥
फलाहारं विधायैव चोपविष्टा यथासुखम् ॥ २० ॥

ाके ऊपर विष्णु प्रसन्न होंय हैं ॥ १३ ॥ तप्तमुद्राधारण अपने कर्मनको त्याग ब्रह्मसों भेद देवतानसों द्वेष ये ठीक नहीं हे ॥ १४ ॥ वर्णाश्रमधर्मकी हरि सदा रक्षा करें हैं ओर धर्मकी रक्षाहीके लियें युगयुगमें कृष्ण होंय हैं ॥ १५ ॥ ताकों मूढननें क्यों छोड्यो अस्तु अब यहाँसों सुखपूर्वक जावो या प्रकार सब धिक्कार किये गये सो उनमेंसों कोई २ नें कहे भयेको ग्रहण कियो ओर कोई अपने दौर्भाग्यवश निन्दा करकें चले गये श्रीमदाचार्यजी पारायण समाप्त करकें वहाँसों पधारे ॥ १६ ॥ १७ ॥ सो करभाजननामकेयोगीसों स्तुति करी गई ताम्रपर्णीकों पधारे वहाँ विधानसों स्नान तर्पण करकें श्रीमद्भागवतके पारायणको आरम्भ कियो ओर भक्तवत्सल अनन्तशयन भगवानूकी पुष्प तुलसीदल फल-नसों सेवा कर फलाहार करकें सुखपूर्वक विराजे ॥ १८ ॥ १९ ॥ २० ॥

तप्तचक्रांकितो भूत्वा जह्यादेव पराश्रय ॥
लोकवेदभयं त्यक्त्वा चरेदविधिगोचर ॥ ८ ॥
भुक्तिर्मुक्ति करे तस्य तस्य विष्णु प्रसीदति ॥
आचार्याश्च तदा प्रोचुर्भ्रष्टास्तिष्ठत दूरत ॥ ९ ॥
वर्णाश्रमविहीनानां कथ विष्णु प्रसीदति ॥
वर्णाश्रमाचारवता पुरुषेण पर पुमान् ॥ १० ॥
विष्णुराराध्यते यथा नान्यस्तत्तोषकारणम् ॥
इति विष्णुपुराणोक्त्या गीताद्युक्त्या प्रतीयते ॥ ११ ॥
वेदस्तु भगवानेव तस्याज्ञा वा नियामिका ॥
तां विहाय कथ मूढा भुक्तिमुक्तिमवाप्स्यथ ॥ १२ ॥
स्वधर्मं चाचरेच्छक्त्या भक्तिधर्मं यथोचितम् ॥
निवृत्तस्सर्वपापेभ्यस्तस्य विष्णु प्रसीदति ॥ १३ ॥

यणके प्रिय नहीं हें । न दूसरे देवताको नमस्कार करे न देखे ॥ ७ ॥ तप्त चक्रांकित होयकें पराश्रयकों छोड दे ओर लोकवेदको भय छोड स्वच्छन्दसे यकें जो रहे ॥ ८ ॥ वाके हाथमें भुक्ति मुक्ति हे विष्णु वाके ऊपर प्रसन्न होय हें तब श्रीमदाचार्य बोले जो दूर ठाडे रहो ॥ ९ ॥ वर्णाश्रमधर्मसों हीन मनुष्यनके ऊपर विष्णु केसें प्रसन्न होय हें वर्णाश्रमधर्ममें रहकें परपुरुष विष्णुकी आराधना करनी यासों दूसरो मार्ग उनके प्रसन्न करवेको नहीं हे ये विष्णुपुराणके ओर गीताकी उक्तिसों निश्चय हे ॥ १० ॥ ॥ ११ ॥ वेद सो भगवानहीं हें उनकीही आज्ञा प्रमाण हे उनकों छोड़कें केसें भुक्ति मुक्तिकों पावोगे ॥ १२ ॥ अपने धर्मकों अपनी शक्ति प्रमाण करे ओर यथोचित भक्ति करे सब पापनसों निवृत्त रहे

तेन दुःखेन संतप्ता राजपत्न्यास्तु धर्षणात् ॥
राज्ञश्चाभीलतः क्लिष्टाः कथं पात्रं लभामहे ॥ २८ ॥
श्रुत्वा दुःखमिदं तेषां गुरवोऽतिकृपालवः ॥
पात्रं निरूपयामासुर्ज्वलंतं ब्रह्मवर्चसा ॥ २९ ॥
इमं नयत ब्रह्मर्षिमयं वो दुःखनाशकः ॥
स प्रार्थितो द्विजैस्तत्र गुरूनाह करोमि किम् ॥ ३० ॥
गुरवस्तु तदा प्राहुर्गायत्रीसानलानना ॥
गृहाण दानं तां ध्यात्वा किं ते दानं करिष्यति ॥ ३१ ॥
जनकेन समुक्तस्तु बिंदलाख्यो महानृषिः ॥
हस्तिकायं जहौ सद्यस्तदज्ञाननिबंधनम् ॥ ३२ ॥
गायत्र्याः संमुखं ज्ञात्वा गुरुभ्योऽगात्तदाज्ञया ॥
जग्राह कालपुरुषं दर्शयँ श्चांगुलिद्वयम् ॥ ३३ ॥

राजपुरोहित हो तुमको लेनो पड़ेगो ॥ २७ ॥ सो या दुःखसों ओर रानीके क्रोधसों दुःखित हम हैं केसे पात्र पावें ॥ २८ ॥ ये दुःख उनको सुनकें बड़े दयालु श्रीमदाचार्यजी बडेब्रह्मतेजसों प्रकाशमान पात्रकों आज्ञा कियो॥ २९ ॥ जो या ब्रह्मर्षिकों ले जावो ये तुम्हारे दुःखको नाश करेववारे हैं तब उन ब्राह्मणनसों प्रार्थना किये गये वानें श्रीमदाचार्यजीसों प्रार्थना करी के कहा करूँ ॥ ३० ॥ तब आपनें आज्ञा करी जो गायत्री अग्निमुख हे वाको ध्यान करकें दान लेनो तुम्हारो दान कहा करेगो ॥ ३१ ॥ पहले राजा जनकसों कहे गये गायत्रीके स्वरूपकों जानकें बिन्दल महर्षिनें अपने अज्ञानसों बँधे हाथीके शरीरकों छोड दीनोहो ॥ ३२ ॥ तब वो गुरूनसों गायत्रीको संमुख जानकें आपकी आज्ञासों गयो ओर दो अंगुलीनकों दिखायकें कालपुरुषकों ले लियो

तत्र विप्रास्समायाता कृपणा धिक्कृता जनै ॥
विमनस्कान् समीक्ष्यैतान् पप्रच्छु शिष्यवक्रत ॥ २१ ॥
के यूयं केन दु खेन विच्छाया इव लक्षिता ॥
अनादरेण दु खेन निर्विण्णान् लक्षयामहे ॥ २२ ॥
सत्य सत्यगिरो यूयं नमस्कृत्याऽब्रुवन् कथाम् ॥
इतोऽविदूरे गव्यूत्या पालंकोटाभिध पुरम् ॥ २३ ॥
कालज्वरातंकक्लिष्टस्तत्र भूपालसत्तम ॥
तच्छांतयेऽस्य गुरुभि कारितं शास्त्रवर्त्मना ॥ २४ ॥
कुडमंडपमापाद्य ते कालपुरुषो महान् ॥
मंत्रै प्रतिष्ठापितोऽसौ कृत प्राणप्रतिष्ठया ॥ २५ ॥
सप्राण इव संव्यक्तो गृहीतॄन् भीपयत्ययम् ॥
एकांगुलिं समुत्थाप्य पात्रं पश्यति हुङ्कृते ॥ २६ ॥
सर्वेंपि वेदविद्वांसो विदेशीया पलायिता ॥
अस्मान् क्षिपंति सर्वेपि यूय राजपुरोहिता ॥ २७ ॥

यहाँ जननसों धिक्कार किये गये दीन ब्राह्मण आये उनको विमन देखके शिष्यनके द्वारा पूछ्यो ॥ २१ ॥ जो तुम कोन हो कोनसे दुःखसों सूखेसे दीख पड़ो हो अनादरके दु खसों निकसे जेसे लगो हो ॥ २२ ॥ मे सुन नमस्कार करके वे सब बोले भोसत्य हे सत्यवक्ता आप हें यहाँसों दो कोशपे (पालयकोट्ट ) पुर हे वहाँको राजा कालज्वरसों दुःखित हे सो ताकी शान्तिके लिये राजाके गुरुनें शास्त्रके मार्गसों कुड मडप बनायके बडो कालपुरुष मन्त्रनसों प्राणप्रतिष्ठा करके स्थापित कियो हे ॥ २३ ॥ २४ ॥ २५ ॥ सो वो कालपुरुष जीवतो असो लेवेवारे पुरुषनकों डरावे हे ओर एक अगुली उठायके लेवेवारे पात्रकों हुंकार करके देखे हे ॥ २६ ॥ सब विदेशी विद्वान् भग गये हमकों सब आक्षेप करे हें के तुम

तेन दुःखेन संतप्ता राजपत्न्यास्तु धर्षणात् ॥
राज्ञश्चाभीलतः क्लिष्टाः कथं पात्रं लभामहे ॥ २८ ॥
श्रुत्वा दुःखमिदं तेषां गुरवोऽतिकृपालवः ॥
पात्रं निरूपयामासुर्ज्वलंतं ब्रह्मवर्चसा ॥ २९ ॥
इमं नयत ब्रह्मर्षिमयं वो दुःखनाशकः ॥
स प्रार्थितो द्विजैस्तत्र गुरूनाह करोमि किम् ॥ ३० ॥
गुरवस्तु तदा प्राहुर्गायत्रीसानलानना ॥
गृहाण दानं तां ध्यात्वा किं ते दानं करिष्यति ॥ ३१ ॥
जनकेन समुक्तस्तु विंदलाख्यो महानृषिः ॥
हस्तिकायं जहौ सद्यस्तदज्ञाननिबंधनम् ॥ ३२ ॥
गायत्र्याः संमुखं ज्ञात्वा गुरुभ्योऽगात्तदाज्ञया ॥
जग्राह कालपुरुषं दर्शयँश्चांगुलिद्वयम् ॥ ३३ ॥

राजपुरोहित हो तुमको लेनो पड़ेगो ॥ २७ ॥ सो या दुःखसों ओर रानीके क्रोधसों दुःखित हम हैं केसे पात्र पावें ॥ २८ ॥ ये दुःख उनको सुनकें बड़े दयालु श्रीमदाचार्यजी बडेब्रह्मतेजसों प्रकाशमान पात्रकों आज्ञा कियो॥ २९ ॥ जो या ब्रह्मर्षिकों ले जावो ये तुम्हारे दुःखको नाश करेववारे हें तब उन ब्राह्मणनसों प्रार्थना किये गये वानें श्रीमदाचार्यजीसों प्रार्थना करी के कहा करूँ ॥ ३० ॥ तब आपनें आज्ञा करी जो गायत्री अग्निमुख हे वाको ध्यान करकें दान लेनो तुम्हारो दान कहा करेगो ॥ ३१ ॥ पहले राजा जनकसों कहे गये गायत्रीके स्वरूपकों जानकें बिन्दल महर्षिनें अपने अज्ञानसों बँधे हाथीके शरीरकों छोड दीनोहो ॥ ३२ ॥ तब वो गुरूनसों गायत्रीको संमुख जानकें आपकी आज्ञासों गयो ओर दो अंगुलीनकों दिखायकें कालपुरुषकों ले लियो

गृहीते कालपुरुषे निरातंके जनाधिपे ॥
जाते जातो महान् घोष कोऽयं कस्मादितो द्विज ॥ ३४ ॥
पुरोधसा तत प्रोक्तं वृत्तं यद्राजससदि ॥
श्रुत्वैतद्राजपत्नी सा राजा तन्मंत्रिणो जना ॥ ३५ ॥
पुरोधस पुरस्कृत्य ताम्रपर्णीमुपागता ॥
प्रणेमु श्रीमदाचार्यान् शिष्यवृंदैरुपासितान् ॥ ३६ ॥
विष्णुस्वामिजनैर्गुप्तान् विरक्तैः शस्त्रपाणिभिः ॥
राज्ञी तत्रावदद्वाक्यं शारदेन्दुसमानना ॥ ३७ ॥
व्यालं विव्यालयम्मिल्लामृगाक्षीप्रोज्ज्वलांबरा ॥
पतिव्रता हरेर्भक्ता कृतोपायनसत्क्रिया ॥ ३८ ॥
सौभाग्यं गुरुभिर्दत्तं जीवितेशश्च जीवित ॥
इतो महान्नोपकार स्त्रीणामन्योऽत्र दृश्यते ॥ ३९ ॥

॥ ३३ ॥ कालपुरुषके लेवपे राजा अच्छो होय गयो तब बडो उद्योत भयो जो ये कौन ब्राह्मण हे कहाँसों आयो हे ॥ ३४ ॥ तब पुरोहितनें राजाकी सभामें सब वृत्तान्त बतायो सो सुनके रानी राजा मन्त्रीजन ॥ ३५ ॥ पुरोहितकों आगें करकें ताम्रपर्णीनदीके तटपे गये वहाँ शिष्य नसों सेवित ॥ ३६ ॥ विरक्त हथियार लिये भये विष्णुस्वामीनसों रक्षा किये श्रीमदाचार्यकों प्रणाम कियो ओर शरत्कालके पूर्णचन्द्रके समान मुखवारी लम्बी कारी सर्पिणीनके समान केशनके उच्छेवारी स्वच्छ वस्त्र धारण किये मृगाक्षी पतिव्रता हरिकी भक्तिवारी रानी भेट सत्कार करकें बोली ॥ ३७ ॥ जो आपनें सौभाग्य दीनो हमारे प्राण नाथको जिवायो यातें बडो उपकार दूसरो स्त्रीनको नहीं हे ॥ ३८ ॥ ये हमारे पति रोगसों दुर्बल हें सो आपकी अमृतदृष्टिसों शीघ्र प्रबल

कांतो रुजा दुर्बलोयं श्रीमताममृतेक्षणात् ॥
प्रबलो भविता सद्यो नीतो वश्चरणाब्जयोः ॥ ४० ॥
इह लोके यथा त्रातस्त्राह्येवं परलोकतः ॥
पवित्रय पुरं गोत्रं भवच्चरणपांसुभिः ॥ ४१ ॥
उपधार्य पुरेऽस्माकं किंचित्कालं कृतार्थय ॥
इत्येवं महिला राज्ञी राजाऽमात्यपुरोधसः ॥ ४२ ॥
सर्वे विज्ञापयांचक्रुः शिबिकादीनुपानयन् ॥
दामोदरस्तदा प्राह ह्याचार्योः पादचारिणः ॥ ४३ ॥
वाहनं न स्पृशंत्येते तीर्थयात्राव्रते स्थिताः ॥
पारायणं समाप्यैव पूज्यार्योश्चलितास्ततः ॥ ४४ ॥
सर्वे पादचरा भूत्वैवासँस्तदनुचारिणः ॥
पुष्पाणां वृष्टिभिर्वाद्यगीतनृत्यपुरःसरैः ॥ ४५ ॥
नीता निजपुरे राज्ञा तत्र जातो महोत्सवः ॥
अध्यासितानूत्नसिंहासने राजविभूतिभिः ॥ ४६ ॥

होय जाँय ताकें लियें आपके चरणकमलनमें लाई हूँ ॥ ३९ ॥ ॥ ४० ॥ सो या लोकमें जेसे रक्षा करी हे तेसेंहीं परलोकसोंबी रक्षा करो ओर हमारे कुटुम्बकों पुरकों अपनी चरणधूलिसों पवित्र करो ॥ ४१ ॥ थोरे दिन हमारे नगरमें पधारकें कृतार्थ करो या प्रकार रानी राजा मन्त्री पुरोहित सब प्रार्थना करकें पालकीआदि लाये तब दामोदरनें कही के श्रीमदाचार्यजी चरणहीसों चलें हें ॥ ४२ ॥ ४३ ॥ तीर्थयात्रा व्रतमें हें तासों सवारीको नहीं स्पर्श करें हें पीछें पारायणकों समाप्त करकें वहाँसों पधारे ॥ ४४ ॥ ओर वे सबबी पादचारी होयकें पीछें २ चले ओर गाजे बाजेसों पुष्पनकी वर्षा करते राजानें अपने पुरमें पधराये वहाँ बडो उत्सव भयो राज विभूतीनसों नवीन सिंहासनपें विराजमान किये बहोत द्रव्य भेट कियो राजा रानी परिकरसमेत शिष्य भये वहाँ दो दिन विराजे

द्रव्य समर्पित भूरि प्रपत्तिर्विहिता स्वयम् ॥
राज्ञा जनैश्च तद्दारैरूषुस्तत्र दिनद्वयम् ॥ ४७ ॥
पप्रच्छुस्ते गुरून् किंतदंगुल्योत्थानकारणम् ॥
गृहीत्वा स कुत कृत्स्नं भक्त्या कृष्णाजलि कृत ॥ ४८ ॥
एकां सन्ध्यां य करोति स मां गृह्णातु नित्यशः ॥
अन्यथा भस्मतां गच्छेदित्यगुलिनिदर्शनम् ॥ ४९ ॥
समयद्वितये सन्ध्याकर्ता पात्रतमोस्म्यहम् ॥
इत्यगुलिद्वयोत्थाने कारण यो निरूपितम् ॥ ५० ॥
ज्ञात्वा य कुरुते पाप निर्निमित्तं कुदानभृत् ॥
तेन सा कृष्णता जाता निवृत्ता तद्विभागतः ॥ ५१ ॥
विभज्य ब्राह्मणेभ्योऽप्यनग्निस्तीर्थप्रतिग्रहात् ॥
कृष्णपाणिस्ततो जातस्तद्विस्मृतिकृतागस ॥ ५२ ॥
प्रायश्चित्तैरपैत्येनो यदज्ञानकृत भवेत् ॥
कामतो व्यवहार्यस्तु वचनादिह जायते ॥ ५३ ॥

तब सबननें अंगुलीनके उठायवेको कारण पूँछ्यो और दान लेंके कारो हाथ क्यों होयगयो और सब क्यों बाँट दीनो ॥ ४५ ॥ ४६ ॥ ४७ ॥ ॥ ४८ ॥ तब आपनें आज्ञा करी जो एक सन्ध्या नित्य करतो होय वो मोकों ग्रहण करे नहीं तो भस्म होयजायगो याके लियें अंगुली एक दिखावतो हो ॥ ४९ ॥ दोनों समयमें सन्ध्या करूं हूं में पात्र हूं ये दो अगुलीनके उठायवेको कारण तुमसों कह्यो ॥ ५० ॥ विना कारण जानके जो कुदान लीनों तासों कारो हाथ होय गयो और बाँटवेसों मिटगयो॥ ५१ ॥ ब्राह्मणनकों बाँटवेसोंभी अग्निहोत्री न होयवेसों जानके तीर्थके प्रतिग्रहसों कारो हाथ होयगयो ॥ ५२ ॥ अज्ञानसों कियो भयो पाप प्रायश्चित्तनसों

वृद्धौ च मातापितरौ साध्वी भार्या सुतः शिशुः ॥
अप्यन्यायशतं कृत्वा भर्तव्या मनुरब्रवीत् ॥ ५४ ॥
प्रतिग्रहः प्रकर्तव्य आपन्नेन द्विजन्मना ॥
पौराणिकी तथा वृत्तिरित्येवं न्यायलक्षणम् ॥ ५५ ॥
याजनाध्यापनं दानं वृत्तयोऽमी द्विजन्मनाम् ॥
संपन्नैस्ता न संसेव्या नाभिर्दुष्यंति दुर्बलाः ॥ ५६ ॥
वैश्वानरमुखां वेत्ति यः सावित्रीं द्विजर्षभः ॥
वैश्वानरेण तीर्थेन स दानाद्यैर्न लिप्यते ॥ ५७ ॥
यज्ञवाटस्य या हिंसा सापि दुःखस्य कारणम् ॥
स्वर्गिणां श्रयूते दुःखं दुर्दानमपि तादृशम् ॥ ५८ ॥
कैंकर्यजार्यचौर्येण कुसीदाद्यैः कुवृत्तिभिः ॥
जीवंति ब्राह्मणास्तेभ्यः श्रेष्ठाः किं नात्मवृत्तयः ॥ ५९ ॥
विदा दयालुना दात्रा पात्रमुद्दिश्य वैष्णवम् ॥
जले जलं प्रदातव्यं श्रीकृष्णः प्रीयतामिति ॥ ६० ॥

दूर होयजाय हे ओर वचननसों व्यवहारके योग्य होय हे ॥ ५३ ॥ वृद्ध माता पिता सती स्त्री बालक पुत्र इनकों सौ अन्याय करकेंबी पालन करनों एसो मनुनें कह्यो हे ॥ ५४ ॥ ओर विपत्तिमें ब्राह्मण प्रतिग्रह करे तथा पौराणिक वृत्ति करे ॥ ५५ ॥ यज्ञ करावनों पढावनों दान ये वृत्ति ब्राह्मण की हें सम्पन्न ब्राह्मण ये इनकूं करें ओर इनके करवेसों दुर्बल दूषितबी नहीं होते ॥ ५६ ॥ जो ब्राह्मण अग्निमुखगायत्रीकों जानें हें वो वैश्वानरतीर्थ करकें दानादिकनसों लिप्त नहीं होय हे ॥ ५७ ॥ यज्ञमार्गको जो हिंसा हे वोबी दुःखको कारण हे स्वर्गमेंबी रहवेवारेनकों दुःख होय हे एसें दुष्टदानबी हें ॥ ५८ ॥ दासपनो जारपनो चोरी व्याजवट्टो आदि कुवृत्तीनसों जो ब्राह्मण जीवें हें उनसों कहा आत्मवृत्ति श्रेष्ठ नहीं हे ॥ ५९ ॥ विद्वान् दयालु दाता वैष्णव पात्र देखकें श्रीकृष्ण प्रसन्न होंय

यत्र विष्णु प्रतिग्राही दाता द्रव्यं च तन्मयम् ॥
श्रद्धा विधिरशाठ्यं च तावुभौ स्वर्गगामिनौ ॥ ६१ ॥
राजा प्राह पुनर्दीनबन्धवो तदज्ञुमंतु न ॥
वैष्णवेन कथ आर्ह्य विधेय जनरक्षणम्॥ ६२ ॥
गुरुवस्तु तदा प्राहुर्वैष्णवो नाधिकारभाक् ॥
दंडाधीन भवेद्राज्य दयालुर्दंडद कथम् ॥ ६३ ॥
प्रल्हादश्चेंद्रसेनश्च जनक शिबिरेव च ॥
निर्ममानिरहंकारा समा ये हानिलाभयो ॥ ६४ ॥
तेषा राज्य न पापाय नियुक्तानां हरीच्छया ॥
अंबरीषादिवद्राजा वैष्णव पालयन्प्रजाम् ॥ ६५ ॥
प्रजानां किंकरतया सर्वेषां संछसन्सुखम् ॥
विप्रान् धर्मविदो युक्तानष्टौ वा चतुरोपि वा ॥ ६६ ॥

ये कहकें जलमें जल छोड दे ॥ ६० ॥ जहाँ विष्णु प्रतिग्रह लेवेवारे हैं ओर देवेवारो द्रव्य विष्णुमय हे श्रद्धापूर्वक विधानें हे शठता नहीं हे वे दोनों स्वर्गगामी होंयहें ॥ ६१ ॥ राजा फिर बोल्यो जो हे दीनबन्धो ! हमारे धर्मकी आज्ञा करो वैष्णव केसें ग्रहण करे ओर प्रजाकी रक्षा केसें करे ॥ ६२ ॥ तब श्रीमदाचार्यजीनें आज्ञा करी जो वैष्णव अधिकारी नहीं हे दंडाधीन राज्य होय हे दयालु दंडदाता केसें ॥ ६३ ॥ प्रल्हाद इन्द्रसेन जनक शिबि ये राजा ममता अहंकारहीन हे हानि लाभमें समान हे ॥ ६४ ॥ ओर हरिकी इच्छासों नियुक्त हे उनको राज्य पापके लिये नहीं हो ओर अम्बरीषके जेसें प्रजा पालन करतो भयो वैष्णव राजा ॥ ६५ ॥ प्रजाको किंकर होयकें सबकों सुख देतो न्यायाधीशके सहित धर्मके जानवेवारे सब दोषनसों रहित विद्वान् ब्राह्मण आठ

सम्प्राड्विवाकान् युञ्जीत सर्वदोषसमुज्झितान् ॥
धर्मशास्त्रानुसारेण देशकालानुसारतः ॥ ६७ ॥
साध्वसाधुविवेकेन न्यायः कार्यः सुखेन तैः ॥
निग्रहेऽनुग्रहे तेषां शास्त्राज्ञैव प्रमा भवेत् ॥ ६८ ॥
राजा प्रजोपकाराय नानारंभान्प्रवर्त्तयेत् ॥
येन स्युः सुखिनो लोकाः कृतोद्योगा हितेप्सवः ॥ ६९ ॥
गवां च ब्राह्मणानां च दीनानां रोगिणामपि ॥
स्त्रीणां शिशूनां जंतूनां गुरूणामच्युतात्मनाम् ॥ ७० ॥
उपकारः सदा कार्यो भक्तिः कार्या हरौ सदा ॥
सर्वेऽपि समयाः पाल्याः स्वस्वमर्यादया सह ॥ ७१ ॥
निरुंध्यान्नूतनपाषंडान्धूर्त्तान्कपटकारिणः ॥
चाटतस्करदुर्वृत्तचोरजारखलान्नरान् ॥ ७२ ॥
दुष्टाधिकारिणो दुष्टाचारान्रुंध्यान्नृपद्विषः ॥
यस्य राष्ट्रे पुरे स्तेना जारा दुर्दंडवाक्क्रमाः ॥ ७३ ॥

वा चार नियुक्त करे ॥ ६६ ॥ ओर धर्मशास्त्रके अनुसार देशकालके अनुसार सत्य झूँठको न्याय विवेकसों उनसों सुखसों करावे उनके छोडवे पकडवेमें शास्त्रकी आज्ञाही प्रमाण हे ॥ ६७ ॥ ॥ ६८ ॥ ओर राजा प्रजाके लाभके लिये अनेक चालके व्यवहार चलावें जाकरकें हितकी इच्छासों उद्योग करवेवारी प्रजा सुखी होय ॥ ६९ ॥ गो ब्राह्मण दीन रोगी स्त्री बालक गुरु ओर जीवमात्रको सदा उपकार करे भगवान्में भक्ति करे सब समय अपनी २ मर्यादासों पालन करे ॥ ७० ॥ ॥ ७१ ॥ नवीन पाषंड करवेवारे कपटी चोर खराब आचरणवारे जार दुष्ट एसें मनुष्यनकों रोके ॥ ७२ ॥ दुष्ट अधिकारी दुष्ट काम-करवेवारे राजद्वेषी इनकों रोके जाके राज्यमें पुरमें चोर जार उद्दंड

न वसति न दीनानां पतत्त्यश्रूण्यसौ नृप ॥
राजा भूपो नृप स्वामी कार्याध्यक्षश्च पञ्चधा ॥ ७४ ॥
शास्तार पापपुण्यानां भोक्तारोमीऽयथाक्रियम् ॥
धर्मशास्त्रानुसारेण प्राड्विवाकमतेन च ॥ ७५ ॥
सदस्य सञ्चरेद्राज्य स्वय चातिथिवद्भवेत् ॥
धर्मयुद्धेन यल्लब्ध धर्म्मायिर्यदुपस्थितम् ॥ ७६ ॥
तद्विष्णवे वैष्णवेभ्यो ब्राह्मणेभ्य समर्पयेत् ॥
इष्टापूर्त्तेन युजीत पर्वयात्रामहोत्सवे ॥ ७७ ॥
ब्रह्मण्यश्च शरण्यश्च सत्यसन्धो भवेत्सदा ॥
श्रवण कीर्त्तन विष्णो स्मरण पादसेवन ॥ ७८ ॥
अर्चन वदन दास्य चरेदात्मसमर्पणम् ॥
यामद्वय हरेः काय राज्यकार्य द्वियामत ॥ ७९ ॥

दुष्टशक्तिवारे नहीं वसते वहाँ दीननके आँसू नहीं गिरते वहाँ राजाहे ॥ ७३ ॥ सम्राट् मांडलिक नरेश स्वामी कार्याध्यक्ष ये पाँच प्रकारके शासन करयेवारे पुण्यपापके भागी होंय हैं ॥ ७४ ॥ धर्मशास्त्रके अनुसारसों न्यायाधिकारीनके मतसों सभ्यनके मतसों राज्य चलावे आप अतिथीके जेसो रहे ॥ ७५ ॥ धर्मयुद्धसों जो मिले धर्मके लियें जो आवे ताकों विष्णुके लिये वैष्णवब्राह्मणनके लियें अर्पण करे ॥ ७६ ॥ कूप तडाग मंदिर आदि धर्मकार्यमें लगावे पर्वयात्रा महोत्सव करे ब्राह्मण तथा शरणागतनकी रक्षा करे सत्य बोले ॥ ७७ ॥ श्रवण कीर्तन स्मरण पादसेवन अर्चन वंदन दास्य सख्य आत्मसमर्पण ये भगवान्‌की भक्ति करे दो प्रहर भगवत्सेवा करे दो प्रहर राज्यकार्य करे एक प्रहर भोग एक प्रहर बल सेना देखे दो प्रहर निद्रा कर दुःखितनकी रक्षा करा

भोगकार्यं चैकयामं यामैकं बलसाधनम् ॥
निद्रा यामद्वयं चैवमार्तरक्षा च सर्वदा ॥ ८० ॥
परद्रव्यपरस्त्रीषु परद्रोहे पराङ्मुखः ॥
प्रजैकपालनपरो वैष्णवो राज्यकृद्भवेत् ॥ ८१ ॥
इत्येवं धर्मशास्त्रेषु भक्तिशास्त्रेषु यद्दुतम् ॥
तत्कर्त्तव्यं नृपेणेत्थं वैष्णवोपि भवेन्नृपः ॥ ८२ ॥
इत्येवं राज्यधर्मान् स्वान् भक्तिधर्माननेकधा ॥
उपदिश्य पुरात्तस्मादाचार्याः प्रस्थिताः स्वकैः ॥ ८३ ॥
श्रीवैकुंठं ततः प्राप्ताः क्षेत्रं श्रीसंप्रदायिनाम् ॥
यत्र रामानुजमुनेः स्थानमाम्नायवृद्धये ॥ ८४ ॥
दर्शनं तत्र देवस्य कृतं नारायणप्रभोः ॥
तत्रत्याचार्यवर्येण संलापः सुमहानभूत् ॥ ८५ ॥
शेषाचार्योवभाषेऽत्र का वोभक्तिरनुत्तमा ॥
कः संप्रदायः किं मानं सदाचारस्तु कीदृशः ॥ ८६ ॥

करे ॥७८॥७९॥८०॥ परायो द्रव्य परस्त्री परद्रोह सें विमुख रहे प्रजाके एक पालनहींमें तत्पर रहे एसो वैष्णवराजा राज्य करवेवारो होय ॥ ८१ ॥ या प्रकार धर्मशास्त्र ओर भक्तिशास्त्रमें जो कह्यो हे वो राजा करे तो वैष्णव राजा होय ॥ ८२ ॥ या प्रकार राज्यधर्म्म ओर अनेक भक्तिधर्मनको उपदेश करकें वा पुरसों शिष्यनके सहित श्रीमदाचार्य पधारे ॥ ८३ ॥ सो रामानुजसम्प्रदायीनके श्रीवैकुंठक्षेत्रमें आये जहाँ रामानुजमुनिको स्थान हे सम्प्रदायके वृद्धिके लिये वहाँ नारायणप्रभुको दर्शन कियो ओर वहाँके आचार्यनसों बडो वार्तालाप भयो॥८४॥८५॥शेषाचार्य बोले जो आपकी कोन भक्ति हे कोन सम्प्रदाय हे कहा मान हे सदाचार केसो हे ॥८६॥

अस्माकं निर्गुणा भक्तिः श्रीमद्भागवतोदिता ॥
स्वयं भगवता प्रोक्तं मन्निष्ठ निर्गुणं हि तत् ॥ ८७ ॥

कपिल उवाच ।

देवानां गुणलिंगानामानुश्रविककर्मणाम् ॥
सत्वएवैकमनसोवृत्तिः स्वाभाविकी तु या ॥ ८८ ॥
अनिमित्ता भागवती भक्तिः सिद्धेर्गरीयसी ॥
जरयत्याशु या कोशं निगीर्णमनलो यथा ॥ ८९ ॥
भक्तियोगो बहुविधो मार्गैर्भामिनि भाव्यते ॥
अभिसंधाय यद्धिंसां दंभं मात्सर्यमेव च ॥ ९० ॥
संरभी भिन्नदृग्भावं मयि कुर्यात् स तामसः ॥
विषयानभिसंधाय यश ऐश्वर्य्यमेव च ॥ ९१ ॥

तब श्रीमदाचार्यजीनें कह्यो जो हमारी श्रीमद्भागवतमें कही निर्गुणभक्ति है और स्वयं भगवान्नें कह्यो है जो निर्गुण मेरेमें है ॥ ८७ ॥ कपिलजीने भी कह्यो है जो त्रिगुणलिङ्गवारे देवतानके बीचमें स्वाभाविकी मनकी जो एक वृत्ति ॥ ८८ ॥ बिनाकारणके भगवत्संबंधी सत्त्वमें जो भक्ति है सो सिद्धिसोंभी अधिक है शीघ्र सबपापनकों भस्म करदेय है जैसें आगिकों अग्नि ॥ ८९ ॥ बहुतमार्गनके लियें भक्तिमार्ग अनेक प्रकारको कह्यो है ताही प्रकार स्वभाव रूप सत्त्व रज तम इनकी भिन्न भिन्न वृत्तिनसों पुरुषनके अभिप्रायमेंभी भेद है अर्थात् पुरुषनको संकल्प गुण प्रमाण भिन्न २ होंय हैं ॥ ९० जैसें कोईके पीडा करवेके विचारसों कपट करवेके विचारसों अथवा परोत्कर्ष न सहकें क्रोध करकें तथा भेददृष्टि करकें हमारी प्रतिमादिकनमें पूजा करें हैं ये तीन जातके तामस भक्त हैं और जो विषयनकी इच्छासों यश अथवा ऐश्वर्यकी इच्छासों भेद करकें प्रतिमादिकनमें हमारो पूजन करें हैं ये तीन प्रकारके राजस भक्त हैं जो पापनके

अर्चादावर्चयेद्यो मां पृथग्भावः स राजसः ॥
कर्मनिर्हारमुद्दिश्य परस्मिन्वा तदर्पणम् ॥ ९२ ॥
यजेद्यष्टव्यमिति वा पृथग्भावः स सात्त्विकः ॥
मद्गुणश्रुतिमात्रेण मयि सर्वगुहाशये ॥ ९३ ॥
मनोगतिरविच्छिन्ना यथा गंगांभसोऽम्बुधौ ॥
लक्षणं भक्तियोगस्य निर्गुणं समुदाहृतम् ॥ ९४ ॥
अहैतुक्यव्यवहिता या भक्तिः पुरुषोत्तमे ॥
सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत ॥ ९५ ॥
दीयमानं न गृह्णंति विना मत्सेवनं जनाः ॥
स एव भक्तियोगाख्य आत्यंतिक उदाहृतः ॥ ९६ ॥
येनातिव्रज्य त्रिगुणं मद्भावायोपपद्यते ॥
ब्रह्मवादेत्वियं भक्तिः शुद्धाद्वैतसमाश्रयात् ॥ ९७ ॥

नाश करवेकों वा परमात्मामें कर्मनकों अर्पण करें हें वा पूजन करनोही चहिये ये विचारके मूर्ति आदिमें वूजन करें वे तीन प्रकारके सात्त्विक भक्त कहावें हें ओर हमारे गुणनके सुनतेही जेसें गंगाजलकी समुद्रके आडी अविच्छिन्न गति होय हे ताहीप्रकार सबके अन्तर्यामी रूप जो पुरुषोत्तम में हूं तामें निरंतर मनोगति होय ये निर्गुण भक्तियोगको लक्षण हे ॥ ९१ ॥ ९२ ॥ ९३ ॥ ९४ ॥ हमारी निर्गुण भक्ति करवेवारे मनुष्यनकों सालोक्य ( संगही एक लोकमें वास ) सार्ष्टि ( हमारो जेसो ऐश्वर्य ) सामीप्य ( हमारे पास रहनो ) सारूप्य ( हमारे जेसो रूप ) एकत्व ( हमारे रूपमें मिल जानों ) ये सब हम देंय हें तोभी वे भक्त विना हमारी सेवाके कछू नहीं ग्रहण करें हें याहीको नाम निर्गुण भक्ति हे ॥ ९५ ॥ ॥ ९६ ॥ जासों त्रिगुणकों छोडकें मनुष्य परब्रह्मकों पावें हें शुद्धा

आत्मन्येवात्मनां प्रेम नान्यत्र निरुपाधिकं ॥
इत्युक्ते श्रीमदाचार्यैः प्राहासो प्रहसन्निव ॥ ९८ ॥
किमिदं प्रोच्यते स्वामिन् प्रतिवादिसमं वचः ॥
अभेदे तु कथं भक्तिर्भक्तिर्भेदावलंबिनी ॥ ९९ ॥
पुनः प्राहुर्निजाचार्यो उक्तवाक्यानुरोधतः ॥
तत्वमस्यादितः सा तु शुद्धाद्वैतावलंबिनी ॥ १०० ॥
आत्मावारे इति श्रुत्या दर्शनैकफलो विधिः ॥
श्रवणाद्यैः प्रतिज्ञात आत्मोपास्तिविधेरपि ॥ १०१ ॥
आत्मनोऽन्यत्र यो देवं पश्यत्यस्य विनिंदनात् ॥
श्रुतौ स्मृतौ ततस्त्वात्मभेदोपासनमर्थवत् ॥ १०२ ॥
आरब्धभक्तिरन्यमस्तत्त्वदृष्टिर्जनस्तु यः ॥
भेदोपासनमेवास्य स भक्तः प्राकृतः स्मृतः ॥ १०३ ॥

द्वैतके आश्रयसों ब्रह्मवादमें येही भक्ति हे ॥ ९७ ॥ आत्माहीमें आत्माको निरुपाधिक प्रेम रहे हे ओर ठिकानें नहीं होय हे एसें श्रीमदाचार्यजीके कहवेपे हँसके वादी बोल्यो ॥ ९८ ॥ जो हे स्वामिन्! ये प्रतिवादीके से वचन कहा कहो हो भेदके अवलम्ब करवेवारी भक्ति अभेदमें कैसें होयसके हे ॥ ९९ ॥ तब श्रीमदाचार्यजी बोले जो कहे भये वाक्यनके अनुरोधसों 'तत्त्वमसि'आदिवाक्यनसों वो शुद्धाद्वैतकी अवलम्बिनी हे "आत्मावारे" या श्रुतिसों विधिको दर्शन एक फल हे श्रवणादिकनसों आत्माकी उपासना करवेकी विधि हे ॥ १०० ॥ १०१ ॥ आत्मासों ओर जगह जो कोई देवताकों देखे हे वाकी श्रुतिस्मृतिमें निन्दा सुनें हें सों आत्माकी अभेद उपासना सार्थक हे ॥ १०२ ॥ ओर जो पदार्थदृष्टिजन सावधानतासों भक्तिको आरम्भ करे हे ओर भेदहीकी

सच्चिदात्मस्वरूपौ यौ जडजीवौ जगद्गतौ ॥
आनंदस्फूर्तये भक्तिरनुरक्तिस्तदात्मनि ॥ १०४ ॥
पुत्रादिषु यथा स्नेह आत्मार्थे श्रुतिसंमतः ॥
आत्मनो भगवानात्मा तज्ज्ञाने भक्तिरुत्तमा ॥ १०५ ॥
देहात्मवादिभिः पुंभिर्देहोदेहेन सेव्यते ॥
आत्मनां भगवानात्मा सेव्यते चात्मवादिभिः ॥ १०६ ॥
इत्येवं बहुधा भक्तिः श्रुतिस्मृतिपुराणतः ॥
साधिता ब्रह्मवादेऽथ यथा लीला निवासिनाम् ॥ १०७ ॥
क्व चायं कितवः पापः क्वचायं श्रीनिकेतनः ॥
जीवेश्वरभिदावादो भक्तिपक्षस्य संमतः ॥ १०८ ॥
भौमत्वेनाप्यभेदेहि भेदोऽत्र मणिकाचवत् ॥
वेदांततो वास्तवस्त्वभेद आत्मकृतेरणात् ॥
यावल्लीलं भवेद्भेदो लीलाऽनित्या तथा च तत् ॥ १०९ ॥

उपासना करे हे वो प्राकृत भक्त हे ॥ १०३ ॥ ओर जगतमें रहवेवारे जड जीवनकों सच्चिदानन्दस्वरूप समझकें आनन्दस्फूर्तिके लियें आत्मामें अनुराग ही भक्ति हे ॥ १०४ ॥ पुत्रादिकनमें जेसो स्नेह हे आत्मा-मेंवी वेसोही करनो ये श्रुतिसंमत हे आत्माकेवी आत्मा भगवान् हे एसो ज्ञान होय तव उत्तम भक्ति होय ॥ १०५ ॥ देहकों आत्मा मानवेवारे पुरुष देहकी देहसों सेवा करें हें वेसेही आत्मवादी आत्माकों भगवान् समझकें आत्माहीकी सेवा करें हें ॥ १०६ ॥ या प्रकार श्रुति स्मृति पुरा-णनसों वहोत प्रकारकी भक्ति लीलानिवासीनकी ब्रह्मवादमें सिद्ध हे ॥ १०७ ॥ कहाँ ये कपटी जीव कहाँ श्रीनिकेतन भगवान् एसो जीव ईश्वरको भेदवाद भक्ति पक्षको सम्मत हे ॥ १०८ ॥ भौमत्वसों अभेद रहतेवी भेद मणि काँचके जेसो हे वेदान्तसों वास्तविक अभेद हे "आत्मकृतेः" या सूत्रसों यावत् लीला भेद हे लीला अनित्य हे तो पीछें

इत्युक्त्वा पुनराहुस्ते संप्रदाय सनातन ॥
संकर्षणाय गदितो लीलास्थेन मुरारिणा॥ ११० ॥
पुरारिणा तत प्रोक्तो नारदाय सुरर्षये ॥
कृष्णद्वैपायनेनोक्तोविष्णुस्वामिमहर्षये ॥ १११ ॥
देवदर्शनत प्राप्त संप्रदायो ह्यनुत्तम ॥
श्रुतिसूत्रेषु भगवद्वचन च समाधिगी ॥ ११२ ॥
प्रमाणमेतन्मान नस्सर्वं तदनुसारि यत् ॥
आचारोभगवत्प्रोकस्तथा भक्तवरोदित ॥ ११३ ॥
अनुलाप विधायेव प्रशसन्त परस्परम् ॥
तेषां सपर्यांमुररीकृत्य याताम्तत परम् ॥ ११४ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थे
श्रीगोविन्दाभिधानांसमयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिँस्तृतीये समजनिपटह पञ्चमोदिग्जयाख्ये ११५

वोही है ॥ १०९ ॥ ये कहकें कह्यो जो सम्प्रदाय सनातन है लीला करते भगवान्नें शिवसों कह्यो ॥ ११० ॥ उननें देवर्षि नारदसों कह्यो उननें व्याससों व्यासजीनें विष्णुस्वामीसों ॥ १११ ॥ उननें देवदर्शनसों एसें ये सम्प्रदाय सबसों उत्तम परम्परा प्राप्त हे वेद सूत्र गीता श्रीमद्भागवतकी समाधिभाषा ये प्रमाण हें ॥ ११२ ॥ याके अनुकूल सब प्रमाण हे भगवान्को कह्यो तथा शांडिल्यऋषिको कह्यो आचार प्रमाण है ॥ ११३ ॥ या प्रकार परस्पर बातकरकें प्रशसा करते उनकी पूजाकों ग्रहण करकें आगे पधारे ॥ ११४ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये भये श्रीमद्वेदव्यास विष्णुस्वामिमतके अनुकूल हरिभक्तनके सुख देवेवारे या चारित्रग्रन्थके तीसरे प्रस्थानमें ये पाँचमो पटह समाप्त भयो ॥ ११५ ॥

आलवालपदं याता ददृशुस्ते श्रियःपतिम् ॥
प्रणेमुस्तं ततस्तत्र जीर्णस्वामिन आगताः ॥ १ ॥
तेऽदर्शयँस्तत्र प्रत्नां चिञ्चां रामानुजप्रभोः ॥
श्रीदामोदरलीलायाभक्तेनानुभवःकृतः ॥ २ ॥
वर्षाणां वेदशतकं यत्रेत्यादिन्यरूपयन् ॥
आलवालकथायां ते शठकोपकथां जगुः ॥ ३ ॥
अभूत् पूर्वपयोराशेः क्वापिपश्चिमरोधसि ॥
मंडले पांड्यभूपस्य नगरी कुहकावती ॥ ४ ॥
तत्रासीत्पादजातेषु पल्लीभागवताग्रणीः ॥
शठकोपो महायोगी तेन लब्धः शिशुर्वने ॥ ५ ॥
स भक्तियोगमास्थाय तदेकध्यानतत्परः ॥
तूष्णीं स्थितः स्थापितोसौ बकुलस्य तरोरधः ॥ ६ ॥
बकुलाभरणः ख्यातो विप्रायांतस्तदध्वना ॥
त्यक्त्वा पाठं तु वेदस्य जग्मुस्ते शूद्रशंकया ॥ ७ ॥

सो आलवालस्थानमें आये वहाँ श्रीभगवान्के दर्शन किये ओर प्रणाम कियो तव वहाँ जीरस्वामी आये ॥ १ ॥ ओर उननें रामानुजप्रभुकी पुरानी अमिलीको दर्शन करायो वहाँ कोई भक्तनें चारसौ वर्ष ताईं श्रीदामोदरलीलाको अनुभव कियो हो पीछें आल्वारनकी कथामें शठकोपकी कथा कही के पूर्वसमुद्रके पश्चिम तटपे पांड्य राजाके राज्यमें कुहकावती( कुरकी ) नगरीमें शूद्रवैष्णवनमें अग्रणी शठकोप महायोगी भये ॥ २ ॥ ३ ॥ ॥ ४ ॥ ५ ॥ ओर वे बकुल वृक्षके तरें भक्तियोगसों ध्यानमें तत्पर होयकें चुप होय रहे ॥ ६ ॥ सो उनको नाम बकुलाभरण भयो सो वा मार्गसों ब्राह्मण वेदकों पढते जाते हे सो उनकों शूद्र समझकें वेदपाठ छोडकें गये॥ ७॥

विस्मृतास्ते ततो वेदं परावृत्त्यागता पुन ॥
महात्मनोऽपराधं तं क्षमाप्यैवाध्यगु श्रुती ॥ ८ ॥
परांकुश इति ख्यातस्सदा नारायणं भजन् ॥
वेदशास्त्रपुराणानां सारमुद्धृत्य सद्धिया ॥ ९ ॥
प्रबंधेषु निबद्ध मुग्धार्थे द्राविडभाषया ॥
स वैकुंठपद यातो दिव्यदेहो विमानत ॥ १० ॥
नारायणेन चोत्सगेऽध्यासितोतिसमादृत ॥
तत कतिपये कालेऽतीतेऽब्दे त्रिसहस्रके ॥ ११ ॥
समागत पुनर्योगी स्वाम्नायस्य प्रवृत्तये ॥
स श्रीमान् शठकोपार्यो वैकुंठेशसमाज्ञया ॥ १२ ॥
सम्प्रदायरहस्यार्थान् सनाथमुनये ददौ ॥
द्राविडद्विजमुख्योथ सनाथमुनिरभ्यधात् ॥ १३ ॥
स राममुनये प्राह स पूर्णमुनये पुन ॥
श्रीयामुनाय मुनये श्रीमद्रामानुजाय स ॥ १४ ॥

सो वेद भूलगये तब पीछें लोटकें महात्माके अपराधको क्षमा करायो ओर वेद पढकें पीछें गये ॥ ८ ॥ ओर सदा नारायणके भजवेवारे उनको नाम परांकुश पड्यो अपनी बुद्धिसों वेदशास्त्रपुराणनको सार लेकें सबके समझवेके लियें द्राविडभाषामें प्रबन्ध बनाये ओर दिव्यदेहधारणकरकें विमानमें चढकें वैकुंठ पदकों गये ॥ ९ ॥ १० ॥ उनको नारायणनें अपनी गोदीमें बैठायो, पीछें तीन हजार वर्ष बीतें अपने सम्प्रदायके प्रवृत्त करवेको नारायणकी आज्ञासों श्रीमान् शठकोपार्य आये ॥ ११ ॥ ॥ १२ ॥ सो सम्प्रदायको रहस्य नाथमुनिको दीनो जो द्राविडब्राह्मनमें श्रेष्ठ हे ॥ १३ ॥ उननें राममुनिको दीनो राममुनिने पूर्णमुनिको दीनो उननें यामुनमुनिको दीनो यामुनमुनिने श्रीमद्रामानुजको दीनो ॥ १४ ॥

श्रीलक्ष्मणमुनिः साक्षात्सहस्रवदनः स्वराट् ॥
श्रीभाष्यादिविनिर्माता बौधायनमतेन यः ॥ १५ ॥
शरण्यानां समुद्धर्ता शारदाशोकभंजनः ॥
मायावादाद्यहीन्द्राणां दर्पहाऽसौ खगेश्वरः ॥ १६ ॥
प्रादुर्भूतोभूतिपुरे द्राविडानां शिरोमणिः ॥
नूनाऽस्यतो यादवेंद्राद्यतेर्विद्यां समभ्यसत् ॥ १७ ॥
कप्यासपुंडरीकाक्षपदव्याख्यानदुःखितः ॥
तं त्यक्त्वा यामुनाचार्यं श्रितः श्रीसंप्रदायिनम् ॥ १८ ॥
स दिग्जयं विधायैव श्रीभाष्यादीन्निगद्य च ॥
वैष्णवान्निर्भयाँश्चक्रे जातो विष्णोरतिप्रियः ॥ १९ ॥
शिष्यं द्वारसमुद्रस्य राजानं विष्णुवर्द्धनम् ॥
चक्रे जैनान् विनिर्जित्य सोऽवाचीताप्यपाकरोत् ॥ २० ॥
वयं तत्संप्रदायस्य ह्याचार्याः स्मः प्रवृत्तये ॥
आवयाद्याधिकरणं भवच्छारीरकस्य नः ॥ २१ ॥

ये लक्ष्मणमुनि साक्षात् शेषजी जो श्रीभाष्य आदि ग्रंथनके कर्ता बडे तेजस्वी ॥ १५ ॥ भक्तनके उद्धार करवेवारे सरस्वतीके शोकको दूर करवेवारे मायावादीरूपीसर्पनके अहंकारको दूर करवेवारे गरुडजी जेसे हे ॥ १६ ॥ जो द्राविडब्राह्मणनके शिरोमणि भूतिपुरमें प्रगट भये ओर यादवेन्द्रसंन्यासीसों विद्याभ्यास कियो ॥ १७ ॥ पीछें "कप्यास" या पदके उनके किये भये अर्थसों दुःखित होयकें श्रीसम्प्रदायीयामुनाचार्यके आश्रित भये ॥ १८ ॥ वे दिग्विजय करकें श्रीभाष्य आदि ग्रंथ करकें वैष्णवनकों निर्भय करकें विष्णुके अत्यन्त प्यारे भये ॥ १९ ॥ ओर द्वारसमुद्रके राजा विष्णुवर्द्धनकों शिष्य करकें जैनीनकों जीतकें दाक्षिणसों निकासते भये ॥ २० ॥ उनके सम्प्रदायके हम आचार्य हैं

इत्युक्ते श्रीमदाचार्यास्तद्व्याख्यानं सविस्तरम् ॥
निरूप्य प्रस्थितास्तस्मात्तोताद्रिं प्रति सादरा ॥ २२ ॥
आचार्यानागतान् श्रुत्वा तनत्याचार्यपूरुषा ॥
आचार्यनयतोनिन्यूरमेशं तेऽन्वदर्शयन् ॥ २३ ॥
क्रोडीकृत्य श्रियं यत्र स्थितो नारायण प्रभु ॥
सिंहासने निरालंबचरण करुणालय ॥ २४ ॥
देवालये प्रविश्यैव तत्तीर्थं शिरसावहम् ॥
निषण्णादेवपुरतोजीर्णस्वामिसमादरात् ॥ २५ ॥
आचार्यास्ते प्रशस्यैव प्रोचु सूनृतया गिरा ॥
सम्यक् कृत भवद्भिस्तद्वैष्णवाध्वा सुरक्षित ॥ २६ ॥
तत कृष्णसभामध्ये सधर्मब्रह्मवादत ॥
श्रुत यद्यपि तत्सर्वमस्माभि स्वीयवक्त्रत ॥ २७ ॥

हमको अपने अभिमतशारीरकके आधेकरणकों सुनावो ॥ २१ ॥ ये कहवेपे श्रीमदाचार्य सविस्तर व्याख्यानको निरूपण करकें वहाँसों तोताद्रीकों आदरपूर्वक पधारे ॥ २२ ॥ श्रीमदाचार्यजीकों पधारवे सुनकें वहाँके आचार्यनके मनुष्यननें अपने आर्यनकी रीतिसों पधरायकें विष्णुके दर्शन कराये ॥ २३ ॥ जहाँ लक्ष्मीजीको गोदमें लेकें सिंहासनमें श्रीचरणलटकायकें करुणालय प्रभुनारायण विराजमान हैं ॥ २४ ॥ श्रीमदाचार्यजी देवालयमें प्रवेश करकें तीर्थको शिरमें धारण करते जीर्णस्वामीके आदरसों देवके सामनें विराजे ॥ २५ ॥ और वहाँके सब श्रीमदाचार्यजीकी प्रशंसा करकें अच्छी वाणीसों बोले जो आपने बहोत अच्छो कियो जो कृष्णदेवराजाकी सभामें सधर्मकब्रह्मवादसों वैष्णवनके मार्गकी रक्षा करी सो सब हमनें यद्यपि अपने मनुष्यनके मुखसों सुन्यो हैं तोभी यथावत् वृत्तान्त आपके मुखसों सुनवेकों उत्सुक हैं तब श्रीम

तथापि तद्यथावृत्तं श्रोतुमुत्काभवन्मुखात् ॥
न्यरूपयँस्तदाचार्या निश्शेषं वृत्तमात्मनः ॥ २८ ॥
विवादस्य यथा वृत्तं प्रस्फुरत्पटुयुक्तिमत् ॥
तत्कथाप्रेमपाथोधिहर्षोत्कर्षोर्मिसंप्लुताः ॥ २९ ॥
जीर्णस्वामिमुखाचार्यास्स्तुतिं प्रीत्यर्थमर्पयन् ॥
ब्रह्मचारिस्वरूपेण कृष्णवर्त्मा भवानिह ॥ ३० ॥
पूर्णानन्दः सदा भूयाद् बालोप्याचार्यपद्गतः ॥
ततश्च पुनराहुस्ते योंतस्तद्धर्मसूत्रगः ॥ ३१ ॥
विषयोवर्ण्यतां सम्यग् भवदाचार्यसंमतः ॥
तदाहुः श्रीमदाचार्याश्छान्दोग्याद्वैषयं वचः ॥ ३२ ॥
अत्रैव श्रूयते सूर्यमंडलस्थो हिरण्मयः ॥
प्राकृतोऽप्राकृतो वासौ संशयोविषये श्रुतेः ॥ ३३ ॥
पूर्वपक्षः प्राकृतो वै नखकेशादिमत्त्वतः ॥
न प्राकृतोपहतपाप्मत्वादिश्रवणादयद्ध ॥ ३४ ॥

ाचार्यजीनें अपनो सम्पूर्ण वृत्तान्त निरूपण कियो ॥ २६ ॥ २७ ॥ ॥ २८ ॥ ओर बडीयुक्तिवारे विवादके वृत्तान्तकों कह्यो तब वे जीर्णस्वामि आदि वा कथाके प्रेमरूपी समुद्रकी हर्षरूपी लहरीनमें डूबकें स्तुति करते बोले जो आप ब्रह्मचारीस्वरूपसों अग्नि हें बालकवी अचार्यपद्कों पायकें सदा पूर्णानन्द विराजमान होंय ओर पीछ बोले जो "अन्तस्तद्धर्म" या सूत्रको अपने आचार्यनको संमत विषय वर्णन करो तब श्रीमदाचार्यजीनें छान्दोग्यपनिषदसों याविषयकों कह्यो ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ जो सूर्यमंडलमें रहवेवारे हिरण्मयपुरुष सुनें हें सो वो प्राकृत हें के अप्राकृत हें नख केश आदिहोयवेसों प्राकृत हें ओर पाप छूटजाय हें इत्यादि सुनवेसों अप्राकृत हें यापूर्वपक्षमें ॥ ३३॥३४॥

उत्तर तत्र सिद्धांते व्यासाचार्योजगुस्तथा ॥
अतस्तद्धर्मसूत्रेण तथैवेतत्फलश्रुते ॥ ३५ ॥
अप्राकृतोऽयं पुरुप पुरुपोत्तमसज्ञित ॥
हिरण्यशब्दादानद प्रोच्यते छांदसोत्र लुक् ॥ ३६ ॥
विकारार्थे मयण् नेह द्व्यचश्छंदसि शासनात् ॥
कप्यास पुडरीकाक्षवाक्षिणीत्यत्र योपमा ॥ ३७ ॥
नाश्लीला प्राकृताचार्यैर्भवतां सा स्फुटीकृता ॥
ते प्राहुरस्मदाचार्या पुडरीकाक्षसज्ञया ॥ ३८ ॥
रूढ्या नारायण तत्र वाक्यशेपा समूचिरे ॥
तत्राहु पुनराचार्यो सत्य सत्य तथैव तत् ॥ ३९ ॥
नारायणादिशब्दा ये परतत्त्वस्य वाचका ॥
नारायणोपनिपदि ब्रह्मविष्णुमहेश्वरा ॥ ४० ॥
नारायणात्प्रवर्तत इत्याद्यन्यत्र च श्रुते ॥
परतत्त्वस्य गीतायां निर्णयो हरिणा कृत ॥ ४१ ॥

"अन्तस्तद्धर्म" यासूत्रसों व्यासाचार्य उत्तर कहें हें जो ये वो फलश्रुति हे ॥ ३५ ॥ ये अप्राकृत पुरुपोत्तमसज्ञ हें हिरण्य शब्दसों आनन्द अर्थलाभ होय हे यहाँ छान्दस लुक हे ॥ ३६ ॥ विकारअर्थमें मयट् प्रत्यय नहीं हे यो द्व्यचसों वेदहीमें होय हे नेत्रमें जो कप्यास पुडरीकाक्षकी उपमा हे सो प्राकृत नहीं हे आपके आचार्यननेंभी स्पष्ट वर्णन कियो हे तब उननें कह्यो जो हमारे आचाय पुडरीकाक्षसज्ञासो रूढिसां नारायणकोंही कहे हें ओर सब वाक्यनको यहाँही समन्वय हे सब आपने कह्यो जो ठीक हे २ यो वैसेही हे ॥ ३७ ॥ ३८ ॥ ३९ ॥ नारायण आदि शब्द परतत्त्वके वाचक हे नारायणोपनिपदमें ब्रह्मा विष्णु महेश ये नारायणसों होय हें ॥ ४० ॥ इत्यादिक वाक्यनमें औरभी श्रुतिमें परतत्त्वको वार्ता

पुरुषोत्तमसंज्ञा च स्थापिता परमात्मनः ॥
जलशायीति यो विष्णुः सोपि नारायणाभिधाम् ॥ ४२ ॥
तच्छेषत्वात्तदवतारत्वाद्धत्तेऽत्र का क्षतिः ॥
ततवामिति ऋङ्मंत्रे व्यापिवैकुंठवर्णनम् ॥ ४३ ॥
यत्र गावो भूरिशृंगा आयास इति लिंगतः ॥
इत्यादिश्रुतिवाक्येषु व्यापिवैकुंठदर्शनात् ॥ ४४ ॥
गोपालस्तदधिष्ठाता स एव पुरुषोत्तमः ॥
इत्येवं वहुधा जल्पोनल्पस्तेषां मुदेऽभवत् ॥ ४५ ॥
सत्कृत्य तान् सत्कृतास्त आलयाद्बहिरागताः ॥
न्यग्रोधस्य तले तत्र चक्रुः पारायणं वने ॥ ४६ ॥
अंतेवासिजनः कश्चित्प्राह नेहांतिके जलम् ॥
आचार्यास्तु तदा प्राहुः शिलेयमपसार्यताम् ॥ ४७ ॥

नारायणशब्द हे ये निर्णय भगवान्नें गीतामें कियो हे ॥ ४१ ॥ परमात्माकी पुरुषोत्तमसंज्ञा स्थापित करी हे जलशायी जो विष्णु हें वो बी नारायण या संज्ञाकों उनके अवतार होयवेसों धारण करें हें यामें कछू हानि नहीं "ततवा"या ऋग्वेदकें मंत्रमें व्यापक विष्णुको वर्णन हे ॥ ४२ ॥ ॥ ४३ ॥ परन्तु ओर "यत्रगावो" इत्यादि श्रुतीनमें व्यापी वैकुंठके दर्शनसों ॥ ४४ ॥ उनके अधिष्ठाता गोपाल हें वोही पुरुषोत्तम हें एसो बहोतसो वाद उनके आनन्दके लियें भयो ॥ ४५ ॥ पीछें उनसों सत्कारकों पायकें ओर उनको सत्कार करकें देवालयसों बाहेर आये ओर वटवृक्षके तले वनमें पारायण कियो ॥ ४६ ॥ सो वहाँ संगके कोई विद्यार्थीनें कह्यो के यहाँ जल नहीं हे तब आपनें आज्ञा करी जो ये शिला दूर करो ॥ ४७ ॥

शिला दूरीकृता शिष्यैरुपलब्धो जलाशय ॥
श्रुत्वा समागता सर्वे निपानं प्रकटीकृतम् ॥ ४८ ॥
आचार्ये प्रणताचार्याश्चक्रुस्तत्र महोत्सवम् ॥
यामिनीत्रितय तत्र स्थिता सम्यक्क समादृता ॥ ४९ ॥
दीर्घनारायण तस्मात्प्राप्ता देव चतुर्भुजम् ॥
दर्शनं वंदन तत्र प्रापुराचार्यसगमम् ॥ ५० ॥
उवाच जीर्णस्वाम्यार्यान् कीर्तिर्वोन श्रुता पुरा ॥
ते भवतोद्य मन्नेत्रयुगयोर्विषयं गता ॥ ५१ ॥
येन कृष्णसभासिंधु शास्त्रशंबरपूरित ॥
प्रस्फुरद्युक्तिकल्लोल प्रतिविज्ञपसकुल ॥ ५२ ॥
वाक्यसदर्भसद्रत्नो नानाशास्त्रसरिच्छ्रित ॥
मतिमदरमंथानावुत्तीर्णोतिविलोडित ॥ ५३ ॥
कथयतु तदाचार्या स्रक् सदा धार्यते कथम् ॥
पूजादिकाले सा धार्या तत्तत्साद्गुण्यसपदे ॥ ५४ ॥

तब शिष्यननें शिला हटाई तो जलाशय निकस आयो ये सुनकें वहाँके सब मनुष्य आये ओर श्रीमदाचार्यजीकों नम्र होयकें प्रणाम करते भये बड़ो उत्सव कियो ओर उनके आदरसों तीन दिन विराजे ॥ ४८ ॥ ४९ ॥ पछिं वहाँसों लम्बेनारायण आये वहाँ चतुर्भुजदेवके दर्शन करे ओर आचार्यनसों मिले ॥ ५० ॥ तब जीर्णस्वामी बोले जो आपकी कीर्ति पहले सुनी ही वे आप आज हमारे दृष्टिपथ भये ॥ ५१ ॥ जो आप शास्त्ररूपी जलसों पूरित चमकीली युक्तिरूपी लहरीवारो प्रतिवादीरूप मगरवारो वाक्यनके प्रबन्धरूप अच्छेरत्नवारो अनेकशास्त्ररूप नदीनको आश्रित कृष्णदेवराजाके सभारूपी समुद्रकों बुद्धिरूपी मथराचलसों मथके पारभये हें ॥ ५२ ॥ ५३ ॥ अब आप कहिये जो माला नित्य केसें धारण

वर्ज्या सा मलमूत्रादौ सर्वत्राऽशुचिकर्मणि ॥
इत्युक्ते प्राहुराचार्या मैवं वदत विज्ञनाः ॥ ५५ ॥
तन्निर्णयमविज्ञाय निर्णयः कथ्यते मया ॥
प्रह्लादसंहितायां च स्कांदेथो विष्णुधर्मके ॥ ५६ ॥
अन्यत्र बहुवाक्येषु स्रग्धृतिः श्रुतिचोदिता ॥
द्वारकायाश्च माहात्म्ये विष्णुधर्मोत्तरे तथा ॥ ५७ ॥
निवेद्य केशवे मालां तुलसीकाष्ठसंभवाम् ॥
वहते यो नरो भक्त्या तस्य वै नास्ति पातकम् ॥ ५८ ॥
तुलसीकाष्ठसंभूते माले कृष्णजनप्रिये ॥
बिभर्मि त्वामहं कंठे कुरु मां कृष्णवल्लभम् ॥ ५९ ॥
एवं संप्रार्थ्य विधिवन्मालां कृष्णगलेर्पिताम् ॥
धारयेत्कार्तिके योवै स गच्छेद्वैष्णवं पदम् ॥ ६० ॥

करें हें वो तो पूजाके समयमें पूजाको अंग हे यासों धारण करी जाय हे ॥ ५४ ॥ मलमूत्रके त्यागके समय ओर अपवित्रकर्मनमें वो वर्जित हे ये कहवेपे आप बोले के हे विद्वानों विना निर्णयके जाने एसें मत कहो ॥ ५५ ॥ निर्णय हम कहें हें प्रल्हादसंहितामें स्कन्दमें विष्णुधर्ममें ओर बहोत ठिकानमें माला धारण लिख्यो हे द्वारकाके माहात्म्यमें विष्णुधर्मोत्तरमेंबी ताहीप्रकार लिख्यो हे ॥ ५६ ॥ ५७ ॥ जो तुलसीकाष्ठकी माला भगवान्को अर्पण करकें जो मनुष्य भक्तिसों धारण करें हें उनके पातक नहीं रहेंहें ॥ ५८ ॥ "तुलसीमाला धारण करवेको मन्त्र" तुलसीकाष्ठसों उत्पन्न भगवज्जननकी प्यारी हे माले तोकूँ में कंठमें धारण करूँ हूँ मोकों कृष्णको प्यारो करो ॥ ५९ ॥ या प्रकार प्रार्थना करकें भगवान्के गरेमें अर्पण करी गई मालाकों जो धारण करें

मार्गशीर्षमाहात्म्यसप्तमाध्याये तदधारणे दोषदर्शनम् ॥
धारयंति न ये मालां हैतुकाः पापबुद्धयः ॥
नरकान्न निवर्त्तंते दग्धाः कोपाग्निना मम ॥ ६१ ॥
विष्णुधर्मोत्तरे त्वाशौचादौ मालाधारणं
मदोषावहमेिति भगवतोक्तम् ॥
तुलसीकाष्ठजा मालां कंठस्थां वहते तु यः ॥
अप्यशौचोप्यनाचारो मामेवैति न संशयः ॥ ६२ ॥
पाद्मे च
यज्ञोपवीतवद्धार्य्या तुलसीकाष्ठमालिका ॥
क्षणार्द्धं तद्विहीनोपि विष्णुद्रोही न संशयः ॥ ६३ ॥
तुलसीकाष्ठसंभूतां यो मालां वहते सदा ॥
प्रायश्चित्तं न तस्यास्ति नाऽशौचं तस्य विग्रहे ॥ ६४ ॥
यज्ञोपवीतवद्धार्यो कंठे तुलसिमालिका ॥
नाऽशौचं धारणे तस्या यतः सा ब्रह्मरूपिणी ॥ ६५ ॥

हैं वे वैकुंठकों जाँय हैं ॥ ६० ॥ मार्गशीर्ष माहात्म्यके सातवे अध्यायमें नहीं धारण करवेमें भगवान्नें दोष दिखाये हे के जो कुतर्कवारे पापबुद्धि मालाकों नहीं धारण करें हें वे मेरे कोपरूपी अग्निसों भस्म होयकें नरकसों निवृत्त नहीं होंय हैं ॥ ६१ ॥ ओर विष्णुधर्मोत्तरमें आशौचआदिमेंभी मालाधारण करवेमें दोष नहीं ये भगवान्नेंही कह्यो हे तुलसीकाष्ठकी माला जो कंठमें धारण करे हे सो चाहे आशौची होय वा अनाचारी होय मोकोंही पावे हे यामें संदेह नहीं ॥ ६२ ॥ पद्मपुराणमेंभी कह्यो हे के यज्ञोपवीतके जेसे तुलसीकाष्ठकी माला धारण करनी आधे क्षणभी जो तासों हीन रहेहे सो विष्णुद्रोही समझो जायगो यामें संदेह नहीं ॥ ६३ ॥ जो तुलसीकाष्ठकी माला सदा धारण करेहे ताके शरीरमें प्रायश्चित्त आशौच नहीं रहे हें ॥ ६४ ॥ यज्ञोपवीतके जेसे कंठमें तुलसीकी माला राखनी ताके

शांडिल्ये भक्तिकाण्डेतृतीयांशे

मुनीनां मञ्जरीमाला पत्रमाला दिवौकसाम् ॥
तुलसीकाष्ठमाला तु नृणां धार्या सदोदिता ॥ ६६ ॥
ध्यानेस्या मंजरीदाम पत्राणां पूजनोत्तरे ॥
काष्ठमाला सदा धार्या ह्याजन्ममरणावधि ॥ ६८ ॥
मृत्युकाले तु साऽवश्यं धार्या मृत्युः पदे पदे ॥
तस्मात्सदैवं संधार्या कंठे तुलसिमालिका ॥ ६८ ॥

यत्तु पाद्मे पातालखंडे

तुलसीकाष्ठघटितै रुद्राक्षाकारकारितैः ॥
निर्मितां मालिकां कंठे निधायार्चनमारभेत् ॥ ६९ ॥
तुलसीकाष्ठमालाया भूषितः कर्मचाचरेत् ॥
पितॄणां देवतानां च कृतं कोटिगुणं भवेत् ॥ ७० ॥
न धारयति यो मालां तस्य सत्कर्म निष्फलम् ॥
तस्माद्धार्या प्रयत्नेन ह्यन्यथा पतितो भवेत् ॥ ७१ ॥

धारणमें आशौच नहीं क्यों जो वो ब्रह्मरूपिणी हे ॥ ६५ ॥ शांडिल्य संहिताके भक्तिकांडमें तीसरे अंशमें मुनीनके लिये मंजरीकीमाला देवतानके लियें पत्रकी माला ओर मनुष्यनके लिये तुलसीकाष्ठकी माला सदा धारण करनी चाहिये॥६६॥ध्यानमें मंजरीकी माला पूजाके पीछें पत्तानकी माला जन्मसों लेके मरणपर्यन्त सदा तुलसीकाष्ठका मीला धारण करनी ॥ ६७ ॥ मृत्युके समय अवश्यही धारण करनी अवश्य धारण करनो ऐसे लेख हे तासों सदाही धारणकरनो क्यों के मृत्यु पदपदमें हे ॥ ६८ ॥ ओर पद्मपुराणमें पातालखंडमें लिख्यो हे के रुद्राक्षके आकारकी तुलसीकाष्ठकी मणिकानकी माला बनायकें ओर कंठमें धारण करकें पूजा करे ॥ ६९ ॥ तुलसीकाष्ठकी मालासों भूषित होयकें पितरनकों ओर देवतानको जो कर्म करे वो कोटिगुण होय हे ॥ ७० ॥ जो नहीं धारण करेहे वाको

श्रौते स्मार्ते च पौराणे मिश्रके तांत्रिकेऽपि च ॥
धार्या तुलसिकाष्ठस्य माला परमपावनी ॥ ७२ ॥
साद्गुण्यंविगुणो गच्छेत्सद्गुणोऽक्षयतामपि ॥
धर्मं सोपि हरे प्रीत्यै स्यात्तुलस्या इति श्रुतम् ॥ ७३ ॥
ऊर्द्ध्वपुंड्र विना चक्रशंखमुद्रा विना हरे ॥
विना श्रीतुलसीमाला कृतं पूजादिकं वृथा ॥ ७४ ॥
त्यक्त्वोर्द्ध्वपुंड्र मुद्राश्च मालां मंत्रागमे गुरुम् ॥
पूजितोपि हरिर्देवो न प्रसीदति भूरिशः ॥ ७५ ॥
विना मृदोर्द्ध्वपुंड्रेण वृन्दाकाष्ठस्रजां विना ॥
पंचमुद्रां विना विष्णोः पूजनं द्रोहमस्य वै ॥ ७६ ॥
इत्येवं विधिवाक्येषु शुभकर्मांगता तु या ॥
नानृतं क्रतुषु ब्रूयात् क्रत्वर्थेयं निरूप्यते ॥ ७७ ॥

सत्कर्म निष्फल होय हे तासों प्रयत्नसों धारण करनों नहीं तो पतित होय हे ॥ ७१ ॥ श्रौत स्मार्त पौराणिक मिश्रक तांत्रिक इन सब कर्मनमें परम पवित्र तुलसीकाष्ठकी माला धारण करनी ॥ ७२ ॥ तासों जो गुणहीन होय सो सगुण होय जाय हे सगुण नाशरहित होयजायहे तुलसीसों धर्म हरिके प्रसन्नताके लिये होय हे ॥ ७३ ॥ शीतलमुद्रानके विना ऊर्द्ध्वपुंड्र तुलसीमालाके विना करी भई पूजा वृथा हे ॥ ७४ ॥ ऊर्द्ध्वपुंड्र शीतलमुद्रा माला मंत्र इनके विना पूजा कियेभी हरि अच्छीतरहसों प्रसन्न नहीं होय हे ॥ ७५ ॥ ऊर्द्ध्वपुंड्र तुलसीकाष्ठकी माला शीतल मुद्रा इनके विना विष्णुको पूजन उनको द्रोह करनो हे ॥ ७६ ॥ इत्यादिक विधिवाक्यनमें जो शुभकर्मकी अंगता लिखी हे सो यज्ञमें झूंठ न बोलनों याके कहवेपेभी जेसी सत्य बोलवेकी नित्यता हे वेसी हे ॥ ७७ ॥

पुरुषार्थतया नित्यधारणं तस्य संमतम् ॥
भोजने मैथुने स्नाने मलमूत्रविसर्जने ॥ ७८ ॥
तुलसी धार्यते येन विष्णुद्रोही न संशयः ॥
इत्येवं विधिवाक्येषु श्रूयते तुलसीपदम् ॥ ७९ ॥
पत्रमालापरो ज्ञेयः सदा काष्ठस्रजो विधिः ॥
दौर्बल्यं विधिवाक्यानामनुसंदधतां सताम् ॥ ८० ॥
मालाविहीनकंठेन न स्थेयं लवमप्युत ॥
न संभाष्यं न चाचम्यं नात्तव्यं न च संस्वपेत् ॥ ८१ ॥
पापं कोटिगुणं तस्य पुण्यमेकगुणं भवेत् ॥
विपरीतं भवेत्सर्वं तुलसीकाष्ठवर्जने ॥ ८२ ॥
न स्पृशंति च पापानि तुलसीकाष्ठधारिणम् ॥
न स्पृशंति च पुण्यानि तुलसीकाष्ठवर्जितम् ॥ ८३ ॥
महापापानि पापानि ह्यतिपापानि यान्युत ॥
उपपापाऽनुपापानि प्रकीर्णाद्यानि यानि च ॥ ८४ ॥

भोजनमें मैथुनमें स्नानमें मलमूत्र करवेमें जो तुलसीधारण करे हे वो विष्णुद्रोही हे यामें संदेह नहीं इत्यादिक विधिवाक्यनमें जो तुलसीपद सुनेहैं ॥ ७८ ॥ ७९ ॥ वो तुलसीके पत्रमालापर हे क्यों जो तुलसीकाष्ठकी मालाको तो नित्य विधान हे ॥ ८० ॥ कंठमें मालाके विना क्षणमात्रबी न रहे न बोले न आचमन करे न भोजन करे न सोवै ॥ ८१ ॥ पाप कोटिगुण होय हें पुण्य एक गुण तुलसीकाष्ठकी माला न धारण करवेसों सब उलटो होय हे ॥ ८२ ॥ तुलसी काष्ठधारीकों पाप नहीं स्पर्श करे हे ओर तुलसीकाष्ठमालाविहीनको पुण्य नहीं स्पर्श करे हे ॥ ८३ ॥ महापाप पाप अतिपाप उपपाप अनुपाप प्रकीर्ण आदि मन वाणी शरीरसों उत्पन्न भये होयवेवारे होयरहे

मनोवाक्कायजातानि भूतभाविभवानि च ॥
तेषां मूलानि नश्यंति तुलसीकाष्ठधारणात् ॥ ८५ ॥
सर्वेषामेव वर्णानामाश्रमाणां मुनीश्वरा ॥
कार्यो वै वैष्णवी भक्ति तुलसीकाष्ठधारणम् ॥ ८६ ॥
ब्राह्मणस्य विशेषेण सन्यस्तस्य विशेषत ॥
यतो नारायणेत्येव तस्य वाक्यमुदाहृतम् ॥ ८७ ॥
यदा तु वैष्णवी सृष्टि सभूता सत्वतोहरे ॥
तस्यां जाता प्रिया वृंदा भक्तिस्तां तु समाश्रिता ॥ ८८ ॥
वस्वक्षरो महामंत्रस्तस्यै श्रीहरिणार्पित ॥
अतो भक्तजनैर्वंद्या पूज्या धार्या सदैव हि ॥ ८९ ॥
मुख्यं भागवत चिह्नं तुलसीकाष्ठधारणम् ॥
हरे प्रियतमं तद्धि तद्विहीनो न वैष्णव ॥ ९० ॥
सदा धार्या सदा धार्या तुलसीकाष्ठमालिका ॥
सदा वर्ज्या सदावर्ज्या मालाऽन्यद्रुमसभवा ॥ ९१ ॥

जितने पाप हैं उनके मूल जड तुलसीकाष्ठधारणकरवेसों नष्ट होय जा हे ॥ ८४ ॥ ८५ ॥ सब वर्णनकों ओर आश्रमनकों वैष्णवी भक्ति करनी चहिये ओर तुलसीकाष्ठकी माला धारण करनी चहिये ॥ ८६ ॥ ब्राह्मणनकों विशेष करके ओर सन्यासिनकों वासोंभी विशेष करके धारण करनी चहिये क्यों के उनको नारायण ये वाक्यही हे ॥ ८७ ॥ जब भगवान्के सत्त्वगुणसों वैष्णवी सृष्टि उत्पन्न भई तब भक्तिकी आश्रय वृन्दा उत्पन्न भई ॥ ८८ ॥ उनकों भगवान्नें अष्टाक्षरमंत्र उपदेश कियो यासों भक्तजननकी सदा पूज्य ओर धारणकरवेके योग्य हे ॥ ८९ ॥ वैष्णवनको मुख्य चिह्न तुलसीकाष्ठमाला हे यो भगवान्की अत्यन्तप्यारी है याके विना वैष्णव नहीं ॥ ९० ॥ तुलसीकी माला सदा धारण करनी सदा धारण करो ओर काठकी माला सदा वर्जित है सदा वर्जित

तुलसीदलजा माला धात्रीफलकृता पिवा ॥
शुचिकाले तु संधार्या वर्ज्याऽन्यत्र तथैव सा ॥ ९२ ॥
मूत्रोत्सर्गमलोत्सर्गे कुर्याद्दृग्विषयातिगाम् ॥
कर्णे वापि दधद्वामे रतौ पृष्ठावलंबिनी ॥ ९३ ॥
कदापि च कथंचिद्वै न संत्त्याज्या महात्मभिः ॥
तां त्यजन् हीयते धर्माद्गुरुद्रोही भवेद्ध्रुवम् ॥ ९४ ॥
इति शांडिल्यवाक्येषु समुक्तो निर्णयः स्फुटः ॥
संप्रदायानुरोधेन तस्मिन् वर्तामहे वयम् ॥ ९५ ॥
प्रशंसितास्ततस्तैस्त उषित्वा रजनीद्वयम् ॥
ततस्ते प्रस्थिता याताः कुमारीकन्यकां प्रति ॥ ९६ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिंस्तृतीयेसमजनि पटहश्चैष षष्ठाजयाख्य ॥ ९७ ॥

---

तुलसीदलकी माला ओर आमराकी माला पवित्र समयमें धरनी ओर समयमें वर्जित हें ॥ ९१ ॥ ९२ ॥ मलमूत्रके त्यागके समय दीख न परे ऐसें कर लेंनी अथवा बाँये कानपे चढाय लेनी ओर रतिमें पीठके ओर लटकाय लेनी ॥ ९३ ॥ कोई समयमें केसेंबी नहीं त्याग करनी वाको त्याग करते धर्मसोंहि हीन होय जाय हे ओर निश्चय गुरुद्रोही होय हे ॥९४ ॥ ये शांडिल्यके वाक्यनमें स्पष्ट निर्णय कह्यो हे सम्प्रदायके अनुरोधसों तामें हम वर्तें हें ॥ ९५ ॥ तब उननें प्रशंसा करी ओर आप दो दिन रहकें वहाँसो कन्याकुमारीकों पधारे ॥ ९६ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीगोविन्दाचार्यजी महाराजकी आज्ञासों श्रीकृष्णशास्त्रीके बनाये श्रीमद्वेदव्यासविष्णुस्वामीके ग्रन्थनके अनुकूल हरिभक्तनकें सुखदेवेवारे या दिग्विजय ग्रन्थके तीसरे प्रस्थामें ये छठो पटह समाप्त भयो ॥ ९७ ॥

लक्ष्मीवर वरं लब्धु याऽब्धितीरे तपस्यती ॥
तपसा श्यामतां याता किं वा श्याम हृदा स्मरन् ॥ १ ॥
यशोदागर्भसबधाद्गाभीर्योत्कालदेवता ॥
अचितयद्विवाहाय तदुलाअश्मतां गता ॥ २ ॥
भ्राजतेऽद्यापि ते यत्र स्वयं च महदाशया ॥
यस्या प्रभावादुदधौ मज्जत स्यु समुद्धृता ॥ ३ ॥
चिबुकस्थस्य हीरस्य प्रदीप्त्यैव प्रकाशते ॥
तां देवता प्रणम्यैव ते वित्तार्पणतर्पणम् ॥ ४ ॥
चक्रु कृष्णभगिन्या वै गता श्रीसुदरेश्वरम् ॥
आदिकेशवमायातास्ततस्त जलशायिनम् ॥ ५ ॥
तस्माच्छ्रीपद्मनाभस्य दर्शनाय समागता ॥
पद्मतीर्थादितीर्थानि भांति पुण्यानि यत्र वै ॥ ६ ॥
यत्र चोलेश्वरो राजा मुद्गलश्च महर्ष्यऽभूत् ॥
विष्णुदासस्य चरितमत्रत्य पाद्मभापितम् ॥ ७ ॥

जो समुद्रके तीर लक्ष्मीकान्तकों वरपायवेकी इच्छासो तपस्या कर हैं ओर तपसोंही श्याम होयगई हैं अथवा हृदयसों श्यामकों स्मरण क श्याम होयगई हैं ॥ १ ॥ यशोदाके गर्भसम्बन्धसों गम्भीरतासों ज विवाहके विचार करतें चावल पापाण होयगये ॥ २ ॥ जो आज दीख पडें हैं ओर स्वयम् बडे आशयवारी हैं जिनके प्रभावसों समुद्रमा उने दीखपडे हैं ॥ ३ ॥ ओर ठोडीमें हीराके प्रकाशसों प्रकाश रह्यो है एसी उन देवता कृष्णकी बहिनकों प्रणाम करकें भेट आदिसों करकें सुदरेश्वर पधारे वहाँसों आदिकेशवका पधारे वहाँसों जलशायीजी ॥ ४ ॥ ५ ॥ वहाँसों श्रीपद्मनाभजीके दर्शनके लिये पधारे जहाँ पद्मतीर्थादिक शोभें हैं ॥ ६ ॥ जहाँ चोलदेशको राजा मुद्गल महर्षी

नरायन्तेत्रवनिता वन्यायंते प्रजा नराः ॥
भागिनेयाः सुतायंते सुतीयंति तथौरसाः ॥ ८ ॥
कुर्वन्ति जानकीशस्य वनवासविडंबनम् ॥
कटिवस्त्रा नरा नार्यो मुक्तकेशा विभूषणाः ॥ ९ ॥
पद्मनाभस्य प्रासादं प्रत्यागच्छन्समाहृताः ॥
मूर्तिं सुमहतीं भ्राजत्प्रभां नागेन्द्रशायिनीम् ॥ १० ॥
ददृशुस्ते त्रिभिर्द्वारैर्देववृंदैर्निषेविताम् ॥
प्रणेमुर्दंडवद्भूमौ चक्रुस्संस्तवनं हरेः ॥ ११ ॥
तत्तीर्थं शिरसागृह्णन् पर्यक्रामन् प्रदक्षिणम् ॥
उपायनं निधायैव नैवेद्यं चाप्यकारयन् ॥ १२ ॥
आज्ञया पद्मनाभस्यानंदाद्यास्तत्समर्चकाः ॥
कृपानिधीनां शिष्यत्वं कृपापात्रास्तु भेजिरे ॥ १३ ॥
शमीतरोरधः स्थित्त्वा वेदपारायणं व्यधुः ॥
आचार्याणां वचः श्रुत्वा समायातो महीपतिः ॥ १४ ॥

ओर पद्मपुराणमें विष्णुदासको चरित्रबी यहाँहीको है ॥ ७ ॥ जहाँकी स्त्री पुरुषके जेसे आचरण करें हें ओर प्रजा वनकेरहवेवारेनके जेसे भागनेय पुत्रके जेसें पुत्रकन्या पुत्रनके जेसे आचरण करे हें ॥ ८ ॥ जहाँके स्त्री पुरुष कटिमें वस्त्र लपेटें वाल छूटे मानों जानकीसमेत श्रीरामचन्द्रजीके वनवासकी विडम्बना करें हें ॥ ९ ॥ वहाँ बडेआदरसों श्रीपद्मनाभजीकेमंदिरमें पधारे जहाँ शेषनागके ऊपर शयन करती वडी भारी प्रभावारी देवतानसों सेवा करी गई एसी मूर्तिको तीन द्वारनसों दर्शनकियो जायहे वहां दंडवत् प्रणाम करकें स्तुति करी ॥ १० ॥ ॥ ११ ॥ उनके तीर्थको धारण करकें प्रदक्षिणा भेट धरकें नैवेद्य करावते भये ॥ १२ ॥ ओर श्रीपद्मनाभकी आज्ञासों उनके सेवा करवेवारे आनन्द आदिक श्रीमदाचार्यके शिष्य ओर कृपापात्र भये ॥ १३ ॥ पीछें वहाँ शमीवृक्षके तलें विराजकें वेदको पारायण कियोसो आपकों सुनकें वहाँको राजा

दण्डवत्प्रणतो भूत्वा चकारोपायनं महत् ॥
विज्ञापनं ततश्चक्रे पावनं क्रियतां गृहम् ॥ १५ ॥
श्रीमच्चरणपातेन दुःखमेवविनिवार्यताम् ॥
सशिष्या श्रीमदाचार्या प्रयाता राजमंदिरम् ॥ १६ ॥
महोत्सवः कृतो राज्ञा वेशितास्ते वरासने ॥
राजा राजपुरोधाश्च राजपत्न्यश्च सादरम् ॥ १७ ॥
इभ्या सभ्या जनाश्चक्रुः सर्व एवोपढौकितम् ॥
किं ते दुःखं महीपाल पप्रच्छुर्गुरवस्तदा ॥ १८ ॥
स चाह मद्भोगिनीयं धर्षिता निजभोगिना ॥
न शर्म लभते क्वापि बलिना ब्रह्मरक्षसा ॥ १९ ॥
दामोदरस्तदा प्राह पादतीर्थं प्रदीयताम् ॥
गुरोः पादोदकं तस्यै शिष्यणैवार्पितं नृप ॥ २० ॥
ददौ तेन विनिर्मुक्ता मुक्तः रक्षो जगावथ ॥
बिभ्रद्दिव्यतनुं भ्राजद्विमानोपरि संस्थितः ॥ २१ ॥

आयो ॥ १४ ॥ सो दण्डवत् करकें बडी भेट करी ओर प्रार्थना कीनी जो हमारा घर पवित्र करो ॥ १५ ॥ आपके चरणनके पधारवेसों हमारो दुःख दूर होयजायगो तब शिष्यनके संग श्रीमदाचार्य राजभवनकों पधारे ॥ १६ ॥ राजानें बडो उत्सव कियो ओर सिंहासनपें विराजमान किये राजा पुरोहित रानी सभ्य महाजन इन सबननें भेट करी तब आपने आज्ञा करी जो हे राजन् तुमको कहा दुःख है ॥ १७ ॥ १८ ॥ राजा बोल्योके ये मेरी स्त्री है याके ऊपर बली ब्रह्मराक्षस लग्यो है सो ये कभी सुख नहीं पावे है ॥ १९ ॥ तब दामोदर बोले के आपको चरणोदक देवो तब राजानें आपके शिष्यनें दीनो भयो चरणामृत वार्कों दीनों ॥ २० ॥ तब राक्षस वाकों छोडके दिव्य शरीर धारण करकें बोल्याके आपके चरणोदकके स्पर्शसों राक्षसी मेरो देह छूटगयो मेनें श्रीपद्मनाभके सुवर्णकी चोरीसें या दुःखको पायो हो सो आपकी कृपासों

श्रीमत्पादोदकस्पर्शान्मुक्ताहं राक्षसीं तनुम् ॥
पद्मनाभहिरण्यस्य स्तेयात्प्राप्तोस्मि दुःखिताम् ॥ २२ ॥
वैकुंठं प्रति याम्यद्य ह्यनुज्ञा दीयतां मम ॥
इत्युक्त्वा सोऽर्कवर्णेन किरीटेन प्रणम्य तान् ॥ २३ ॥
वैकुंठपार्षदैर्नीतः पुष्पवृष्ट्या जगाम सः ॥
तं समीक्ष्य महाश्चर्यं ज्ञात्वाचार्यं हरेस्तनुम् ॥ २४ ॥
सर्वे शरणमायाता आचार्यांश्च शिबिरेऽनयन् ॥
एतस्मात्प्रस्थिता याता देवदेवं जनार्दनम् ॥ २५ ॥
यत्र यज्ञः कृतः पूर्वं विधिनापि यथाविधि ॥
यद्यज्ञदग्धशाकल्यरक्षा रक्षाकृते नृणाम् ॥ २६ ॥
जनार्दनीया धूपेति ख्याता चामोदशालिनी ॥
यज्ञाज्यमग्निवेदीति रुजां तदपि भेषजम् ॥ २७ ॥
खनयोयत्र लोहानां भूरियं भूरिवैभवा ॥
विष्णुस्वामिप्रभोर्योऽसौ शिष्यः श्रौतानिधिर्द्विजः ॥ २८ ॥

आज वैकुंठकों जाऊँ हूँ आज्ञा दीजिये ये कहिकें सूर्यके वर्णके जेसो किरीट धारण कियें वो श्रीमदाचार्यजीकों प्रणाम कर पुष्पवृष्टि करते वैकुंठके पार्षदनके संग गयो या बडे आश्चर्यकों देखकें श्रीमदाचार्यजीकों भगवद्रूप समझकें सब शरण आये ओर अपने यहाँ पधराये ओर पीछें वहाँसों आप जनार्दनकों पधारे ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ जहाँ ब्रह्माजीनें विधानपूर्वक यज्ञ कियो हो जाकी होमकी रक्षाबी लोगनके रक्षाके लियें हे ॥ २६ ॥ जाको नाम जनार्दनधूपहे जो बडी सुगन्धवारीहे जहाँकी यज्ञवेदीबी रोगीनके लिये औषध हे ॥ २७ ॥ जहाँ लोहकी खान हें बडी वैभववारी पृथिवी हे जामें विष्णुस्वामीके शिष्य श्रौतनिधिनें लिंगीनसों दुःखित होयकें वास कियो हो उन प्रसि-

तेनावास कृतस्तत्र दु खितेन च लिंगिभि ॥
पारंपर्यं तदेतेषां लिख्यते ख्यातकर्मणाम् ॥ २९ ॥
प्रणव प्रथमाचार्य स ज्ञेय पुरुषोत्तम ॥
महत्तत्त्व द्वितीय तु मायाशक्तितदक्षरम् ॥ ३० ॥
नारायणस्तृतीयो यो जलशायी स दृश्यताम् ॥
महादेवश्चतुर्थोऽसौ श्रीमान्सकर्षणो मत ॥ ३१ ॥
त्रिपुरारि पचमोऽसौ विष्णुस्वामिप्रभोर्गुरु ॥
तृतीय स्वामिनामेषोक्ता परेय परपरा ॥ ३२ ॥
विष्णुस्वामिप्रभु शिष्य काञ्च्यां श्रौतनिधि दधौ ॥
स कांचीधाम चोन्मुच्य सिषेवे श्रीजनार्दनम् ॥ ३३ ॥
तत्रत्यभूपैराचार्यैर्धाम तस्मै समर्पितम् ॥
शिष्यो हरिनिधिस्तस्य तस्य ज्ञाननिधि स्मृत ॥ ॥ ३४ ॥
तस्य ध्याननिधि ख्यातस्तस्य चात्मनिधिर्मत ॥
सहजादिनिधिस्तस्य चरणादिनिधिस्तत ॥ ३५ ॥

इन्नमेधारेनकी गुरुपरम्परा लिखें हैं ॥ २८ ॥ २९ ॥ पहलें प्रणव आचार्य जो पुरुषोत्तम हैं दूसरे महतत्व मायाशक्तिवारे अक्षर ब्रह्म ॥ ३० ॥ तीसरे नारायण जो जलशायी हैं चौथे महादेव जिनकों सकर्षण कहें हैं ॥ ३१ ॥ पाँचवे त्रिपुरारि जो विष्णुस्वामीप्रभुके तीसरे गुरु ये विष्णुस्वामिकी परम्परा कही ॥ ३२ ॥ विष्णुस्वामीनें अपने शिष्य श्रौतनिधिको कॉंचीमें बैठायो वो कॉंचीको छोडकें जनार्दनकी सेवा करतो भयो ॥ ३३ ॥ वहाँके आचा यनन आग राजानें वो धाम उनके भेट कर दीनो उनके हरिनिधि और इनके ज्ञाननिधि भये ॥ ३४ ॥ उनके ध्याननिधि उनके आत्मनिधि पीछे

एतेऽत्र निधयः सप्त निधिभूतस्य रक्षणात् ॥
श्रीमदनंतसेनस्य शालग्रामस्वरूपिणः ॥ ३६ ॥
आचार्यो वामदेवोऽस्य शिष्योऽभूच्चरणप्रभोः ॥
श्रीरौहिणेयाचार्योऽतः सेवाचार्यस्ततो मतः ॥ ३७ ॥
देवाचार्यस्तस्य शिष्यः स स्वयं देववैभवः ॥
हिरण्यगर्भाचार्योऽस्य गोविंदाचार्यकस्ततः ॥ ३८ ॥
रंगाचार्यस्ततो लोकाचार्यस्त्रैलोक्यविश्रुतः ॥
विष्णवाचार्यःसदानंदाचार्यो विद्वज्जनाग्रणीः ॥ ३९ ॥
आनंदसाराचार्योऽस्य च प्रेमाकरः प्रभुः ॥
श्रीमल्लक्ष्मणभट्टोऽस्य चेत्येवं गुर्वनुक्रमः ॥ ४० ॥
गतागतमभूत्कांच्यां निधीनामभिषेचनम् ॥
आचार्याः पाठकाश्चासन् सर्वत्रैषां गतागतम् ॥ ४१ ॥
दीक्षितानां स्वयं तेषामन्वयस्थमहात्मनाम् ॥
श्रीगोपालस्य भक्तानां रक्षकानां तदध्वनः ॥ ४२ ॥

सहजनिधि ओर चरणादिनिधि भये ॥ ३५ ॥ निधिभूत शालग्रामस्वरूपी अनन्तसेनकी रक्षा करवेवारे सात ये निधि भये ॥ ३६ ॥ चरणप्रभुके वामदेवाचार्य शिष्य भये उनके रौहिणेयाचार्य पीछें सेवाचार्य भये ॥ ३७ ॥ उनके देवतानके जेसे वैभववारे देवाचार्य शिष्य भये उनके हिरण्यगर्भाचार्य उनके गोविन्दाचार्य ॥ ३८ ॥ उनके रंगाचार्य उनके लोकाचार्य भये जो तीनों लोकनमें प्रसिद्ध हे उनके विष्णवाचार्य उनके विद्वाननमें अग्रणी ऐसे सदानन्दाचार्य भये ॥ ३९ ॥ इनके आनन्दसाराचार्य उनके प्रेमाकर प्रभु इनके श्रीलक्ष्मणभट्टजी भये एसी गुरुपरम्परा हे ॥ ४० ॥ ओर काञ्चीमें निधीनको जानो आवनो भयो अभिषेक भयो ओर उपदेश करवेवारे आचार्य भये उनको सब ठिकाने गमन आगमन होतो हो ॥ ४१ ॥ श्रीगोपालजीके भक्त ओर उनके मार्गके रक्षा करवेवारे कुलीन दीक्षित

विरक्तानां पृथक्सघा कीर्त्यंते तेप्यनुक्रमात् ॥
प्रेमाकरयतीन्द्रस्य शिष्या लोहार्गलस्थिता ॥ ४३ ॥
श्रीगोपीनाथशिष्यास्तु भक्ताहरियानपालका ॥
दीक्षिताच्छ्रीगिरिधरात्कामयीदीक्षितास्तत ॥ ४४ ॥
शिष्या श्रीरघुनाथानां भाति पाकसशासना ॥
यदुनाथमहाराजशिष्यास्ते व्रजवासिन ॥ ४५ ॥
अथैषां पद्धतिं वक्ष्ये ज्ञेया सा वीरवैष्णवै ॥
विष्णुस्वामिगुरूणां वै प्रणाम प्रथमोद्भव ॥ ४६ ॥
तुलस्यै भगवानाह तेपामष्टाक्षरोमनु ॥
धर्मशाला विष्णुकांची ते चात्रोषुर्वैहूदका ॥ ४७ ॥
गोत्र तेषामच्युताख्यं यतीनामच्युतात्मनाम् ॥
बृहदारण्यकाव्यासाद्यजुर्वेदस्तदाश्रमे ॥ ४८ ॥
आहारो हरिनामां यत्तेन जीवति नित्यश ॥
नेत्रद्वारेण ते याता सायुज्यं कमलापते ॥ ४९ ॥

विरक्त उन महात्मानके अलग अलग सघ भये उनको क्रमसों कहें हैं प्रेमा-
कर यतीन्द्रके शिष्य लोहागढमें रहे ॥ ४२ ॥ ४३ ॥ और गोपीनाथके
शिष्य हरयानामें , रहे श्रीगिरिधर दीक्षितजीके शिष्य कामरियामें वसे श्रीरघु
जो पुरुषोत्तम हैं दूसरे महत्तत्व मायाशक्तिवारे श्रीयदुनाथ महाराजके शिष्य
नारायण जो जलशायी हैं चौथे महादेव जिनकों व वीर वैष्णवनके जानवेक
पाँचवे त्रिपुरारि जो विष्णुस्वामीप्रभुके तीसरे ... विष्णुस्वामी साधु विष्णुस्वा-
मीनन जो अष्टाक्षर मन्त्र कह्योहै
कहीं ॥ ३२ ॥ विष्णुस्वामीने अपने शिष्य विष्णुकांची है क्यों के यहाँही
वे काँचीका छोडके जनार्दनकी सेवा ॥ अच्युत गोत्र है और वा आश्रम
येनन और गजानने वो धाम उन्होंयाम वेद यजुर्वेद है ॥ ४८ ॥ और
इनके ज्ञाननिधि भये ॥ ३४ ॥ और वे कमलापतिके नेत्रद्वारसों सायुज्य

अपरेषामभूत् क्षेत्रं मार्कंडेयाख्यमुत्तमम् ॥
प्रभवोऽत्र तपः सिद्धा जाताः स्वाम्नायरक्षणे ॥ ५० ॥
इंद्रद्युम्नं ततः प्राप्ताः सुखवासस्ततो ह्यसौ ॥
वटशायिहरेमूर्त्तावासक्त्यै तत्परिक्रमम् ॥ ५१ ॥
शाखागोपालगायत्र्यास्त्रिपुरारेर्गुरुक्रमात् ॥
महर्षिर्जलविंबोसावाद्यो नारायणो हरिः ॥ ५२ ॥
नंदीश्वरश्चोपदेवस्त्रिपुरारेः प्रदर्शनात् ॥
उपासितो जगन्नाथो धाम चैतत्कृतं निजम् ॥ ५३ ॥
विल्वमंगलमुख्याश्च विरक्ताश्चात्र दीक्षिताः ॥
लक्ष्म्या कृपा कृता तत्र तेन लक्ष्मीष्टदेवता ॥ ५४ ॥
जातात्र विंवला देवी वीराणां शौर्यवृद्धये ॥
कपिलासीत् कामधेनुर्भिक्षा लब्धा च पूर्त्तये ॥
आचार्यो वामदेवोऽथ पुनर्धर्मप्रवृत्तये ॥ ५५ ॥

मुक्तिकों पावते भये ॥ ४९ ॥ ओर दूसरे प्रभु विष्णुस्वामीजीको मार्कंडेय क्षेत्र भयो यहाँही वे तपस्यासों अपने सम्प्रदायकी रक्षा करवेमें सिद्ध भये ॥ ५० ॥ पीछें इन्द्रधुम्न ( जगदीशपुरी ) में सुखपूर्वक बसे ओर वटशायी भगवान्की मूर्तिके आसक्तिके लियें परिक्रमा करी ॥ ५१ ॥ ओर गोपालगायत्रीसों इनकी शाखा हे महादेवसों गुरुक्रम हें आदिनारायण हें ॥ ५२ ॥ नंदीश्वर उपदेव हें त्रिपुरारिसों सम्प्रदाय हे उपास्य देव जगन्नाथजी हें ओर येही धाम हे ॥ ५३ ॥ विल्वमंगल आदि विरक्तनकों दीक्षा दीनी वहाँ लक्ष्मीजीनें कृपा करी यासों इष्टदेवता लक्ष्मीजी हें ॥ ५४ ॥ येही वीरवैष्णवनकी शूरता बढायवेके लिये विंबला देवी होयगईं कामधेनु भिक्षापूर्तिके लिये भई धर्मप्रवृत्तिके लिये

सिंहासन गोकुलेऽथ श्रीमदाचार्यसश्रयात् ॥
श्रीनाथास्तु ततस्सेव्यास्तनुवित्तमनोर्पणे ॥ ५६ ॥
श्रीमद्गोवर्द्धनगिरौ विश्रामोवीतरागिभि ॥
विधेयोऽत्र कलौ घोरे मार्गोऽय तावदेव हि ॥ ५७ ॥
विष्णुस्वामिगुरूणां य इमामाम्नायपद्धतिम् ॥
वेवेत्ति द्वारिकामुद्रांकितोऽसौ वैष्णवाश्रमी ॥ ५८ ॥
उत्सृज्य चोदनां लोकवेदयोर्ये हरिं श्रिता ॥
वैष्णवाश्रमिणस्ते वै विष्णुव्रतपरायणा ॥ ५९ ॥
आश्रमो वैष्णवो ब्रह्महराश्रम इति त्रय ॥
तल्लिंगधारी सतत भवेत्तद्भक्तवत्सल ॥ ६० ॥
आश्रमांतरमेवैतत्रितयं भक्तिशालिनाम् ॥
पृथक् पृथग् जगादेतान्कौर्मी या ब्रह्मसहिता ॥ ६१ ॥
जनार्दने समायातान् श्रुत्वाचार्यान् स्ववैष्णवा ॥
उपधारयितुं प्राप्ता कृत्वेव च महोत्सवम ॥ ६२ ॥

आचार्य वामदेव भये ॥ ५५ ॥ पीछें श्रीगोकुलमें श्रीमदाचार्य श्रीमहाप्रभुके आश्रयसों सिंहासन भयो याहीसों सर्वत्र समर्पण करकें श्रीनाथजीकी सेवा करनी ॥ ५६ ॥ विरक्त वैष्णवनकों श्रीगिरिराजमें वास करनों घोर कलियुगमें येही एक मार्ग हे ॥ ५७ ॥ विष्णुस्वामि गुरूनकी जो या आम्नायपद्धतिकों जानें हे ओर जाके द्वारकाकी छाप हे वो वैष्णवाश्रमवारो हे ॥ ५८ ॥ ओर जिनमें लौकिक वैदिक विधिकों छोडकें हरिको आश्रय लीनो हे ओर विष्णुके व्रतनमें परायण हें वे वैष्णवाश्रमी हें ॥ ५९ ॥ वैष्णव, ब्रह्म, हर, ये तीन आश्रम हें इनके चिह्न सदा धारण करे भक्तवत्सल होय भक्तिधारेनके ये तीन तथा दूसरे आश्रम अलग अलग कूर्म ब्रह्मसंहितामें कहे हें ॥ ६० ॥ ६१ ॥ सो या जनार्दनक्षेत्रमें

तैः समादरतो नीताः प्रविष्टा हरिमंदिरम् ॥
ददृशुस्ते प्रणम्यैव तिष्ठंतं श्रीजनार्दनम् ॥ ६३ ॥
कृत्वोपढौकितं तत्र विधाय च प्रदक्षिणम् ॥
प्रणम्य दंडवद्भूमौ आह्निकार्थं बहिर्गताः ॥ ६४ ॥
पारायणं समारब्धं क्षेमंकरतरोरधः ॥
अर्चका वैष्णवाः प्राप्ताः कर्तुं विज्ञापनं ततः ॥ ६५ ॥
स्थानं श्रौतनिधेरेतत् प्रेमाकरसनाथितम् ॥
अर्चनं क्रियतामत्र गृह्यतां च निवेदितम् ॥ ६६ ॥
द्वितीयेऽह्नि तदाचार्याः कृत्वोषसि निजाह्निकम् ॥
जनार्दनार्चनं चक्रुश्चक्रुः पाकं मनोहरम् ॥ ६७ ॥
अपूपा मोदकाः क्षीरौदनं सूपं तथौदनम् ॥
विधाय विविधं पाकं रहस्येव समर्पयन् ॥ ६८ ॥
तत्तीर्थं तत्प्रसादान्नं धृत्वा पाकगृहे निजे ॥
हरेर्नीराजनं चक्रुर्दत्त्वाचमनवीटके ॥ ६९ ॥

पधारे आपकों सुनकें अपने वैष्णव बडे उत्सवके संग पधरायवेकों आये ओर आदरसों पधराये आप हरिमंदिरमें पधारकें ठाडे भये श्रीजनार्दनके दर्शन कर भेट धर प्रदक्षिणा करी दंडवत् प्रणाम करकें आह्निकके लियें बाहेर आये ॥ ६२॥ ६३॥ ६४॥ सो क्षेमंकर वृक्षके तलें पारायणको प्रारम्भ कियो पीछें वहाँके सेवक प्रार्थना करवेकों आये ॥६५॥ ओर कह्यो के, ये श्रौत निधिको स्थान हे प्रेमाकरनें याको ऐश्वर्य बढायो हे आप सेवा करिये महाप्रसाद लीजिये तब दूसरे दिन श्रीमदाचार्यजी प्रातःकाल अपनो आह्निक करकें जनार्दनकी सेवा कीनी ओर बडो सुंदर पाक कियो॥ ६६ ॥ ६७॥ वामें पूवा लड्डुआ खीर दाल भात ओर अनेक प्रकारकी सामग्री करकें एकान्तमें अर्पण कियो ॥ ६८ ॥ ओर तीर्थ प्रसाद अपने पाका पें धरकें आर-

शेषाह्निकं तत कृत्वा कृत्वा होम यथाविधि ॥
किंचित्पारायण कृत्वा जक्षुस्तीर्थं निवेदितम् ॥ ७० ॥
तस्थुर्दिनाष्टक तत्र चक्रु शिष्यान्समर्चकान् ॥
अन्यांश्च शरणप्राप्तान् ददौ ज्ञानमनुत्तमम् ॥ ७१ ॥
तत प्रचलिता याता देवं नारायण प्रति ॥
देव नारायण दृष्ट्वा कृत्वार्चां चलितास्तत ॥ ७२ ॥
जगन्नारायण प्राप्ता स्थित्वा कृत्वा महोत्सवम् ॥
मलयाद्रिं चारुरुहुस्तापसै समुपासितम् ॥ ७३ ॥
अगस्त्यस्याश्रमो यत्र पष्ठस्कंधे समीरित ॥
स हरिर्हिमगोपाल पदर्चायां मुनि स्थित ॥ ७४ ॥
अजामिलाख्यानवर व्याचख्यौ वैष्णवप्रियम् ॥
ददृशुर्हिमगोपालमाचार्या सह वैष्णवै ॥ ७५ ॥
नत्वोपढौकित कृत्वा स्नात्वानर्चुर्यथाविधि ॥
व्रजेशस्याऽपरा मूर्ति पीतदासानल प्रभु ॥ ७६ ॥

मन करायकें बीडी देके आरती करी ॥ ६९ ॥ पीछें बाकीको आह्निक होम करकें पारायण करकें तीर्थ ओर महाप्रसाद लीनो ॥ ७० ॥ ओर आठ दिन विराजे वहाँके सेवकनको ओर शरणमें आये भयेनकों शिष्य करकें उत्तम ज्ञान दीनो ॥७१ ॥ पीछें देवनारायणकों पधारे सो वहाँ दर्शन सेवा करकें चले॥७२॥सो जगन्नारायणमे आये वहाँ बडो उत्सव करकें वास करकें तपस्वी जहाँ रहते हे एसे मलयाचलपे चढे जहाँ श्रीमद्भागतके षष्ठस्कं-धमें कह्यो भयो अगस्त्यऋषिको आश्रम हे ॥ ७३॥ ७४ ॥ वही हिमगो-पालहरि हें जिनकी चरणकमलकी सेवामें मुनि वहाँ ठाडे हें वहाँ वैष्णवनके प्रिय अजामिलके आख्यानको व्याख्यान कियो ओर श्रीमदाचार्यजी वैष्ण-वनके संग दर्शन भेट करकें आप स्नान करकें यथाविधि सेवा करते भये दावा

संप्राप्तोऽमुं गिरिवरं यं प्रावृट् सेवते सदा ॥
हिमर्तुर्यत्र वसति यत्र चंदनपादपाः ॥ ७७ ॥
नीलाद्रेर्मलयाद्रेश्च द्रोण्यां सा कौंडिनी सरित् ॥
कौंडिन्यस्याश्रमं तत्र नीवृत्तदतिदुर्गमम् ॥ ७८ ॥
श्रीविष्णुस्वामिगुरुभिर्विरहानुभवः कृतः ॥
कौंडिन्याल्लब्धविज्ञानैर्हरिर्दृष्टश्चराचरैः ॥ ७९ ॥
तया दृष्ट्या च ते याता व्यापिवैकुंठमुत्तमम् ॥
तत्र पारायणं चक्रुराचार्या हरिमर्चयन् ॥ ८० ॥
कौंडिन्याख्यो मुनिस्तत्र दर्शनं व्यतरत्स्वयम् ॥
प्रणम्य पृष्टश्चाचार्यैर्वृत्तमाह निजं मुनिः ॥ ८१ ॥
शांडिल्यो गुरुरस्माकं तेपे गोवर्द्धने गिरौ ॥
द्रष्टुकामो हरेर्लीलां भक्त्या परमयोज्वलः ॥ ८२ ॥

नलकों पान करवेवारी व्रजेश श्रीनाथजीकी दूसरी मूर्ति जहाँ पर्वतपे विराजमान हे जाकों वर्षाऋतु सदा सेवा करे हे जहाँ हिमऋतु रहे हे जहाँ चंदनके वृक्ष हें ॥ ७५ ॥ ७६ ॥ ७७ ॥ जहाँ नीलाद्रि ओर मलयाद्रि इन दोनोनके बीचमें कौंडिनी नदी हे कौडिन्यको आश्रम हे बडो कठिन मार्ग हे ॥ ७८ ॥ श्रीविष्णुस्वामी गुरुनें जहाँ विरहको अनुभव कियो हो ओर कौंडिन्यसों विज्ञान पायकें श्रीहरिके साक्षात् जहाँ दर्शन किये हे ॥ ७९ ॥ ओर उनकी दृष्टिसों उत्तम वैकुंठकों गये वहाँ हरिकी सेवा करते श्रीमदाचार्यजीनें पारायण कियो तब कौंडिन्य ऋषि आप आयकें दर्शन दीनें श्रीमदाचार्यनें दर्शन कियो ओर प्रणाम कियो तब मुनिनें अपनो वृत्तान्त कह्यो ॥ ८० ॥ ८१ ॥ के हमारे शांडिल्य गुरू हें उननें गोवर्धनपर्वतमें हरिकी लीलानके देखवेकी इच्छासों बडी भक्तिसों तपस्या करी तब

तस्मै श्रीललिता देवी मुनिकन्या तपोमयी ॥
अनुज्ञया हरेरेत्य भक्तिज्ञानं ददौ प्रभो ॥ ८३ ॥
ददौ पचाक्षर मत्रं मालां तुलसिसभवाम् ॥
पण्मुद्रातिलक चास्मै प्राह भूयो हरिप्रिया ॥ ८४ ॥
रसात्मक श्रीपुरुपोत्तम कश्चित्परात्पर ॥
यतो नास्ति पर कश्चिद्वेदा देवा न यं विदु ॥ ८५ ॥
तस्याश्रयो दृढ कार्यस्त्याज्यश्चान्याश्रयो ह्यत् ॥
लीलाया भावन कार्यं प्रतिक्षणमतद्रिणा ॥ ८६ ॥
दासोऽहं श्रीहरेरेव हरिरेव मम प्रभुः ॥
किं लौकिकैर्वैदिकैश्च साधनीय हि साधनै ॥ ८७ ॥
किं भुक्त्या भवदु खास्या किं मुक्त्या स्वप्नकल्पया ॥
किं देहेन च गेहेन यत्र लीला न दृश्यते ॥ ८८ ॥
कदा मिलिष्यति हरि कदाऽसौ कृपयिष्यति ॥
कोटिकदर्पदर्पघ्न कदाऽऽस्य दर्शयिष्यति ॥ ८९ ॥

उनकों तपोमूर्ति मुनिकन्या श्रीललितादेवी भगवान्‌की आज्ञासों भक्तिज्ञान देती भई ॥ ८२ ॥ ८३ ॥ पचाक्षर मन्त्र दीनो और तुलसीकी माला दीनी और पट् मुद्रा तिलककी विधि कही ॥ ८४ ॥ और रसात्मक श्रीपुरुषोत्तम हैं जिनसों पर दूसरो कोई नहीं हे जिनको वेद और देवताभी नहीं जाने हें ॥ ८५ ॥ उनको आश्रय दृढ करना अन्याश्रयकों छोडना प्रतिक्षण आलस्यको छोडके लीलाकी भावना करनी ॥ ८६ ॥ मे हरिहीको दास हूं हरिही मेरे प्रभु हें लौकिक और वैदिक साधननकरके कहा हे ॥ ८७ ॥ ससारके दु ख देवेवारे भोगनसों कहा हे और स्वप्नके समान मुक्तिसोंभी कहा हे देह और घर करके भी कहा हे जो लीला न दीस पडे ॥ ८८ ॥ कब हरि मिलेंगे कब कृपा करेंगे कोटिकंदर्पके अहकारका

इत्थं विरहभावेन जगत्पश्यँस्तदात्मकम् ॥
द्रष्टासि हरिलीलाया अत्रैव च महामुने ॥ ९० ॥
आचार्यो भक्तिशास्त्राणामस्याम्नायस्य देशिकः ॥
द्रष्टासि हरिलीलाया भावेऽस्मिन् भविता भवान् ॥ ९१ ॥
इत्युक्त्वांतर्हिता कन्या धन्या श्रीपतिवल्लभा ॥
केन पुण्येन लेभेऽसौ हरिर्यस्यावशंवदः ॥ ९२ ॥
उपदिष्टस्तदाम्नायो भवते तत्स्वरूपिणे ॥
नातः परतरो लाभो वैष्णवानां मते मतः ॥ ९३ ॥
ततस्तु श्रीमदाचार्याः फलपुष्पोपढौकितम् ॥
कृत्वैव संस्तवं चक्रुः प्रेमोद्धर्षप्रधर्षिताः ॥ ९४ ॥
धन्यौ शांडिल्यकौंडिन्यौ धन्या सा हरिवल्लभा ॥
धन्येयं श्रीपतेर्भक्तिः पुण्येभ्यो वो नमोनमः ॥ ९५ ॥
तत्राऽतः श्रीमदाचार्यस्नानांबुप्रसृतानिलः ॥
भुजंगादिमहाक्रूरजंतूनां मोक्षदोऽभवत् ॥ ९६ ॥

नाश करवेवारे अपने श्रीमुखके कब दर्शन देंगे ॥ ८९ ॥ या प्रकार विरह करकें जगतको हरिरूप देखते, हे महामुने! यहाँही हरिलीला देखोगे ॥ ९० ॥ या सम्प्रदायके ओर भक्तिशास्त्रके आचार्य होवोगे ओर हरिलीला देखोगे ॥ ९१ ॥ ये कहकें भगवान्की प्यारी धन्य वो कन्या अन्तर्धान होयगई जा पुण्यसों हरिको पायो ओर हरि जासों वश्य भये ॥ ९२ ॥ वो सम्प्रदाय आपकों उपदेश कियो वैष्णवनके मतमें यासों बढके दूसरो लाभ नहीं हे ॥ ९३ ॥ तब श्रीमदाचार्य फल पुष्प भेट धरकें प्रेमसों प्रसन्न होयकें स्तुति करवेलगे ॥ ९४ ॥ जो शांडिल्य कौंडिन्य धन्य हें वे हरिवल्लभा गोपी धन्य हें ये भगवान्की भक्ति धन्य हे ओर पुण्यात्मा आपसबनकों वारं वार नमस्कार हे ॥ ९५ ॥ ओर वहाँ श्रीमदाचार्यके स्नानके जलसों मिले भये पवननें महाक्रूर सर्पादिक जीवनको मोक्ष कियो ॥ ९६ ॥

तत्रायातास्तप सिद्धा वृद्धा वृद्धनिषेवका ॥
आचार्याणां दर्शनार्थं स्थिता योगप्रभावत ॥ ९७ ॥
कृत्वैव दर्शनं तेषां स्पृष्ट्वैव चरणांबुजम् ॥
गता वैकुंठभवन शंखघटाजयस्वनैः ॥ ९८ ॥
तत श्रीहिमगोपालं नत्वा कृत्वा प्रदक्षिणम् ॥
सशिष्या मलयात्तस्मादवतीर्णा महागिरे ॥
केरला पश्चिमे यस्य यस्य कर्णाटकं पुर ॥ ९९ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थे
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे ॥
प्रस्थानेऽस्मिंस्तृतीये समजनि पटहस्सप्तमोऽय जयाख्ये १००

---

वहाँ तपस्वी वृद्ध सिद्ध योगके प्रभावसों श्रीमदाचार्यजीके दर्शन करवेक लिये आये हे सो दर्शन करकें चरणस्पर्श करकें शंखघटाके जयशब्दके सम वैकुंठकों गये ॥ ९७ ॥ ९८ ॥ पीछें श्रीमदाचार्यजी हिमगोपालकी दंडवत परिक्रमा कर्कें शिष्यनके सग या बडे पर्वत मलयाचलसों उतरे जाके पश्चिमदिशामें केरलदेश हे ओर पूर्व दिशामें कर्णाटक हे ॥ ९९ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीगोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यास विष्णुस्वामीके मतके ग्रन्थनके अनुकूल हरिभक्तनके सुखकों देवेवारे या दिग्विजयग्रन्थके तीसरे प्रस्थानमें ये सातवों पटह समाप्त भयो ॥ १०० ॥

---

आयाता मध्यश्रीरंगं कावेरीद्वीपमुत्तमम् ॥
दर्शनं वंदनं कृत्वांतरंगं प्रत्युपस्थिताः ॥ १ ॥
मार्गेऽत्र माहिषपुरं तत्र भूपो महेश्वरः ॥
यत्रासीद्भूपतिः पूर्वं शाकेन्द्रः शालिवाहनः ॥ २ ॥
तद्वंशेऽयं महीपालः कर्णाटकधरेश्वरः ॥
शुश्रावाचार्यगमनं पुरोधसमुखादयम् ॥ ३ ॥
श्रुतपूर्वयशोराशिराचार्याणां क्षमेश्वरः ॥
समागतः समानेतुं सर्वाभी राजभूतिभिः ॥ ४ ॥
पुत्रपौत्रकलत्रार्थसामंतामात्यसैन्यकैः ॥
साष्टांगं प्रणिपत्यासौ विज्ञापनमथाचरत् ॥ ५ ॥
पावनाय गृहेऽस्माकं श्रीमद्भिरुपधार्यताम् ॥
उन्नीयतां पुरं वंशं दुरितं दूर्यतां दृशः ॥ ६ ॥
तीर्थीकर्तुं हि तीर्थानां तीर्थानां वोऽटनं भुवि ॥
भवादृशा महात्मानो गुरवो दीनवत्सलाः ॥ ७ ॥

ओर कावेरीनदीके द्वीपमें स्थित मध्यश्रीरंगमें आये उनके दर्शन वंदन करकें आगे चले सो मार्गमें माहिषपुर ( महसूर ) आये जहाँको राजा महेश्वर हो ओर पहले जहाँ शाकेन्द्र शालिवाहन भये हे ॥ १ ॥ २ ॥ उनके वंशमें उत्पन्न कर्णाटकदेशको राजा ये महेश्वर पुरोहितके मुखसों श्रीमदाचार्यजीको आगमन सुनकें ओर प्रथमवी जिनको यश सुन्यो हो एसे श्रीमदाचार्यजीको लेवेकों सब राजविभूतीन करकें सहित ओर पुत्र पौत्र स्त्रीगण राजकीय पुरुष अत्मीय सेना इनके सहित गयो ओर साष्टांग प्रणाम करकें प्रार्थना करी ॥ ३ ॥ ४ ॥ ५ ॥ जो हमारे घरकों पवित्र करवेके लियें आप पधारे हमारे वंशको पुरको उद्धार कर पापनको दूर करें ॥ ६ ॥ आपको तीर्थाटन करनो तीर्थनके पवित्र करवेके लिये

देवानां चरितं लोके दुःखाय च सुखाय च ॥
महात्मनां सुखायैव चरितं प्रायशो नृणाम् ॥ ८ ॥
वृहद्व्रतधर साक्षात्कुमारो वामनोऽनल ॥
येन पुंभारतीमूर्त्यां विदां वर्गो बकीकृत ॥ ९ ॥
वयं नृपतयो मत्ता राजसा भोगलंपटा ॥
प्रायोविशां दु सदा हि रक्षणे वाप्युपेक्षणे ॥ १० ॥
एवंविधैर्निंद्यवृत्तै प्रायो नरकहेतुभि ॥
रजसोन्मत्तदृष्टीनां साधूनां दर्शनं क न ॥ ११ ॥
तस्मान्न पावनार्थाय सुरर्षिपितृतुष्टये ॥
कृत्वा प्रसादं प्रासादं गुरव प्रचलतु न ॥ १२ ॥
इत्थं प्रार्थनया राज्ञ आचार्या प्रस्थितास्तत ॥
निजशिष्यै सशिष्याणां सैन्येनापि विरागिणाम् ॥ १३ ॥
पद्भ्यां चेरुस्तदाचार्या राजाद्याश्च तथाऽभवन् ॥
पादुकाऽऽचार्यवर्याणां शिबिकायां निवेशिता ॥ १४ ॥

हे देवतानको चरित्र लोकमें सुखके लिये और दुःखके लियेभी होय हैं परन्तु महात्मानको तो सुखहीके लियें होय हे ॥ ७ ॥ ८ ॥ बडे व्रतके धारण करवेवारे साक्षात् वामनरूप अग्निके अवतार आप हैं जिन पुरुष रूप सरस्वतीनें विद्वाननकों बकके जेसे मौन कर दीने ॥ ९ ॥ हम राजा हें रजोगुणी हें मदांध हें भोगमें लपट हें प्राय प्रजाको दुःखही देवेवारे हें ॥ १० ॥ नरकके हेतु एसे निन्दित आचरण कर वेवारे रजसों उन्मत्त हमारे जसेनकों आपके दर्शन कहाँ ॥ ११ ॥ यासों मोकों पावन करवेके लियें ओर देव ऋषि पितर इनके प्रसन्न ताके लियें मेरे स्थानकों पवित्र करकें पीछें पधारें ॥ १२ ॥ एसी राजाकी विनतीसें आपने शिष्य ओर विरागीनकी सेनासहित वहाँसो पधारे ॥ १३ ॥ सो पाँवनसों चलत भये ओर राजा आदिभी वसेही पीछें २ चले

नीतास्ताश्चाग्रतो राज्ञां छत्रचामरभूतिभिः ॥
विचित्रवाद्यवृंदेन गजाश्वरथकुंजरैः ॥ १५ ॥
शुशुभे ध्वजिनी राज्ञः पताकाध्वजमंडिता ॥
पृतनायां विरक्तानां वीरा वेशैः कपीशताम् ॥ १६ ॥
कलयंतः शुशुभिरे खेलंतो वीरवर्त्मभिः ॥
चक्रैर्गदाभिः खड्गैश्च केचित्पट्टासिचर्मभिः ॥ १७ ॥
वह्निबाणैर्मल्लयुद्धैः कूर्दनैः शंखवादनैः ॥
महीपस्य वरूथिन्यां राजद्राजततोमरैः ॥ १८ ॥
वर्मचर्मास्त्रशस्त्राणां मंडनानां मरीचिभिः ॥
करीन्द्राणां कुथैर्हैमैर्भूषणैः शृंखलोच्चयैः ॥ १९ ॥
हयानां पाखरै रौक्मैरथानां च परिच्छदैः ॥
तुरंगैरपि मातंगैर्भटाःक्रीडंति तत्र ते ॥ २० ॥
गोमुखान् वादयंत्युच्चैः करवालैस्तु चर्मभिः ॥
नृत्यद्वारांगनं सैन्यं प्रविष्टं नगराजिरे ॥ २१ ॥

ओर श्रीमदाचार्यजीकी पादुकानकों पालकीमें पधरायकें ॥ १४ ॥ ओर राजविभूति छत्र चामर आदिसों विचित्र बाजे गाजेसों हाथी घोडा रथ आदिसों आगे ले चले ॥ १५ ॥ पताका ध्वजा आदिसों राजाकी सेना शोभती भई ओर विरक्तनकी सेनामें हनूमानके रूपकों धारण किये वीर मार्गमें चक्र गदा खड्ग ढालसों खेलते कूदते मल्लयुद्ध करते शंख आदि बजाते शोभते भये ॥ १६ ॥ १७ ॥ ओर राजाकी सेना चाँदीके तोमरनकरकें ढाल तलवार आदि शस्त्रनकी चमचमाहटसों हाथीनके झूलनकी तथा आभूषणनकी किरणनकरकें बडी जँजीरनकरकें सुवर्णके रथन करकें घोडा ओर हाँथीन करकें शोभ रही हे जामें योद्धालोग खेल रहें हें ॥ १८ ॥ ॥ १९ ॥ २० ॥ गोमुख आदि बाजानकों ऊँचेस्वरसों बजावे हें एसी उन

शुशुभाते च ते सेने तत्र राघवयोरिव ॥
समेतयोर्व्रतं कृत्वाऽलंकापुरुषविद्विषो ॥ २२ ॥
समागता नरानार्यो द्रष्टुं तदतिकौतुकम् ॥
गुरूणां दर्शनं कृत्वा ववृषु सुमनोभरैः ॥ २३ ॥
बलिं चोपबलिं चक्रुः प्रणेमुर्मंगलं जगुः ॥
आयाता राजसौधेऽथ वरास्तरणवर्त्मना ॥ २४ ॥
निवेशिता वरे पीठे सर्वे तत्र ववन्दिरे ॥
राजा राजपुरोधाश्च धर्मान् श्रोतुं मनो दधत् ॥ २५ ॥
तदाहुः श्रीमदाचार्यो ज्ञात्वा बुद्धिगतं तयोः ॥
कर्तव्यं यन्महीपाल महीपानां शृणुष्व तत् ॥ २६ ॥
दत्तं राज्यं भगवता प्रजानां पालनाय मे ॥
प्रजानां किंकरश्चास्मि सर्वेस्मो हरिकिंकराः ॥ २७ ॥
राज श्चिंतय चित्तेन मध्ये रात्रेर्दिनस्य वा ॥
कोऽहं कस्मात्समायातः किं कार्यं मे करोमि किम् ॥ २८ ॥

सेनाननें शहरमें प्रवेश कियो ॥ २१ ॥ नीचपुरुष अथवा लंकाकों जीवर्के लिये जिननें मानो व्रत लियो हे ऐसी वे दोनोंसेना श्रीरामचन्द्रजी और श्रीभरथजीकी जेसी मिलके शोभा देती भई ॥ २२ ॥ या आनन्दकों देखवेके लियें आये भये स्त्री पुरुष गुरुनके दर्शन करकें पुष्पनकी वृष्टि करते भये॥ २३ ॥ ओर भेट करकें प्रणाम करकें मंगल गान करते भये श्रीमदाचार्यजी अच्छे वस्त्रनसों बिछे भये मार्गमें राजमहलमें पधारे सो आपकों वहाँ सिंहासनपें विराजमान करायकें सबननें प्रणाम कियो ओर राजा तथा पुरोहितनें धर्म्मके सुनवेको मन कियो॥ २४ ॥ २५ ॥ तब श्रीमदाचार्यजीनें उनके मनकी पहिचानकें आज्ञा करी जो राजानको कर्तव्य सुनो॥ २६ ॥ प्रजाके रक्षा करवेके लिये भगवान्नें मोकों राज्य दियो हे सो में प्रजाको किंकर हूँ ओर हम सब भगवानके किंकर हैं ॥ २७ ॥ हे राजन् दिनरात चित्तसों ये विचारो के

दासोऽहं श्रीपतेरेव तदाज्ञातः समागतः ॥
तदाज्ञा मे प्रकर्तव्या करोमि विषये मतिम् ॥ २९ ॥
त्रिवर्गार्थीति यो राजा धर्मशास्त्रमतेन सः ॥
विद्भिः सद्भिर्वीतरागोऽद्वेषैस्तेन महात्मना ॥ ३० ॥
कृत्वा वशे निजात्मानं विद्यापौरुषशालिनम् ॥
वर्तितव्यं सदा लोकहितायाम्नायवर्त्मना ॥ ३१ ॥
सेनाऽमात्यपुरोधाश्च शुद्धांतःपुरचारिणः ॥
कुमारा भ्रातरः कुल्याः सामंताश्च प्रजा निजाः ॥ ३२ ॥
अपेतदुःखा वशगाः कर्तव्या न्यायचारिणा ॥
कर्म चाष्टविधं राज्ञां पंचवर्गं च तत्कृतम् ॥ ३३ ॥
द्वादश प्रकृतिः सर्वा अष्टादशपदं नयम्॥
अनुरागापरागौ च प्रचारं मंडलस्य च ॥ ३४ ॥
प्रचारं मध्यमानां च चेष्टितं विजिगीषिताम् ॥
शत्रूणां चेष्टितं चापि तथोदासीनभूभृताम् ॥ ३५ ॥

में कौन हूँ कहाँसो आयो कहा करनोहे कहा करूँ हूँ॥ २८॥ में भगवान्हीको दास हूँ उन्हीकी आज्ञासों आयो हूँ उनकीही आज्ञा करनी चहिये सो विषयमें बुद्धि करूं हूँ ॥ २९ ॥ त्रिवर्ग ( धर्म अर्थ काम ) इनकी इच्छा करवेवारो राजा धर्मशास्त्रके मतसों सज्जन विद्वाननकी सलाहसों राज्यकार्य करे ओर द्वेष राग छोंडकें अपने आत्माको वश करकें विद्वान् ओर पुरुषार्थी बने सदा प्रजाके हितके लिये चेष्टा करे ॥ ३० ॥ ३१ ॥ सेना मन्त्री पुरोहित रनवासमें जायवेवारे भाई बेटा अपने कुलके योद्धा प्रजा इनकों सुखी राखे ओर नीतिसों अपने वश करे ॥ ३२ ॥ राजानको आठ प्रकारको कर्म हे नीतिके पाँच वर्ग हें बारह प्रकृति हें अठारह स्थान हें अनुराग ( प्रीति ) अपराग ( उदासीन ) मंडलको प्रचार जीतवेवारे शत्रुनको व्यापार तथा उदासीन राजानको ये सब देखे पीछें कोई काममें प्रवृत्त होय

इत्यादि सर्व सपश्येदारभेत प्रवृत्तये ॥
वृद्धये यतमान स्यात्प्रजानां च समृद्धये ॥ ३६ ॥
तत्र लब्धेन वित्तेन कोश सपूरयेन्नृप ॥
आयात्पादोन एवाऽस्य व्यय कार्यो मनीषिणा ॥ ३७ ॥
चतुर्धा विभजेद्वित्त त्रिवर्गस्य प्रवृत्तये ॥
धर्माय चैकं कोशाय भोगाय स्वजनाय च ॥ ३८ ॥
राज्ञा त्रिवर्गो विहितो धर्मशास्त्रेषु यद्यपि ॥
तथापि चापवर्गार्थे यतितव्य महात्मभि ॥ ३९ ॥
जनकादेस्तथा वृत्त श्रूयते वेदलोकयो ॥
विज्ञातायुस्तथा तेषां वार्धक्येऽर्होपि सा गति ॥ ४० ॥
अनिश्चितायुषामद्य सद्योऽनुष्ठानमुत्तमम् ॥
धर्मार्थकाममोक्षाणां प्रजानां च महीभृताम् ॥ ४१ ॥
यो यस्मिन् वर्तते मार्गे स तस्मिन्नेव संस्थितः ॥
धर्मे धर्मोपवर्गों च साधयेद्दृढमात्मन ॥ ४२ ॥

प्रजाकी वृद्धिके लियें यत्न करे वाम मिले भये द्रव्यसों कोश बढावे और आमदनीमिसो चौथे हिस्साको छोडके खर्च करे ॥ ३३ ॥ ३४ ॥ ३५ ॥ ॥ ३६ ॥ ३७ ॥ धनके चार विभाग करे एक धर्मके लियें एक खजानाके लियें एक भोगके लियें एक कुटुम्बिनके लिये ॥ ३८ ॥ धर्मशास्त्रमें राजानको त्रिवर्ग कह्यो हे तोवी मोक्षके लियें महात्मानके संग यत्न करनो चाहिये ॥ ३९ ॥ लोक और वेदमें जनकादिकनको वृत्तान्त सुनें हें जोवे अपने आयुष्यकों जानते हे वृद्धावस्थामें उनकी योग्य गति होती ही॥४०॥ ओर आजकलके मनुष्यनकी आयुष्यको निश्चय नहीं हे यासों जलदी अनुष्ठान करनो उत्तम हे अर्थात् राजा प्रजा सबनो अपने २ धर्म अर्थ काम मोक्षके उपाय करें ॥ ४१ ॥ जो आ मार्गमें होय वाहीमें रहके

अथवा सर्वधर्माणां कलौ श्रीहरिसेवनम् ॥
सुशक्यश्चापवर्ग्यश्च सेव्यः शिष्टैर्निषेवितः ॥ ४३ ॥
संस्कारान्विहितान्कृत्वा भृत्वाग्नीनाह्निकं चरन् ॥
वैराग्यसांख्ययोगैश्च सिद्धो भक्त्यार्चयेद्धरिम् ॥ ४४ ॥
मार्गोयं सुसमीचीनोयथाशक्ति समाचरेत् ॥
अशक्ता ये द्विजा ये वा शूद्रा व्यंगाः स्त्रियोर्भकाः ॥ ४५ ॥
कुर्वंतः सिद्धिमायांति कीर्तयंतो मधुद्विषं ॥
इत्थं श्रीगुरुवाक्यानि शृण्वंतस्ते सभासदः ॥ ४६ ॥
साधु साधु समूचुस्ते बहवः शिष्यतां गताः ॥
सुवर्णानां शतं राज्ञा कृतं तत्रोपढौकितम् ॥ ४७ ॥
हारमुक्ताफलानां च ह्यातपत्रं सितं महत् ॥
दामोदरस्तदा प्राह ह्याचार्यास्तीर्थयात्रकाः ॥ ४८ ॥
न धारयंति रत्नानि न चैते द्रविणार्थिनः ॥
शिष्यैः प्रदत्तमेकाहधान्यं वस्त्रं भजंति हि ॥ ४९ ॥

अपने धर्म मोक्षको साधन करे ॥ ४२ ॥ अथवा कलियुगमें सब धर्मनके बीच हरिकी सेवा उत्तम मोक्षकी देवेवारी होयसके एसी हे ओर शिष्ट याहीकों करें हें ॥४३॥ तासों विहित संस्कारनकों करकें अग्निहोत्र धारण कर आह्निककों करते वैराग्य सांख्ययोगसों सिद्ध होयकें भक्तिसों हरिकी सेवा करे ॥ ४४ ॥ ये मार्ग बडो उत्तम हे याकों यथाशक्ति आचरण करे जो ब्राह्मण आदि ओर स्त्री बालक अंगरहित होंय अशक्त होंय वेबी भगवानूको कीर्तन करते सिद्धिकों पावें हें या प्रकार श्रीमदाचार्यजीके वचननकों सुनते सभासदननें कही जो बहुत ठीक२ये कहकें शिष्य भये ओर राजानें बहोत सुवर्ण भेट कियो ओर मोतीको हार सुपेद बडो छत्र इत्यादि भेट किये तब दामोदरनें कही जो श्रीमदाचार्यजी तीर्थयात्रामें हें रतनकों धारण नहीं

विप्रेभ्यो दीयतां वित्त क्रियतां वेश्वरार्पणम् ॥
तत पुरोहितश्चाह शिष्योऽहं भवत प्रभो ॥ ५० ॥
जातो विद्यापुरे किं भो दीनो विस्मर्यते कथम् ॥
मया निवेदित चैतद्विप्रेभ्योऽन्यत्प्रदीयते ॥ ५१ ॥
शिष्यता भजते भूपो हारोऽय हरयेऽर्प्यताम् ॥
इत्युक्त्वा शिष्यतां यातो द्रविण च समर्पितम् ॥ ५२ ॥
शिष्येभ्यश्चापि विप्रेभ्योगुरुभ्योऽन्यत्समर्पित ॥
यापिता गुरवस्तस्माद्बहुमानपुर सरम् ॥ ५३ ॥
आनीतया सपदेव गता श्रीरंगपट्टनम् ॥
तृतीय रगनाथ त समीक्ष्य गुरवस्तत ॥ ५४ ॥
कावेरीं परितोऽपश्यन् स्नात्वा चक्रुस्तथाह्निकम् ॥
यादवाद्रिमुपायाता महिलाकोटसत्पुरम् ॥ ५५ ॥

करेहैं न द्रव्यार्थी हैं शिष्यनको दीनो भयो धान्य वस्त्र एक दिन ग्रहण करे हैं ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ये द्रव्य ब्राह्मणनकों देवो अथवा ईश्वरके अर्पण करो तब राजपुरोहितने कही जो मैं आपको शिष्य हूँ ॥ ५० ॥ विद्यानगरमें भयो हो या दीनकों कैसें भूलो हो ये मैंने निवेदन कियो हे ब्राह्मणनकों ओर देऊं हूँ ॥ ५१ ॥ राजा शिष्य होय हे ये हार भगवानकों अर्पण करिये तब राजा शिष्य होयकें ओरभी बहोत द्रव्य भेट कियो ओर शिष्य ब्राह्मणनकोंभी द्रव्य दीनो ओर बडे मानसों श्रीमदाचार्यजीकों अपने यहाँसों विदा किये ॥ ५२ ॥ ५३ ॥ सो आये भये मार्गहीसों श्रीरंगपट्टनकों पधारे वहाँ तीसरे रंगनाथकों देखकें चारों आडी कावेरीकों देखते स्नान करकें आन्हिक कियो ओर वहाँसों यादवाद्रिके ऊपर महिलाकोट नामक नगरमें आये ॥ ५४ ॥ ५५ ॥ जहाँ

गरुडेन समानीता सिता मृत्स्ना विकुंठगा ॥
अवनौ यत्र विनिक्षिप्ता तिलकद्रव्यतां गता ॥ ५६ ॥
श्रीसंप्रदायिनो यत्र नृसिंहार्यत्रिदंडिनः ॥
रामानंदोप्यभूच्छिष्यो रामभक्तिपरायणः ॥ ५७ ॥
स द्राविडो द्विजेन्द्रोभूद्विरक्तो जन्मनैव हि ॥
पितृभ्यां कृतसंस्कारो वाराणस्यामितोऽवसत् ॥ ५८ ॥
हरिं सदा स्मरंश्चित्ते नृत्यं चक्रे ततोमहत् ॥
प्रभोरनुग्रहात्सिद्धो विरक्तः पूज्यतां गतः ॥ ५९ ॥
नृसिंहार्यप्रसादेन स नृसिंहं स्म पश्यति ॥
तस्य शिष्यास्सम अवन् पीपाद्या वैजगन्नुताः ॥ ६० ॥
येन धर्मस्य रक्षार्थं विरक्तानां बले बले ॥
विधाय सौहृदं रीति जैतुमन्या प्रवर्तिता ॥ ६१ ॥
लघवोपि पृथग्भूतजीयंते चारयः कथम् ॥
समेतैराशु जीयंते प्रबलाहि द्विषद्गणाः ॥ ६२ ॥

गरुडजीनें वैकुंठकी सुपेद अच्छी मृत्तिका लायकें खानमें पटकी ही सो तिलक करवेकी वस्तु होयगई ॥ ५६ ॥ जहाँ श्रीसम्प्रदायी नृसिंहाचार्य त्रिदंडीके रामभक्तिमें तत्पर रामानन्द शिष्य भये ॥ ५७ ॥ वे द्राविड ब्राह्मण हे जन्महीसों विरक्त भये ओर मातापिताके संस्कार किये पीछें यहाँसों काशीजीमें वास कियो ॥ ५८ ॥ सदा हरिकों चित्तमें स्मरण करते बडो नृत्य करते प्रभुकी कृपासों सिद्ध ओर पूज्य भये ॥ ५९ ॥ नृसिंहाचार्य अपने गुरुकी प्रसन्नतासों वे श्रीनृसिंहजीके दर्शन करते हे उनके शिष्य जगत् जिनकों नमस्कार करतो एसे पीपा आदि भये ॥ ६० ॥ जिननें धर्मकी रक्षाके लियें विरक्त वैष्णवनकी सेनामें मित्रता करकें जीतवेके लियें दूसरी सेना बनाई ॥ ६१ ॥ ओर कह्यो के ये तुच्छवी शत्रु अलग २

एवं विचार्य चित्तेऽसौ सगीकृत्य विरागिण ॥
आश्रावयत् पूर्ववृत्त धर्मरक्षाकृते कृतम् ॥ ६३ ॥
विष्णुस्वामिप्रभु पूर्वमाचार्योऽजनि दक्षिणे ॥
कर्णाटकद्विजेंद्रोऽसौ त्रिदडी वैष्णवाग्रणी ॥ ६४ ॥
पाषंडिना लिंगभृतां दडिनां पृतना पुरा ॥
विष्णुधर्मविनाशिन्यो बभ्रमुर्दु खदा सताम् ॥ ६५ ॥
तिलकस्रग्विभेदिन्यश्छेदिन्योऽर्चाविधेर्हरे ॥
दु खस्यातिशय दृष्ट्वाऽसौ निष्पन्नाकृतिं गत ॥ ६६ ॥
विष्णुस्वामिप्रभुश्चित्ते चिंतयेतदचिन्तयत ॥
तिष्याब्धिर्वृद्धकल्लोर्लिंगयादोगणाकुल ॥ ६७ ॥
अत्येति वेलां मर्यादां मज्जयन् सद्गिरो गिरीन् ॥
कथं निवार्यते सोऽय दुर्निवार्यो धियाप्ययम् ॥ ६८ ॥

रहवेसा केसे जीते जायेंगे मिलकरके प्रबलवी शत्रुगण जीत्यो जायगो ॥ ६२ ॥ ये चित्तमें विचारके वैरागीनकों जमाकर धर्मरक्षाके लियें कियो भयो पहेलो वृत्तान्त सुनायो ॥ ६३ ॥ के प्रभु विष्णुस्वामी आचार्य कर्णाटक ब्राह्मण त्रिदंडी वैष्णवनके आगे चलवेवारे दक्षिणमें उत्पन्न भये ॥ ६४ ॥ सो पहलें लिंगधारी पाषंडी दंडीनकी सेना विष्णुधर्मके विनाश करवेवारी सज्जननकों दुःख देवेवारी फिरती ही ॥ ६५ ॥ तिलकमालाको खडन करवेवारी विष्णुकी सेवाको उच्छेदन करवेवारी एसी सेनाकों देखके अत्यन्त दु खित भये॥ ६६ ॥ ओर चिन्ता कर बेठेगे जो बडी तरंगवारे लिंगी रूप जलजन्तूनसों व्याकुल सज्जननकी वाणीरूप पर्वतनकों डुबावतो मर्यादारूपी वेलाको उल्लघन करतो बुद्धिमार्गो नहीं रोकवेलायक कलिरूप समुद्रको केसें रोकें ॥ ६७ ॥ ६८ ॥ अथवा

चुलुकी क्रियते किं वा तपसाऽगस्त्यमूर्तिना ॥
इत्थं विचार्य सुदृढं मार्कंडेयाश्रमं ययौ ॥ ६९ ॥
नंदीशाऽनुग्रहाद्देवं प्रसन्नं वरदायिनम् ॥
समीक्ष्य प्रणतो वव्रे सतां रक्षाकृते हरम् ॥ ७० ॥
तेन रक्षाकृते गोपालगायत्री समीरिता ॥
उक्तमस्याः प्रभावेण सतां दुःखं हरिष्यसि ॥ ७१ ॥
वीरान्समुपदिश्यैतं कृत्वैव च चमूश्च तैः ॥
सुहृद्भिः संविदं कृत्वा सन्मार्गं परिपालय ॥ ७२ ॥
एवं हराद्वरं लब्ध्वा चेन्द्रद्युम्नं समागताः ॥
रथयात्रोत्सवे तत्र समायाताश्च वैष्णवाः ॥ ७३ ॥
संगीकृत्य च तत्रैतान् निरूप्य समयं दृढम् ॥
मार्गरक्षाकृते सम्यग् दीक्षितावीरवैष्णवाः ॥ ७४ ॥
तैश्चरद्भिर्महीमेतां विरक्तैर्वीरवैष्णवैः ॥
मार्गरक्षा कृता साध्वी तीर्थं तीर्थेऽरयो जिताः ॥ ७५ ॥

अगस्त्यके जेसें तपस्यासों चुल्लुमें करलेंय ये अच्छी प्रकार विचारके मार्कंडेयजीके आश्रमकों गये॥ ६९ ॥वहाँ वरदायी प्रसन्न महादेवजीके दर्शन प्रणाम कर सज्जननकी रक्षाकरवेके लियें वरदान माँग्यो ॥ ७० ॥ तब उननें रक्षाके लियें गोपालगायत्री दीनी और कही के याके प्रभावसों सज्जननके दुःखकों हरोगे ॥ ७१ ॥ और वीरनको याकों उपदेश करकें उनकी सेना बनायकें सज्जननसों मित्रता कर सन्मार्गकी रक्षा करो॥ ७२॥ ऐसे महादेवजीसों वर पायकें इन्द्रद्युम्न ( जगन्नाथ ) पुरीकों गये वहाँ रथयात्राके उत्सवमें आये भये वैष्णवनकों जमाकर दृढ नियमनको निरूपण कर मार्गरक्षाके लियें वीरवैष्णवनकों दीक्षित किये ॥ ७३ ॥ ॥ ७४ ॥ उन वीर विरक्त वैष्णवनके संग या पृथिवीमें विचरते अच्छे-प्रकारसों मार्गकी रक्षा कीनी तीर्थ २ में शत्रुनकों जीत्यो ॥ ७५ ॥

विलोक्य रीतिं तां साध्वीं सर्वेऽन्ये सांप्रदायिका ॥
पृथक् पृथक् चमूश्चक्रुः समयं च पृथक् पृथक् ॥ ७६ ॥
धर्मध्वजांस्ततः स्वामिध्वेजिनीभिरमर्दयन् ॥
इदानीं कालदोषेण क्वचिद्वैरं मिथः पतेत् ॥ ७७ ॥
छद्मवेषधराः क्वापि विशंति बलिविद्विपः ॥
छद्मिनां सशयात्क्वापि विरोधाच्च परस्परम् ॥ ७८ ॥
अन्योन्यमसहायाच्च जायते च पराजयः ॥
इतः परमतः संविदस्माभिर्विनिरूप्यते ॥ ७९ ॥
सौहृदं येन सुदृढं संप्रदायचतुष्टये ॥
सम्प्रदायद्वये तप्तमुद्राश्रीविष्णुब्रह्मणो ॥ ८० ॥
संप्रदायद्वये माला कुमारत्रिपुरद्विपो ॥
तप्तमुद्रा च माला च सर्वे सधार्यतामितः ॥८१ ॥
परस्परं सौहृदाय पुण्ड्रं ह्रस्यै पृथक् पृथक् ॥
श्रुत्वैतद्वचनं सर्वे समूचुः सांप्रदायिकाः ॥ ८२ ॥

ये उनकी अच्छी रीत देखकें दूसरे सब सम्प्रदायवारेननें अलग २ सेना बनाई और जुदे २ नियम किये ॥ ७६ ॥ और अपनी सेनासों धर्मके वेषमों ठगवेषारेनकों मर्दन करते विचारबे लगे जो कालदोषसों कदाचित् परस्पर वैर न पडजाय कपटसों वेष धारण कर दूसरे द्वेषी मनुष्य न प्रविष्ट होय जाँय परस्पर विरोधसों परस्पर असहायतासों पराजय न होयजाय यासों ये विचार हे के जामें चारो सम्प्रदायमें मित्रता रहे दो सम्प्रदायमें श्री और ब्रह्माजीकीमें तप्तमुद्रा हैं समक और त्रिपुरारिके सम्प्रदायमें तुलसीमाला हे याके उपरान्त तप्तमुद्रा और माला सब लोग धारण करें ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ ८१ ॥ और अलग २ ऊर्द्ध्वपुण्ड्र धारण करें ये गुरुनके वचन सुनकें सब साम्प्रदायिक बोले जो गुरुनकी

गुरूणामाज्ञया चैतत्करिष्यामोयथोदितम् ॥
ततः संमंत्र्य गुरुभिस्तप्तमुद्राकृते कृतम् ॥ ८३ ॥
निकेतनं द्वारिकायाः संकेताय च मायिनाम् ॥
धारयंतु ततो मुद्रा मालाः सर्वे विरागिणः ॥ ८४ ॥
भुंजंति पंक्तावेकस्यां ताथ चकीभवंति च ॥
रामानंदप्रभावोऽयं धर्मसंरक्षणाय वै ॥ ८५ ॥
वज्रदासेन च पुनरंगास्तेषां निरूपिताः ॥
श्रीमच्चपलरायाख्यस्तत्र नारायणः स्थितः ॥ ८६ ॥
यो नीतो यवनेन्द्रेण तत्पुत्र्याऽसौ वशीकृतः ॥
रामानुजेन मुनिना स नीतोऽथ तया सह ॥ ८७ ॥
तां द्वारे संप्रतिष्ठाप्य स्थितोऽभून्निजमंदिरे ॥
तं श्रीनारायणं तत्र समीक्ष्य च प्रणम्य च ॥ ८८ ॥
आचार्यैः श्रीमदाचार्यो व्रतिनो यतिभिर्युताः ॥
जीर्णस्वामी स्वयं प्राह भवद्भिः सा सभा जिता ॥ ८९ ॥
कृष्णदेवस्य मार्गोऽपि कृष्णदेवस्य रक्षितः ॥
लब्धा च वैष्णवाचार्यपदवी वैष्णवाध्वनः ॥ ९० ॥

आज्ञासों ये सब करेंगे तब उननें विचारकें तप्तमुद्रा लेवेको स्थान श्रीद्वारका बतायो तबसों सब वैरागी मुद्रा माला धारण करें हें एक पंक्तिमें भोजन करें हें तीर्थमें मिलें हें एसो रामानन्दको प्रभाव हे धर्मरक्षाके लियें ओर वज्रदासनेंबी उनके अंग निरूपण कियें हें श्रीचपलरायनामक नारायण वहाँ विराजमान हें जिनकों कोई यवन राजा ले गयो हो सो वाकी पुत्रीनें वश किये हे सो रामानुजमुनिनें वाके संग उनकों पधराये सो द्वारमें वाको ठाडी कर अपने मंदिरमें विराजे उन श्रीनारायणकें दर्शन प्रणाम करते श्रीमदाचार्यसों जीर्णस्वामी बोले जो आपने कृष्णदेवराजाकी सभा जीती ओर श्रीकृष्णके मार्गकी रक्षा

दत्ता या वैष्णवाचार्यैर्विष्णुस्वामिमहात्मनाम् ॥
मुद्रा न धार्यते कस्मात्तप्ता विष्णुजनप्रिया ॥ ९१ ॥
वैष्णवैरपि युष्माभिर्विचित्रं किमु चेष्टितम् ॥
तदाहु श्रीमदाचार्या संप्रदायोऽयमीदृश ॥ ९२ ॥
भवद्भि स्रक् कथ नैव धार्यते विष्णुवल्लभा ॥
पूजाकाले धार्यते सा जपकाले विशेषत ॥ ९३ ॥
यद्येवमुच्यते भवद्भिस्तथाऽस्माभिस्तदुच्यते ॥
मलमूत्रादिकालेऽयस्रङ्निषेध समुच्यते ॥ ९४ ॥
समुच्यते तथास्माभि श्रौते स्मार्ते च कर्मणि ॥
यद्यावश्यकता तत्रापि वाक्य प्रतिपाद्यते ॥ ९५ ॥
एवं तुलसिका तस्या स्रक् कथ नावलोक्यते ॥
मुख्यो भागवताचारस्तप्तमुद्रादिधारणम् ॥ ९६ ॥
ब्रूथ ब्रूमस्तदा तद्वत्तुलसीकाष्ठसद्धृतिम् ॥
वर्णाश्रमाणां धर्मोय मुद्राधारणमुच्यते ॥ ९७ ॥

करी ओर वैष्णवाचार्यनसों दीनी भई विष्णुस्वामीसम्प्रदायकी आचार्यपदवीकों पायकें तप्तमुद्रा क्यों नहीं धारण करें हें ॥ ८२ ॥ ८३ ॥ ८४ ॥ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ ९१ ॥ आप वैष्णव होयकें एसो विचित्र कहा करें हें तब श्रीमदाचार्यजी बोले जो ये सम्प्रदाय एसोही हे ॥ ९२ ॥ आप विष्णुकी प्यारी मालाकों सदा धारण क्यों नहीं करोहो जो कहो के पूजाके समय ओर जपके समय विशेषकरकें धारण करें हें ॥ ९३ ॥ तब हमभी योंही कहें हें जो कहो के मलमूत्रादिकालमें मालाकों निषेध हे तो हमभी कहें हें के श्रौतस्मार्तकर्ममें तप्तमुद्राको निषेधहे यदि आवश्यक वचन कहो ॥ ९४ ॥ ९५ ॥ तो तुलसीमालाके आवश्यक वचन क्यों नहीं देखो हो जो कहो तप्तमुद्राआदिको धारण मुख्य भागवताचार हे ॥ ९६ ॥ तो तुलसीमाला धारण क्यों नहीं जो कहो वर्णाश्रमधर्म है

मन्वादिषु न तद्दृष्टं निषेधो विधिवत्समः ॥
श्रूयते च महान् दोषः श्रूयते च महत्फलम् ॥ ९८ ॥
फलं तत्र परित्त्याज्यं दोषोपि बलवत्तरः ॥
देशभेदादिभिन्नास्ताः पुराणस्मृतयोयदि ॥ ९९ ॥
ग्राह्यताऽग्राह्यता तासां संप्रदायानुसारिणी ॥
षोडशीग्रहणे यद्वद्विकल्पः सूत्रसंमतः ॥ १०० ॥
सशाखासूत्रशिष्टानामाचारात्स व्यवस्थितः ॥
एवं स्वसंप्रदायस्य समाराचाव्यवस्थितः ॥ १०१ ॥
तुलसीकाष्ठमालायास्तत्पांकानां च धारणं ॥
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रैश्च कृतलक्षणैः ॥ १०२ ॥
पूजनीयः सदा विष्णुर्नित्ययुक्तैः स्वकर्मभिः ॥
ब्राह्मणाः क्षत्रिया वैश्या नानादेशसमुद्भवाः ॥ १०३ ॥
चक्रांकिताः प्रवेष्टव्या यावदागमनं मम ॥
इत्येवं भारतगिरो मिताश्चान्यत्र या गिरः ॥ १०४ ॥

॥ ९७ ॥ तो मनु आदि स्मृतिनमें क्यों नहीं देखते बड़ो दोष सुनें हें ओर बडो फल सुनें हें ॥ ९८ ॥ तो तामें फल छोडवे योग्य हे क्योंके बलवान् दोष हे जो देशभेद आदिसों पुराण स्मृति भिन्न हें ॥ ९९ ॥ तो काहू अंशको ग्रहण काहूको त्याग सम्प्रदायके अनुसार हे षोडशी ग्रहणमें विकल्प जेसो सूत्रकारको संमत हे ॥ १०० ॥ सूत्रशाखाके भेदसों भिन्न भिन्न व्यवस्था जेसी हे एसे अपने २ सम्प्रदायकी तुलसीकाष्ठमाला ओर तप्तमुद्राधारणमें हे ॥ १०१ ॥ अपने अपने कर्मनसों युक्त ब्राह्मण क्षत्रिय वैश्य शूद्र इन करकें सदा विष्णु पूजने चहिये ओर नानादेशमें उत्पन्न ब्राह्मण क्षत्रिय वैश्य चक्रांकित हमारे आयवे ताईं प्रवेश करें एसी जो भारतकी वाणी हे

तासु चार्थांतरव्यक्ति प्रसक्तिर्नांकधारणे ॥
पचरात्रादिमानेन चरणादिश्रुतेरपि ॥ १०५ ॥
पचरात्रिकभक्ताना योग्या न श्रौतवर्त्मनाम् ॥
श्रौतभक्ते कथ नैता धार्या इत्युच्यते यदा ॥ १०६ ॥
ब्रूमो निषेधप्राबल्याच्छ्रौतधर्मानुरोधिनाम् ॥
यदि ध्रुवतु मालाया निषेध किं न दृश्यते ॥ १०७ ॥
काष्ठांतरपर सोपि लोहांतरपरस्तथा ॥
तस्मात्तु वैष्णवैर्विष्णो पूजायां चक्रधारणम् ॥ १०८ ॥
विधीयते मृदा तद्धि धार्यतेऽस्माभिरप्यथ ॥
ऊर्द्ध्वपुंड्रं विना चक्रशखमुद्रां विना हरे ॥ १०९ ॥
विना श्रीतुलसीमालां कृत पूजादिकं वृथा ॥
त्यक्त्वोर्द्ध्वपुंड्रमुद्राश्च मालां मंत्रागमौ गुरून् ॥ ११० ॥
पूजितोपि हरिर्देव न प्रसीदति भूरिश ॥
ऊर्द्ध्वपुंड्रेण तु विना वृंदाकाष्ठस्रज विना ॥ १११ ॥
पचमुद्रां विना विष्णो पूजन द्रोहउच्यते ॥
यज्ञोपवीतवद्धार्यो कंठे तुलसिमालिका ॥ ११२ ॥

श्रौतकी वचन हैं ॥ १०२ ॥ १०३ ॥ १०४ ॥ उनसों दूसरे अर्थनको बोध होय है तप्तमुद्राधारणको नहीं होय है पचरात्रआदिके मानसों चरणादि श्रुतिसों ॥ १०५ ॥ श्रौतमार्गी पचरात्रके भक्तनको अंक धारण योग्य नहीं जो कहो उनको क्यों नहीं योग्य ॥ १०६ ॥ तो कहें हैं के निषेधकी प्राबल्यतासों जो कहो के मालाके निषेध कहा नहीं देखते ॥ १०७ ॥ तो वे दूसरेकाष्ठको निषेध करें हैं तासों वैष्णव नकों पूजाके समयमें मृत्तिकाके शीतल चक्र आदि धारण करने चहिये सोही हम धारण करें हैं ऊर्द्ध्वपुंड्र चक्र शख आदि मुद्रा तुलसीकाष्ठमाला इनके विना हरिको पूजन वृथा है ऊर्द्ध्वपुंड्र मुद्रा माला मत्र आगम गुरु

क्षणार्द्धं तद्विहीनोपि विष्णुद्रोही न संशयः ॥
सदा धार्या सदा धार्या कंठे तुलसिमालिका ॥ ११३ ॥
सदा वर्ज्या सदा वर्ज्या मालाऽन्यद्रुमसंभवा ॥
इत्येवं विधिवाक्यैस्तु शांडिल्याद्यैः समीरितैः ॥ ११४ ॥
स्रग्धृतिः सर्वदा कार्या मुद्राणामर्चने हरेः ॥
लोकवेदविमुक्तैस्तु केवलं हरिमाश्रितैः ॥ ११५ ॥
वैष्णवैर्धार्यते नित्यं तेषां तदुचितं भवेत् ॥
इत्युक्ते श्रीमदाचार्यै स्तूष्णीमासीद्यतीश्वरः ॥ ११६ ॥
इत्युक्त्वा कृष्णवर्त्मानः कृत्वा सौहृदसंविदम् ॥
संमानितास्तैः संमान्य तान् छात्रैः प्रास्थितास्ततः ॥ ११७ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिँस्तृतीये समजनि पटहश्चाष्टमोयं जयाख्ये॥११८

---

इनकें विना पूजेबी हरि प्रसन्न नहीं होय हें ऊर्द्ध्वपुंड्र तुलसमाला पंचमुद्रा इनके विना पूजन करनो हरिको द्रोह करनो हे यज्ञोपवीतके जेसी कंठमें तुलसीकी माला धारण करनी आधे क्षणबी इनके विना विष्णुको द्रोही होय हे यामें संदेह नहीं कंठमें तुलसीकी माला सदाधारण करनो २ ओरको सदा त्याग करनो इत्यादिक शांडिल्यके विधिवचननसों वैष्णवनको सदा माला मुद्रा धारण करनो चहिये एसें श्रीमदाचार्यजीके कहवे पे वे सन्यासी चुप होयगये पीछें शिष्टाचार करकें उनसों मान पायकें उनको मान कर विद्यार्थीनके संग वहाँसों पधारे ॥ १०८ ॥ १०९॥११०॥१११॥११२॥ ॥११३॥११४॥११५॥११६॥११७॥ समयनीतिके जानवेवारे जगद्गुरु श्रीगोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यास विष्णुस्वामिमतके ग्रन्थनके अनुकूल हरिभक्तनके सुखदेवेवारे या चरित्रग्रन्थमें तीसरे प्रस्थानमें ये आठवों पटह समाप्त भयो ॥ ११८ ॥

सुब्रह्मण्यं महातीर्थं कुमारस्योद्भवस्थलम् ॥
यत्र शेष स्वरूपेण स्थितो नागैः समर्च्यते ॥ १ ॥
कृतानुरागा ये तस्मिन्निरोगा यांति यात्रिण ॥
नागेश श्वेतनागात्मा नार्यं नागेशमर्चति ॥ २ ॥
सर्पार्चकानां यत्राशु क्षीरं वै क्ष्वेडतां भजेत ॥
यात्रिकाणां नृणामेतदमृत चाऽमृतायते ॥ ३ ॥
चकार वदन तस्मै कुमाराय महात्मने ॥
जिष्णवेऽसुरसैन्यानां विष्णवे प्रभविष्णवे ॥ ४ ॥
कर्मनिष्ठाद्विजास्तत्र तौतातिकमतानुगा ॥
समेता समनुप्राप्ता सपवित्रा सविष्टरा ॥ ५ ॥
केचिदग्निचित केचिद्दीक्षिता वाजपेयिन ॥
पचाग्नयस्त्र्यग्नयश्च ह्यौपासनपरायणा ॥ ६ ॥
केचित्षण्णवतिश्राद्धकारिणोव्रतधारिण ॥
सदाचारपरा केचित्सदाह्निकपरा परे ॥ ७ ॥

सो कुमारस्वामीके प्रागट्यस्थल महातीर्थ जहाँ शेपजी अपनरूपसो स्थितहै सब नाग पूजन करें हैं वा सुब्रह्मण्यतीर्थमें पधारे ॥ १ ॥ जहाँ जो यात्री भक्ति करें हैं वे रोगरहित होय जाय हैं ओर यहाँ श्वेतनाग हैं सो सब नागनके ईश हैं ॥ २ ॥ उनकी पूजाके लिये दूध जो आवे है सो सर्पकी पूजा करवेवारेनको विष होयजाय है ओर यात्रीनके लियें वो अमृत होयजाय है यहाँ महात्मा दैत्यसेनाके जीतवे वारे समर्थ कुमारकों प्रणाम कियो ॥ ३ ॥ ४ ॥ ओर यहाँ रामानुजमतके अनुयायी ओर पवित्री पहरे कर्मनिष्ठ ब्राह्मण सब मिलके आये ॥ ५ ॥ कोई अग्निहोत्री, कोई दीक्षित, कोई पंचाग्निक, कोई तीन अग्निके उपासना करवेवारे ॥ ६ ॥ कोई छानवे श्राद्ध करवेवार, कोई व्रत धारण करवेवारे, कोई सदाचारपर, कोई ऋग्वेदी, कोई यजुर्वेदी, कोई

बह्वृचा याजुषाः केचित्सामगाऽथर्वणाः परे ॥
त्रिसुपर्णास्त्रिमधवस्त्रिजन्मानस्त्रयीजुषः ॥ ८ ॥
पंचविद्या दशग्रंथाः षडंगाध्यायिनः परे ॥
षट्शास्त्रनिपुणाः केचित्केचित्पौराणिका द्विजाः ॥ ९ ॥
कृतश्मश्रुनखाः सर्वे शुचिवस्त्रशरीरिणः ॥
शुक्लयज्ञोपवीताश्च शुक्लदंताः सितांबराः ॥ १० ॥
पंचकच्छा बद्धशिखास्तर्ज्जन्यां रूप्यधारिणः ॥
सपादुकाः सोत्तरीयाः कर्णरन्ध्रे क्षितार्चयः ॥ ११ ॥
मृदोर्द्ध्वपुंड्रा भस्मांकाः सत्यवाचो मितोक्तयः ॥
षट्कर्माणस्त्रिषवणस्नायिनः समुपागताः ॥ १२ ॥
विप्राणां निकुरम्बं तं पूष्णो बिम्बमिवोद्गतम् ॥
निभाल्यैतान् प्रसन्नास्ते कर्ममार्गप्रवर्तकाः ॥ १३ ॥
ववंदिरे तदाचार्या वंदितास्तैर्यथाविधि ॥
आसनेषूपविष्टांस्तांश्चक्रुर्दामोदरादयः ॥ १४ ॥
तेषां प्रधाना ये प्रोचुर्ब्रह्मविष्णुगिरीश्वराः ॥
के यूयं कुत आयाता आचार्या राजपूजिताः ॥ १५ ॥

अथर्वणवेदी, कोई त्रिसुपर्ण त्रिमधु त्रिजन्मा वेदत्रयी पढवेवारे षट्शास्त्रमें निपुण पौराणिक मुंडन कराये पवित्र वस्त्र धारण किये सुपेद जनेऊवारे सुपेद दांतवारे ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ पाँच कच्छवारे शिखा बाँधे तर्जनीमें रूपेकी पवित्री पहरे पादुका पहरे उत्तरीय वस्त्र लिये कुंडल पहरे ॥ ११ ॥ मृत्तिकाके ऊर्द्ध्वपुंड्र लगाये, कोई भस्म लगाये सत्य तथा मित बोलवेवारे षट्कर्म ओर तीन स्नानके करवेवारे एसे ब्राह्मण आये ॥ १२ ॥ सो सूर्यके बिम्ब जेसे उन ब्राह्मणनके झुंडको देखके आप प्रसन्न भये ओर उनसों प्रणाम किये गये कर्ममार्गके प्रवर्तक श्रीमदाचार्यजीनेंबी नमस्कार कियो ओर उनको दामोदर आदिनें यथाविधि आसननमें बेठाये ॥ १३ ॥ १४ ॥ पीछें उनमें प्रधान

वटुव्रता भागवता विचित्र चरित हि व ॥
भट्टार्यस्तु तदा प्राह काकरग्रामवासिन ॥ १६ ॥
भारद्वाजास्तैत्तिरीयाश्चरणाध्यायिनो बुधा ॥
यज्ञनारायणाभस्य वंशजा सोमयाजिन ॥ १७ ॥
विख्यातयशस श्रीमल्लक्ष्मणार्यस्य सूनव ॥
यैर्वित्सजयने राज्ञ कृष्णस्याचार्यता भृता ॥ १८ ॥
तेऽमी श्रीवल्लभाचार्या ये च यात्रां समागता ॥
तदा बृहस्पति प्राह यल्लमाया सुतोऽस्ति किम् ॥ १९ ॥
साऽस्माक कुलदौहित्री तेऽमीत्युक्ते जहर्ष स ॥
सर्वे ते हर्षमायातास्तेऽपृच्छन् वृत्तमीप्सितम् ॥ २० ॥
वृत्त राजसभायाश्च यात्रायाश्च यथायथम् ॥
भट्टार्योऽकथयत्सर्वमिदमूचुस्तत पुन ॥ २१ ॥
ब्राह्मणै स्रक् कथं धार्या मृण्मुद्रा वटुभि कथम् ॥
सूत्रे पुष्ट न चैवास्ति शिष्टाचारात्तु तद्धृति ॥ २२ ॥

पुरुष बोले जो आप राजानसों पूजित आचार्य कौन हे कहाँसों आये ॥ १५ ॥ भागवतव्रह्मचारिन आपको विचित्र चरित्र हे तब भट्टार्य बोले के कॉकरग्रामके वासी भारद्वाज तैत्तिरीयशाखाध्यायी सोमयाजी यज्ञनारायणके वंशज प्रसिद्ध श्रीलक्ष्मणभट्टजी के आप पुत्र हैं जिनने कृष्णदेवराजाकी सभाकों जीतकें आचार्यताकों धारण कियो हे ॥ १६ ॥ १७ ॥ १८ ॥ वे ये श्रीवल्लभाचार्यजी हें जो यात्राम पधारे हें तब बृहस्पति बोले कें, कहा यल्लमाजीके पुत्र हें ॥ १९ ॥ वे तो हमारे कुलकी दोहिती हें तब भट्टार्यने कह्यो के हाँ वेही हें ये कहवेपे वे प्रसन्न भये ओर यथेष्ट सब वृत्तान्त पूछते भये ॥ २० ॥ भट्टार्यने राजसभाको ओर यात्राको सब वृत्तान्त कह्यो तब वे बोले ॥ २१ ॥ ब्राह्मणके बटु बालक माला मुद्रा धारण

न तीर्थयात्रा विहिता वटोराचार्यसेविनः ॥
हरिसेवा कुतस्तस्य वेदाध्ययनशालिनः ॥ २३ ॥
वर्णाश्रमेण धर्मेण गतिः स्वर्ग्या स्मृतोत्तमा ॥
वेदेषु विहिता तेन सकार्यो वै द्विजन्मना ॥ २४ ॥
इत्युक्ते प्राहुराचार्याः सम्यङ्मातामहोक्तयः ॥
वर्णाश्रमेण धर्मेण गतिः स्वर्ग्यैव नापरा ॥ २५ ॥
मुंडकोपनिषत्स्वेतत् क्षयिष्णु समुदाहृतम् ॥
यथा कर्मचितश्चेह तथाऽमुत्र विनाशि तत् ॥ २६ ॥
कथं कृतेनाकृतं स्यात् कृतं तद्धि विनश्यति ॥
पराऽपरागतिर्द्वेधा छांदोग्ये समुदीरिता ॥ २७ ॥
अर्चिरादिश्च धूमादिः शुक्ला कृष्णा च ते मते ॥
परायाः प्राप्तये न्यासः कर्मणां मुंडकेरितः ॥ २८ ॥

कैसे करें सूत्रमेंतो पुंड्र नहीं है शिष्टाचारसों कियो जाय है ॥ २२ ॥ आचार्यसेवी वेद पढवेवारे बालकको तीर्थयात्रा विहित नहीं है ओर हरिसेवातो काहेकी ॥ २३ ॥ वर्णाश्रमधर्ममों स्वर्गके देवेवारी गति होय है वेदमें जो लिख्यो है वोही द्विजातीनको करनो चाहिये ॥ २४ ॥ ये कहवेपे श्रीमदाचार्यजी बोले जो मातामहको कहनो ठीक है वर्णाश्रमधर्मसों स्वर्गके देवेवारी ही गति होय है दूसरी नहीं ॥ २५ ॥ मुंडकोपनिषदमें ये नाशवारी कही गई है जेसे कर्मसों बनी है याहीसों विनाशवरी है ॥ २६ ॥ कृतसों अकृत ( मोक्ष ) केसे होयसके है कृतको तो नाश होयजायहे छान्दोग्यमें पर अपर दो गति कही हें एक आर्चिरादि दूसरी धूमादि वेही शुक्ल कृष्ण हें पराके लिये कर्मनको त्याग मुंडकमें कह्यो है ॥ २७ ॥

हित्त्वा त्रैवर्गिक कर्म मुमुक्षुर्गुरुमाश्रयेत् ॥
यथा बृहद्रथ प्राह मैत्रायण्यां श्रुतौ स्फुटम् ॥ २९ ॥
असार' खलु ससार स च लोकद्वयात्मक ॥
दु खोदर्कास्तत्र भोगा ईर्षोऽसूयादिदूषिता ॥ ३० ॥
जुगुप्सिता सशोकाश्च सभया सातिशायिन ॥
तस्माद्विशोकमभयमपवर्गमनामयम् ॥ ३१ ॥
निर्विद्य सर्वकामेभ्यो लिप्सितव्य सदैव हि ॥
न कर्मणा न प्रजया दानाद्यैस्तत्र लभ्यते ॥ ३२ ॥
यज्ञदानतपोमुख्यैः कर्मभि शोधितात्मनाम् ॥
भवेदधिकृतिस्तत्र श्रुत्यैवं समुदीरणात् ॥ ३३ ॥
कर्मणां तत्परित्यागाज्ज्ञानात्तत्पदमाप्यते ॥
श्रुतौ स्मृतौ पुराणे च सर्वत्रैतद्विनिर्णय' ॥ ३४ ॥
श्रुत्यर्थ एव कृष्णेन गीतायां स स्फुटीकृत ॥
त्रैगुण्यविषया वेदा निस्त्रैगुण्यो भवार्जुन ॥ ३५ ॥

॥ २८ ॥ मुमुक्षु पुरुष त्रैवर्गिक कर्मनकों छोडकें गुरुके शरण जाय जेसें बृहद्रथने मैत्रायणीश्रुतिमें स्पष्ट कह्यो हे ॥ २९ ॥ के दोनों लोकरूप ससार असार हे ईर्षा असूया आदि दोषनसों दूषित भोग दु खनके दाता हैं ॥ ३० ॥ निन्दित शोकवारे भयवारे नाशवारे हें यासों शोकरहित भयरहित रोगरहित मोक्षकी इच्छा कामनानकों छोड करकें सदा करे कर्मसों प्रजासों दानादिकमसों यो नहीं मिले हे ॥ ३१ ॥ ३२ ॥ यज्ञ दान तप आदि मुख्य कर्मनसों जिनने आत्माको शुद्ध कियो हे, उनको यामें अधिकार हे एसो श्रुतिको कथन हे ॥ ३३ ॥ तासों कामनाकों छोडकें भक्ति करवेसों यो पद मिले हे श्रुति स्मृति पुराणनमें सब ठिकाने ये निर्णय हे ॥ ३४ ॥ वेदहीको अर्थ गीताजीमें श्रीकृष्ण भग

वेदशब्देन पूर्वोत्र वेदकांडः समीरितः ॥
कर्मणां त्यागतस्तस्य त्यागः सम्यङ्निरूप्यते ॥ ३६ ॥
स त्यागो द्विविधः प्रोक्तः फलासक्तिविभेदतः ॥
फलत्यागोपि द्विविधः स्वरूपाद्धेतुतस्तथा ॥ ३७ ॥
आसक्तिस्तु तथा द्वेधा स्वरूपे च फले तथा ॥
अनुद्दिश्य फलं कर्म विधिप्राप्तं विधीयते ॥ ३८ ॥
स्वरूपेण फलत्यागः सांख्येन हरिणेरितः ॥
ऋषिश्छंदश्च दैवत्यं विज्ञाय ब्राह्मणं तथा ॥ ३९ ॥
जपं करोमि चेत्येवं फलत्यागः स्वरूपतः ॥
विधिप्राप्तं तु यत्कर्म क्रियते योगवर्त्मना ॥ ४० ॥
कृतं समर्प्यते विष्णौ त्यागोऽयं तस्य हेतुतः ॥
मंत्रर्षिछंदोदेवांश्च समुच्चार्य स्वतुष्टये ॥ ४१ ॥
जपं करोमि चेत्येवं हेतुतस्त्याग इष्यते ॥
कर्मासक्तिपरित्यागः कर्मत्यागः स्वरूपतः ॥ ४२ ॥

वाननें स्पष्ट कियो हे के वेद त्रिगुण हें तुम त्रिगुणरहित होवो ॥ ३५ ॥ वेद-शब्दसों पूर्व वेदकांड कह्यो गयो हे कर्मके फलनके त्यागसों ताको त्याग अच्छे प्रकारसों होयजाय हे ॥ ३६ ॥ वो त्याग फलआसक्तिके भेदसों दो प्रकारको हे स्वरूप ओर हेतुके भेदसों फलत्यागबी दो चालको हे ॥ ३७ ॥ आसक्तिबी उन्हीसों दो चालकी हे फलकी इच्छा न करके विधिसों कर्मको विधान हे ॥ ३९ ॥ स्वरूपसों फलत्याग सांख्यकरकें भगवाननें कह्यो हे ऋषि छन्द देवता ब्राह्मण इनकों जानकें जप करूँ हूँ याको स्वरूप फलत्याग कहें हें विधिप्राप्त कर्मकों योगमार्गसों करे किये भयेको विष्णुके अर्पण करे ये हेतुपूर्वक त्याग हे मंत्र ऋषि छन्द देवता इनकों उच्चारण करकें जप करूँ हूँ ये हेतुत्याग हे कर्मा सक्तिको छोडनो स्वरूपसों कर्मत्याग हे ॥ ३९ ॥ ४० ॥ ४१ ॥ ४२ ॥

स सन्यासो नान्यथा स्यादन्यथा पापकर्म तत् ॥
फलासक्तिपरित्यागे कुरुते दारुयत्रवत ॥ ४३ ॥
सिध्यसिध्यो' समो भूत्वा निर्ममो निरहकृति ॥
तत्रेशार्पणबुद्ध्यैव योगमार्गेण यत्कृत ॥ ४४ ॥
स त्याग सर्वत श्रेष्ठो गीतायां हरिणोदित ॥
कृत्वैव च फलत्यागात्कर्मत्याग हरेर्मतात् ॥ ४५ ॥
कृत्वा वेदातमार्गेण भक्तिमार्गेण वा पुन ॥
हरिं समर्च्य प्राप्नोति परागतिमितीर्यते ॥ ४६ ॥
श्रुत्वैव ब्रह्मभट्टस्तु पुन प्राह हसन्निव ॥
इय भागवती वार्ता स्त्रीशूद्राणां मुदे भवेत् ॥ ४७ ॥
ब्राह्मणानां न चेत्त्थं हि ते तु श्रौतानुयायिन ॥
श्रुतौ यत्कथ्यते कर्म तत्कर्तव्य न चेतरत् ॥ ४८ ॥
ईशार्पणधिया कर्म श्रुतौ न विहितं क्वचित् ॥
स्वर्गकामो यजेदेव कामस्तु श्रुतिचोदित ॥ ४९ ॥

त्याग करवेसों सन्यास अन्यथा नहीं होय हे नहीं तो पापकारी होय है फला सक्तिओरपरित्याग काठके यत्रके जेसे करे हे ॥ ४३ ॥ सिद्धि असि द्धिमें सम होयकें ममता अहकारकों छोडकें भगवानके अर्पणबुद्धिसों योग मार्गमों जो कियो जाय हे ॥ ४४ ॥ ताकों सबसों उत्तम त्याग भगवानूनें गीताजीमें कह्यो हे एसे फलत्यागरूपकर्मत्यागकों करकें वेदान्तमार्ग वा भक्तिमार्गसों हरिको पूजन करकें परागतिकों पावे हे ॥ ४५ ॥ ४६ ॥ श्रीमदाचार्यजीके या कथनकों सुनकें ब्रह्मभट्ट हँसके बोले के ये भागवती वार्ता स्त्रीशूद्रनके आनन्दके लिये हे ॥ ४७ ॥ वेदानुयायीब्राह्मणनके लिये नहीं हे श्रुतिमें जो कह्यो हे वो कर्तव्य हे दूसरो नहीं ॥ ४८ ॥ भगवदर्पण बुद्धिसों कर्म कहीं वेदमें नहीं विहित हे "स्वर्गकामोयजेत"या श्रुतिसों स

निष्कामस्य क्रिया नेति शास्त्यनिष्कामतां मनुः ॥
वेद एव परं श्रेयस्कर्म विप्रस्य चोदितम् ॥ ५० ॥
वेदे तु कर्मैव रुतं न ज्ञानं न च भक्तयः ॥
तस्माद्वेदोक्तमार्गेण भवद्भक्तिरुदीर्यताम् ॥ ५१ ॥
तदर्थं सूत्रतोब्रूहि गीतादिः सूत्रतोवरः ॥
मन्वादिस्मृतयो मान्याः श्रुतिसूत्रानुगा यदि ॥ ५२ ॥
प्रामाण्यं नान्यथा चैषां क्व पुराणादिजल्पितम् ॥
पौरुषेयगिरां मानं जैमिनिर्न प्रपद्यते ॥ ५३ ॥
कल्पे कल्पेऽभिसृष्टानामधुनापि तथा परैः ॥
पारंपर्यादपेतानां न मानानां स्वतः प्रमा ॥ ५४ ॥
सभा जिता राजकीया राजकीयाः प्रमादिनः ॥
आचार्याणां सभाप्येवं स्वाचार्याणां सभैव सा ॥ ५५ ॥

काम कर्म विहित हे ॥४९॥ निष्कामकी कोई क्रिया नहीं होती एसो मनुको वचन हे वेदमें जो कह्यो हे वोही ब्राह्मणके लिये कल्याणदायी हे ॥ ५० ॥ वेदमें तो कर्महीं कह्यो हे भक्ति ज्ञान नहीं कहें हें तासों वेदके वचननसों अपनी भक्तिको उपपादन करो ॥ ५१ ॥ वेदको अर्थ सूत्रनसों कहो गीता आदि तो सूत्रनकी अपेक्षा छोटे हैं ओर श्रुतिसूत्रके अनुसार मन्वादिक स्मृतिबी प्रमाण हें ॥ ५२ ॥ अन्यथा नहीं पुराणादिकनके कहेभयेको तो कहा मनुष्यवाणीको प्रमाण जैमिनी नहीं मानें हें ॥ ५३ ॥ कल्पकल्पमें बनाये जाँय हें परम्परासों च्युत हें इनको स्वतः प्रमाण नहीं होयसके हे ॥ ५४ ॥ आपने राजानकी सभा जीती तो कहा भयो राजकीय पुरुष तो प्रमादी होय हें ओर अपने आचार्यनकी सभा जीती तोबी कहाभयो ये ब्राह्मणनकी सभा हे यामें वेद विद्यमान हें यहाँ जो अर्थ निर्णीत

इय तु परिपद्बाह्मी वेदा यस्यां प्रतिष्ठिता ॥
निर्णीतोर्थोऽत्र य कश्चित्त न कश्चित्प्रहास्यति ॥ ५६ ॥
आद्यो य शंकराचार्यो विष्णवाचार्यस्तथापर ॥
अन्येपि वैष्णवाचार्यो भिन्नधर्मप्रवर्तका ॥ ५७ ॥
आचार्यवान् भवेत्यादौ श्रुतौ नैते समीरिता ॥
अध्यापको यो वेदानां निपेकादिकरश्च य ॥ ५८ ॥
सांगानां सरहस्यानां तमाचार्यं जगुर्बुधा ॥
तादृशश्च पिताचार्यो गुरुर्वा वेदपाठक ॥ ५९ ॥
स सावित्रीमुपदिशेत्कर्तव्य नेतरत्क्वचित् ॥
ज्ञानाय या या वार्ता सा सापि भट्टैर्विनिन्दिता ॥ ६० ॥
तत्रैवं शक्यते वक्तुमित्याद्यैस्तत्रवार्तिके ॥
भवन्मता भागवती भक्तिर्नैव श्रुतौ स्मृतौ ॥ ६१ ॥
सुहृद्भावेन पृच्छामो न मात्सर्यादिदुर्धिया ॥
अस्मज्जातो भवान् जात श्रुत साक्षाद्धुताशन ॥ ६२ ॥

होयगो वोही माननीय होयगो ताको कोई त्याग नहीं करेगो ॥ ५५ ॥ ५६ ॥ पहले जो शंकराचार्य विष्णवाचार्य और वैष्णवाचार्य भिन्न धर्मके प्रवृत्त करवेवारे भये ॥ ५७ ॥ उनको "आचार्यवान्भव" य श्रुतिमें नहीं कह्यो जो रहस्य और अंगनके सहित वेदनके पढायवेवारे और निषेकादि कर्म करवेवारे हैं उनको विद्वान् आचार्य कहें हैं तासों पिता आचार्य है अथवा वेदपढायवेवारे गुरु आचार्य होय हैं ॥ ५८ ॥ ५९ ॥ वे गायत्रीको उपदेश करें और कछू न करें ज्ञानके लिये जो जो वार्ता है ताको भट्टनें निन्दा करी है ॥ ६० ॥ तासों ये बात कहसके हैं के तन्त्रवार्तिकमें और श्रुतिस्मृतिमें आपके अभिमत भागवती भक्ति कहीं नहीं दीखपडे है ॥ ६१ ॥ तासों ये बात मित्रतासों पूछें हैं दुष्टबुद्धि वा मात्सर्यसों नहीं पूछें हैं हमारे मा

तेन प्रवर्तितः पंथास्तं निर्णीषति नो मतिः ॥
इत्थं ब्रह्मादिभिः पृष्टे प्रादुर्वैश्वानरास्तदा ॥ ६३ ॥
अश्रद्धेया कर्मजडैः सत्यं भागवती कथा ॥
सा कर्मजडता वेदे मुंडकेन प्रदुष्यते ॥ ६४ ॥

यथा प्रथममुंडके

प्लवाह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म एतच्छ्रेयो येऽभिनंदंति मूढा जरामृत्युं ते पुनरेवापयंति अविद्यायामंतरे वर्तमानाः स्वयं धीराः पंडितं मन्यमानाः जङ्घन्यमानाः परियंति मूढाः अंधेनैव नीयमानाः यथांधाः अविद्यायां बहुधा वर्तमाना वयं कृतार्थां इत्यभिमन्यंति बालाः यत्कर्मिणांतत् प्रवेदयंति रागान् येनातुराः क्षीणकालाश्च्यवंते इष्टापूर्तं मन्यमानावरिष्टं नान्यच्छ्रेयो वेदयंते प्रमूढाः नाकस्य पृष्ठे ते सुकृतेनानुभूत्त्वेमं लोकं हीनतरं विशंति ॥

अर्थः श्रुतीनां बोधाय किंचिदत्र प्रदर्श्यते
प्लवानावोदृढायज्ञाअनित्यायेषु वर्तते ॥ ६५ ॥
अष्टादशोक्तमृत्त्वग्निः षोडशैर्येद्वितन्यते ॥
पत्न्या च यजमानेन कर्माष्टादशचोच्यते ॥ ६६ ॥

निमें आप साक्षात् हुताशन प्रगट भये हैं॥ ६२ ॥ आपने जो मार्ग चलायो है ताके निर्णयकरवेकी इच्छा हमारी बुद्धि चाहे है या प्रकार ब्रह्मादिकनके पूँछेवेपे वैश्वानर बोले ॥ ६३ ॥ जो ठीक कही हो कर्मजडनकरकें भागवती वार्ता श्रद्धा करवे लायक नहीं है परन्तु वा कर्मजडताकों वेदमें मुंडकने दूषित कियो है॥ ६४ ॥ "प्लवा" इत्यादि श्रुतीनके अर्थ दिखावे हैं के यज्ञरूपी नौका है उनके जो आश्रित हैं वे अनित्य हैं ओर वे यज्ञकर्म अठारह हैं ॥ ६५ ॥ ॥ ६६ ॥

अवर ज्ञानरहितं ये श्रेय श्रेयसे हितम् ॥
मन्यते तेऽनुधावाला जरामृत्यु विशति ते ॥ ६७ ॥
अविद्यावरणे तेऽस्मी वर्तमाना गुरुं विना ॥
स्वयधीरास्तत प्रोक्ता स्वय बुद्धिप्रवर्तका ॥ ६८ ॥
जङ्घन्यमानाद्दु खौघैरीषणात्रयपीडिता ॥
परियति ते भ्रमतीह तिर्यङ्नृसुरयोनिषु ॥ ६९ ॥
बहुधा विद्यया प्रोक्ता सिद्धा स्मोऽभिमतिर्मृषा ॥
न कर्मिणोविजानति तत्त्व कर्मातिरागत ॥ ७० ॥
तेन भूत्वाऽऽतुराभोगे भुक्तस्वर्गा पतत्यध ॥
इष्ट यागादिक श्रौत पूर्त स्मार्त तुलादिकम् ॥ ७१ ॥
ज्ञानतस्तेवरिष्ठतन्नान्यच्छ्रेयोविजानते ॥
सुकृतेन सुपण्येन नाके लब्ध्वा तनु शुभां ॥ ७२ ॥
भुक्त्वा भोगान् पततीह हीन निरयमेववा ॥
एवं कर्मजडानां हि निंदाप्यत्रापि दृश्यताम् ॥ ७३ ॥

जो भक्तिज्ञानके विना कल्याणकी इच्छा करें हैं वे अज्ञानी हैं मृत्यु
प्रवेश करें हैं ॥ ६७ ॥ गुरुके विना अविद्यारूपी अंधकारमें वर्तमा
होयकें अपनी बुद्धिसों प्रवृत्त होयकें दु खनसों पीडित होय हैं और ती
ईषणा लगी रहें हैं पशु पक्षि मनुष्य असुरयोनीनमें फिरा करें
॥ ६८ ॥ ६९ ॥ अविद्यासों अपनेको सिद्ध मानकें वृथा अभिमान कर
कर्म करवेवारे तत्त्वको नहीं जानें हैं भोगमें आतुर होयकें स्वर्गसों नीचे गि
पडें हैं यज्ञादिक करनो कूपतडागआदि बनवानो तुलादानादिक ये भक्तिज्ञानसे
अधम हैं इनसों अच्छो शरीर पायकें स्वर्गमें भोग करकें पीछें नरकमें गिरें
॥ ७० ॥ ७१ ॥ यासीप्रकार औरभी दिखावे कर्मजडनकी निंदा

यच्चोक्तं वेदएवस्यात्परं मानं नचेतरत् ॥
तत्कथं केवलाद्वेदाद्धर्मसिद्धिर्विचार्यताम् ॥ ७४ ॥
अंगहीनोयथा चांगी कर्तुं किंचिन्न वै क्षमः ॥
तथांगोपांगरहितोवेदः प्रोक्तोनिरर्थकः ॥ ७५ ॥
शिक्षा कल्पोव्याकरणं छंदोज्योतिर्निरुक्तकम् ॥
अंगैरेतैः क्षमा किंचिदर्थं वेदयितुं श्रुतिः ॥ ७६ ॥
पुराणन्यायमीमांसाधर्मशास्त्राणि च श्रुतेः ॥
उपाङ्गानि च चत्वारि याज्ञिकस्य स्रुगादिवत् ॥ ७७ ॥
प्रामाण्यं च पुराणादेर्वेदएव समीरितम् ॥
मुंडके पठ्यते सम्यग्बृहदारण्यके तथा ॥ ७८ ॥

तत्र प्रथममुंडके

द्वे विद्ये वेदितव्येइति ह स्म यद्ब्रह्मविदोवदंति
परा चैवाऽपरा च तत्रापरा ऋग्वेदोयजुर्वेदः सा
मवेदोब्रह्मवेदः शिक्षा कल्पोव्याकरणं निरुक्तं छंदोज्योतिष
मितिहासः पुराणं न्यायो मीमांसाधर्मशास्त्राणीति ॥ ७९ ॥

देखो ॥ ७२ ॥ ७३ ॥ ओर जो कहो के वेदही प्रमाण हे दूसरो नहीं तो केवल वेदसों धर्मसिद्धि केसे होयगी ॥ ७४ ॥ जेसो अंगहीन मनुष्य कछू कार्य नहीं करसके हे एसेही अंगहीन वेदबी निरर्थक हे ॥ ७५ ॥ शिक्षा कल्प व्याकरण छन्द ज्योतिष निरुक्त इन अंगनकरकें श्रुति अर्थ बोध कर सके हे ॥ ७६ ॥ पुराण न्याय मीमांसा धर्मशास्त्र ये चार उपांग हें जेसे याज्ञिक मनुष्यके स्रुवा स्रुचि ॥ ७७ ॥ पुराणनको प्रामाण्य वेदहीमें कह्यो हे मुंडकमें बृहदारण्यमें अच्छीप्रकार कह्यो हे ॥ ७८ ॥ वहाँ प्रथम मुंडकमें जिनको ब्रह्मवेत्ता जानें हें वे दो विद्या जानवे योग्य हें एक परा दूसरी अपरा तामें ऋग्वेद,यजुर्वेद, सामवेद, अथवर्णवेद,शिक्षा,कल्प, व्याकरण,

याज्ञवल्क्य पुन प्राह सांगोपांगैस्त्रयीमिमाम् ॥
कारण धर्मजातस्य पुराणाद्यैश्च दिङ्मिते ॥ ८० ॥
पुराणन्यायमीमांसाधर्मशास्त्रांगमिश्रिता ॥
वेदा स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ ८१ ॥
ततश्चतुर्दशानां योपिंडितार्थे स वै प्रमा ॥
तेन संसाध्यते धर्मः केवलेन न छंदसा ॥ ८२ ॥
सध्याग्निहोत्रयज्ञादेर्विधय संति छंदसि ॥
इतिकर्तव्यता नैषां सांगा क्रमगता क्वचित् ॥ ८३ ॥
सांगवेदस्याध्ययने विज्ञाने च विधिस्तत ॥
पुराणादिभ्यएवास्य ज्ञान वेदस्य नान्यथा ॥ ८४ ॥
कायाधवस्तु प्रह्लादोपुराणाज्ज्ञायते यथा ॥
पुराणमंतरा त्वंगैर्न वेदार्थ प्रसिध्यति ॥ ८५ ॥
तत सांगश्च सोपांगोवेद सर्वार्थसाधक ॥
न वेदात्केवलात्कश्चिद्धर्म कुत्रापि दृश्यते ॥ ८६ ॥

निरुक्त, छंद ज्योतिष इतिहास, पुराण, न्याय, मीमांसा धर्मशास्त्र, ये अठारा विद्या हैं ॥ ७९ ॥ और याज्ञवल्क्यनेभी कह्यो है के अंग उपांगकरके सहित ये त्रयी विद्या सब धर्मनका कारण है ॥ ८० ॥ पुराण, न्याय, मीमांसा, धर्मशास्त्र, छहो अंग चारों वेद, ये विद्या हैं और धर्मके स्थान हैं ॥ ८१ ॥ यासों इन चौदहा विद्यानको पिंडीभूत जो अर्थ है या प्रमाण है याहीसों धर्म सिद्ध होय है केवल वेदसों नहीं ॥ ८२ ॥ सन्ध्या अग्निहोत्र यज्ञ आदिकी विधि वेदमें है परन्तु इनको क्रमसे करना यह इति कर्तव्यता नहीं कही है ॥ ८३ ॥ सांगवेदको पढना और वेदको ज्ञान पुराणादिकसों ही होय है दूसरे प्रकारसों नहीं ॥ ८४ ॥ कायाधव नाम प्रल्हादको है ये बात पुराणहीसों जेसे जानी जाय है याही प्रकार पुराण और अंगनके विना वेदको अर्थ नहीं जान्यो जाय है ॥ ८५ ॥ तासों अंग उपांगसहित

शौचाचमनविध्यादेर्धर्मशास्त्रं विनाऽगतिः ॥
यथा निरंगः पुरुषः कंचिदर्थं न साधयेत् ॥ ८७ ॥
तथा निरंगोवेदोप्यंगान्युपांगैर्विना तथा ॥
किं तु जैमिनिना तंत्रे विधिवादस्य मानतः ॥ ८८ ॥
उपयोगान्नार्थवादः प्रामाण्यमिति शंकितम् ॥
ततः प्रामाण्यमूलस्य संप्रदायस्य दर्शनात् ॥ ८९ ॥
सूत्रितं चार्थवादार्थं तुल्यं तु सांप्रदायिकम् ॥
एवमंगेष्युपांगे च पारंपर्यस्य दर्शनात् ॥ ९० ॥
वेदेन तुल्यं प्रामाण्यमनादृत्य च तद्गतम् ॥
पुराणं प्रथमोवेदः प्रथमं ब्रह्मणोदितम् ॥ ९१ ॥
चतुर्भिरपिवक्त्रैः स्वैस्ततोवेदाः प्रवर्त्तिताः ॥
इति मत्स्यपुराणोक्ताः कल्पे कल्पेऽस्य सृष्टयः ॥ ९२ ॥
व्यासादिकर्तृता चैषां वेदानां च कथादिवत् ॥
न हि वेदेऽखिलोधर्मः दृश्यमाने तु दृश्यते ॥ ९३ ॥

वेद सर्वार्थसाधक हे केवल वेदसों कोई बी धर्म कहीं नहीं दीखपडे हे ॥ ८६ ॥ शौच आचमन आदि विधिकी धर्मशास्त्रके विना कोई गति नहीं जेसें अंगहीनपुरुष कछू नहीं करसके हे एसेही निरंग वेद, ओर जैमिनिनेंबी तंत्रमें विधि वाद मान्यो हे ॥ ८७ ॥ ८८ ॥ ओर अर्थवादमें प्रामाण्यकी शंका करी हे ओर प्रामाण्यके मूलभूत सम्प्रदायके देखवेसों अर्थवादके लिये सूत्र किये तासों दोनों तुल्य हें याही प्रकार अंगउपांगमें परम्पराके देखवेसों वेदके तुल्य प्रामाण्य हे ब्रह्मासों कह्यो गयो पहलो वेद पुराण हे ॥ ८९ ॥ ९० ॥ ९१ ॥ पीछे चारों मुखसों वेद भये या मत्स्यपुराणके कथनसों कल्पकल्पमें याकी सृष्टि हे इनकों कर्तापनो तो व्यासादिकनको वेदकी कथाके जेसो हे वेदमें कहीं सम्पूर्ण धर्म नहीं दीख

अहर्निशं दिदृक्षेषां श्रीमच्चरणचुंबिनी ॥
भट्टार्यस्तु तदा तस्मै निजसंबंधिने मुदा ॥ १२६ ॥
ज्ञात्वा सत्कृत्य संस्नाप्याभ्यवहाराण्यकारयत् ॥
समागतानश्ववरानश्वान् भृत्यान् यथायथम् ॥ १२७ ॥
कृष्णदासश्चोपकरोदातिथ्यं सार्ववर्णिकं ॥
ऊषुस्तत्रैव तां रात्रिं प्रभाते चलितास्ततः ॥ १२८ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे ॥
प्रस्थानेऽस्मिंस्तृतीये समजनि पटहश्चैवमेकादशोऽयम् ॥१२९॥

---

ततश्चन्द्रगिरौ प्राप्ताः शृंग्यर्षिपदमुत्तमम् ॥
सुब्रह्मण्यात्समाहूतं तत्राऽगान्नृपतेर्बलम् ॥ १ ॥
तुंगभद्रासरित्तीरे नीरे तीर्थविधिं व्यधुः ॥
अपराह्णे ततः प्राप्ताश्चंद्रमौलेर्दिदृक्षया ॥ २ ॥

भट्टार्यनें अपने वा सम्बन्धीको सत्कार करकें स्नान आदि करवायकें भोजन कराये ओर आये भये सवारनको भृत्यनको यथायोग्य भोजन करवायो ॥ १२५ ॥ १२६ ॥ १२७ ॥ कृष्णदासने सबनको आतिथ्य कियो ओर वहाँ वा रातमें निवास करकें प्रातःकाल वहाँसों आप पधारे ॥ १२८ ॥ समयनीतिके जानवेवारे श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यास विष्णुस्वामीके मतके ग्रन्थनके अनुकूल हरिभक्तनके सुखदेवेवारे या चारित्रग्रन्थके तीसरे प्रस्थानमें ये गेरहवों पटह समाप्त भयो ॥ १२९ ॥

---

सो चन्द्रगिरीमें आये जहाँ शृंगीऋषिको उत्तम स्थान हे वहाँही सुब्रह्मण्य-क्षेत्रसों राजाकी सेना [illegible] आईही वोवी गई ॥ १ [illegible] ंगभद्रान

धराधरस्तया श्रीमत्तत्तामरसपद्धतिम् ॥
ब्राह्मणैरागम प्रोक्त सुब्रह्मण्यस्थविज्जय ॥ ११९ ॥
यत संप्रेपितश्चाह महाराजेन चादरम् ॥
हस्त्यश्वरथपत्त्यादि सुब्रह्मण्य समेष्यति ॥ १२० ॥
भवद्गवेषणायाहं चागत समुपागत ॥
राज्ञो विज्ञप्तिरेतावद्दर्शनं दीयतां प्रभो ॥ १२१ ॥
क्रियतां वचनं सत्य प्रतिज्ञात विधीयताम् ॥
खगपोतो यथा नीडे यथा गोष्ठे सकृत्करि ॥ १२२ ॥
प्रतीक्षामि तथा नित्य मही कादंबरीमिव ॥
अथाहु श्रीमदाचार्या कुशल नृपतेरलम् ॥ १२३ ॥
अंगोपांगेषु तस्याथ युष्माक च पुरोधसाम् ॥
मातामहगृहेऽस्माकं ब्रूतान्येषां च शोभनम् ॥ १२४ ॥
इत्युक्ते श्रीमदाचार्ये स चाह प्रेमगद्गद ॥
अनुगृहीता गुरुभि सर्वे कुशलिनो जना ॥ १२५ ॥

ब्राह्मणनने आपको सुब्रह्मण्यतीर्थवासी विद्वाननके विजयको समाचार कह्यो हे ॥ ११९ ॥ ताहीसों महाराजने मोंकों आदरसों भेज्यो हे ओर हाथी, रथ, घोडा, पदाति, आदि सुब्रह्मण्यमें आवेंगे ॥ १२० ॥ आपके ढूढवेके लिये में आगे आयो हूं राजाकी इतनीही विनती हे जो हे प्रभो दर्शन देवो ॥ १२१ ॥ अपनी प्रतिज्ञाकों सत्य करो जेसे पक्षीको बच्चा अपने रहवेकी जगहमें प्रतीक्षा करे हे वेसी में नित्य प्रतीक्षा करू हूं ॥ १२२ ॥ तब श्रीमदाचार्यजीनें आज्ञा करी जो राजाको सब कुशल हे उनके अंग उपांग ओर पुरोहित तुमसबनको ओर हमारे मातामहके घरम तथा ओर सबकी कुशल कहो ॥ १२३ ॥ १२४ ॥ श्रीमदाचार्यजीके ये आज्ञा करवेपे प्रेमसों गद्गद होयके वो बोल्यो जो गुरुनकी अनुग्रहसों सब कुशल हे एक दिन राज आपके चरणकमलनके दर्शनकी इच्छा हे सब

मानपेक्षामनादृत्य दर्शनार्थं समागताः ॥
चंद्रमौलेः शंकरस्य तद्युष्मासु सुशोभनम् ॥ १० ॥
यूयमाद्याश्रमचराश्चरमाश्रमिणो वयम् ॥
यूयं तु बटवो वृद्धा यूयं मान्यास्ततोऽपि किम् ॥ ११ ॥
यो विद्यया भवेद्वृद्धः स तु वृद्धः प्रकीर्तितः ॥
पुत्रैस्तु पितरो बाला देवैः प्रोक्तं मनौ स्मृतम् ॥ १२ ॥
विद्यावृद्धस्तपोवृद्धोयश्च वृद्धः प्रभावतः ॥
भवान् हुताशनाचार्यस्तस्मात्पूज्योजगत्सु वै ॥ १३ ॥
अथापि सत्संप्रदायमनुसृत्य भवादृशैः ॥
तीर्थानां मानने मान्या देवा विप्रास्तपोधनाः ॥ १४ ॥
विष्णुस्वामी शुकस्वामी वेदव्याससमावुभौ ॥
अद्वैताचार्यवर्यौ तौ भ्रातृभावं ततो गतौ ॥ १५ ॥
विष्णुस्वामिमते चाद्य भवानाचार्यतां गतः ॥
माननीयो न कस्यास्ति बालोपि महदासने ॥ १६ ॥

ओर मानकी अपेक्षा न करकें चन्द्रमौलिके दर्शनके लिये आप पधारे ये आपकी शोभा हे ॥ १० ॥ आप गृहस्थाश्रमी हें हम चतुर्थाश्रमी हें आप बालक हें हम वृद्ध हें तोबी आप मान्य हें जो वियासों वृद्ध होय वोही वृद्ध कह्यो गयो हे देवता पुत्रनने पितरनको बालकें कह्यो हे ये मनुमें कह्यो हे ॥ ११ ॥ १२ ॥ आप वियावृद्ध हें तपोवृद्ध हें प्रभावसों वृद्ध हें आप हुताशनाचार्य हें यासों जगत्में पूज्य हें ॥ १३ ॥ तोबी आप सत्सम्प्रदायकों आश्रित करकें तीर्थनकों ओर देवता ब्राह्मण तपस्वीनको मान देवें हें ॥ १४ ॥ विष्णुस्वामि शुकस्वामि ये दोनो वेदव्यासके समान हे ओर अद्वैतमतके आचार्य हे परस्पर भ्रातृभाव रखते हे॥ १५॥ विष्णुस्वामीजीके मतमें आपनें आचार्यताकों पायो हे बालक

यत्र श्रीशंकरार्याणां पट्टसिंहासनं स्थितम् ॥
श्रुत्वा श्रीवल्लभार्यस्य यतिराज समागमम् ॥ ३ ॥
सम्प्रेष्य विदुषस्तेषां कृतवांश्च समादरम् ॥
ततस्ते देवसदने सम्प्राप्तास्ते समादृता ॥ ४ ॥
चंद्रमौलेर्दर्शनं च कृत्वा चान्यद्दिवौकसम् ॥
देवालये समायातान् ददृशुस्ते यतीश्वरान् ॥ ५ ॥
एकदण्डधरान्मुण्डान् शुद्धान् काषायवासस ॥
नमोनारायणायेति नतिस्तत्र समीरिता ॥ ६ ॥
नारायणेति तत्रार्यै प्रत्याशीश्च निरूपिता ॥
समादृत्य यतीशेन देवस्याग्रे धरातले ॥ ७ ॥
उपविष्ट स्वय तत्र आचार्याश्चोपवेशिता ॥
जगद्गुरुर्नृसिंहार्यो वाक्यमेतत्तदाऽब्रवीत् ॥ ८ ॥
यूयं समागता भ्रातरस्माभिस्तन्नयच्छुतम् ॥
ततो नाऽकारिता नैवातिथ्यादिभ्य समर्चिता ॥ ९ ॥

वीके तीरमें तीर्थविधि करकें चन्द्रमौलिके देखवे की इच्छासों अपरान्हमें पधारे ॥२॥ जहाँ श्रीशंकराचार्यजीको सिंहासन हे वहाँ यतिराज श्रीमदाचार्यजीकों आगमन सुनकें विद्वाननको भेजकें आदर कियो ओर आप सुन्दर आदर पायकें देवालयमें पधारे वहाँ चन्द्रमौलिके दर्शन करकें देवालयमें आये भये सन्यासीनकों देखते भये ॥ ३॥४॥५ ॥ जो एक दण्ड धारण किये मुंडित शुद्ध गेरूसों रंगे वस्त्रधारे हे "नमोनारायणाय" ये कहकें उनको नमस्कार कियो ॥ ६ ॥ उननें "नारायण" ये कहकें आशीर्वाद देके देवके सामनें आदरसों विराजमान किये ओर आपभी जमीनपे बेठके जगद्गुरु नृसिंहाचार्य ये वाक्य बोले ॥७॥८॥के आप प्रात काल पधारे सो मेनें नहीं सुन्यो तासों आपकों आमन्त्रण नहीं भेज्यो न कछू आतिथ्य कियो ॥९ ॥

कामात्मता तु मनुना विहितापि निषिध्यते ॥
नारायणादिश्रुतिभिर्गीतादिस्मृतिभिस्तथा ॥ २४ ॥
अथवा कामतैवास्तु कामिनोपि विधीयते ॥
अकामः सर्वकामोवा मोक्षकामउदारधीः ॥ २५ ॥
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
एकमेवेश्वरं मध्ये कृत्वा ते पंचपूजकाः ॥ २६ ॥
पूजयंति तु यं कंचित् पंचपूजाफलं नु किम् ॥
पंचानामीशता नैव कथ्यते चेश्वरांगता ॥ २७ ॥
अंगिनः पूजने चांगपूजा किं नाम नो भवेत् ॥
परस्परमभेदाय यद्यद्वेषाय पूजनम् ॥ २८ ॥
नाभेदो भेदतः सिध्येन्नाद्वेषो द्वेषकारणात् ॥
एकः श्रयति राजानं मंत्रिणं किंकरं परे ॥ २९ ॥

ओर निष्काम परतिथिकों करें एसे बहोत शास्त्रनमें निष्काम गृही सुनें हें ॥ २३ ॥ मनुनें कामात्मताको विधान करकें पीछें निषेध कियो हे नारायणश्रुति तथा गीता आदिस्मृतीननेबी निषेध कियो हे ॥ २४ ॥ अथवा कामात्मताही रहे तोबी वो कामीनकों विहित हे अकाम हो वा सर्वकाम हो या मोक्षकाम हो उदारबुद्धिवारो बडे भक्तियोगसों परपुरुषकी सेवा करे ओर पंचपूजकबी एकही जा काई ईश्वरकों बीचमें करकें पूजा करें हें तो पंचपूजाको कहा फल हे पाँचनकों तो ईश्वर नहीं कहें हें किन्तु एकके सिवाय दूसरेनको अंग कहें हें ॥ २५ ॥ २६ ॥ २७ ॥ अंगीके पूजा करवेमें अंगनकी पूजा कहा नहीं होयहे जो परस्परके अभेदके लिये या मित्रताके लिये हे ॥ २८ ॥ तो भेदसों अभेद द्वेष कारणसों अद्वेष नहीं सिद्ध होयसके एक राजाकी सेवा करे हे दूसरे मन्त्री आदिकी तो उनके उनके भक्तनको विद्वेषको कारण यामें कहा हे ओर

अस्माभिः श्रूयते चैकदेवार्चावादसंभृते ॥
ब्राह्मणानां सदा योग्या सुब्रह्मण्ये निरूपिता ॥ १७ ॥
सा कथं पंचदेवार्चा धर्मशास्त्रे प्रदृश्यते ॥
तत एवास्मदाचार्यैः शिष्टैरन्यैः समादृता ॥ १८ ॥
शिवं भास्करमग्निं च केशवं कौशिकीमपि ॥
मनसा नार्चयन्याति स्वर्गलोकादधोगतिम् ॥ १९ ॥
इत्येवं बहुधा शास्त्रे नित्यताऽस्या विधीयते ॥
अद्वेषाय च सर्वेषां तथा कार्या मनीषिभिः ॥ २० ॥
इत्युक्ता यतिभिस्तत्र निजाचार्यास्तदाऽब्रुवन् ॥
पक्षोऽयं गृहिणां क्वापि परिशिष्टस्तु कामिनाम् ॥ २१ ॥
निष्कामानां हरेरेव पूजनं सर्वसंमतम् ॥
गृहिणः कामिनः सर्वे इति वक्तुमशक्यते ॥ २२ ॥
कामी तूपवसेत्पूर्वां निष्कामस्तु परां तिथिम् ॥
इत्येवं बहुधा शास्त्रे निष्कामा गृहिणः श्रुताः ॥ २३ ॥

थी मठे आसनको प्राप्त कोनकों माननीय नहीं होय हे ॥ १६ ॥ हमने सुन्यो हे के आपनें सुब्रह्मण्यक्षेत्रमें एकदेवार्चावाद स्थापन कियो हे के येही सदा ब्राह्मणनको योग्य हे ॥ १७ ॥ तो पंचदेवकी पूजा धर्मशास्त्रमें केसे दीसे हे ताहीसों हमारे आचार्यननें ओर शिष्यननें ताको आदर कियो हे ॥ १८ ॥ शिव, सूर्य, अग्नि, केशव, कौशिकी, ( देवी ) इनको जो मनसों पूजा नहीं करेहे वो स्वर्गसों अधोगतिकों पावे हे ॥ १९ ॥ एसे बहोत शास्त्रनमें पंचपूजाकी नित्यता हे ओर सबकी प्रसन्नताके लियें बुद्धिमाननको एसेंही करनो चाहिये ॥ २० ॥ एसे यतीनके कहवेपे भीम दाचार्यजी बोले जो ये पक्ष कामनावारे गृहस्थनको कहीं दीसे हे ॥ २१ ॥ ओर निष्काम मनुष्यनको तो हरिको पूजन सर्वसम्मत हे सब गृहस्थ सकाम हें ये नहीं कहसके हे ॥ २२ ॥ कामीतो पूर्वतिथिको उपवास कर

कामात्मता तु मनुना विहितापि निषिध्यते ॥
नारायणादिश्रुतिभिर्गीतादिस्मृतिभिस्तथा ॥ २४ ॥
अथवा कामतैवास्तु कामिनोपि विधीयते ॥
अकामः सर्वकामोवा मोक्षकामउदारधीः ॥ २५ ॥
तीव्रेण भक्तियोगेन यजेत पुरुषं परम् ॥
एकमेवेश्वरं मध्ये कृत्वा ते पंचपूजकाः ॥ २६ ॥
पूजयंति तु यं कंचित् पंचपूजाफलं नु किम् ॥
पंचानामीशता नैव कथ्यते चेश्वरांगता ॥ २७ ॥
अंगिनः पूजने चांगपूजा किं नाम नो भवेत् ॥
परस्परमभेदाय यद्यद्वेषाय पूजनम् ॥ २८ ॥
नाभेदो भेदतः सिध्येन्नाद्वेषो द्वेषकारणात् ॥
एकः श्रयति राजानं मंत्रिणं किंकरं परे ॥ २९ ॥

ओर निष्काम परतिथिकों करें एसे बहोत शास्त्रनमें निष्काम गृही सुनें हें ॥ २३ ॥ मनुनें कामात्मताको विधान करकें पीछें निषेध कियो हे नारायणश्रुति तथा गीता आदिस्मृतीननेबी निषेध कियो हे ॥ २४ ॥ अथवा कामात्मताही रहे तोबी वो कामीनकों विहित हे अकाम हो वा सर्वकाम हो या मोक्षकाम हो उदारबुद्धिवारो बडे भक्तियोगसों परपुरुषकी सेवा करे ओर पंचपूजकबी एकही जा काई ईश्वरकों बीचमें करकें पूजा करें हें तो पंचपूजाको कहा फल हे पाँचनकों तो ईश्वर नहीं कहें हें किन्तु एकके सिवाय दूसरेनको अंग कहें हें ॥ २५ ॥ २६ ॥ २७ ॥ अंगीके पूजा करवेमें अंगनकी पूजा कहा नहीं होयहे जो परस्परके अभेदके लिये या मित्रताके लिये हे ॥ २८ ॥ तो भेदसों अभेद द्वेष कारणसों अद्वेष नहीं सिद्ध होयसके एक राजाकी सेवा करे हे दूसरे मन्त्री आदिकी तो उनके उनके भक्तनको विद्वेषको कारण यामें कहा हे ओर

तत्तद्भक्तजनानां हि किं तु विद्वेषकारणम् ॥
अभेदे तु सुराणां वा एकस्मिन्नपि चार्चिते ॥ ३० ॥
सर्वे समर्चितास्ते स्युर्यथैवैक्यात्प्रचेतसाम् ॥
व्यासोक्तेर्लाघवात्सूत्रादेक एवेश्वरो मत ॥ ३१ ॥
पृथक्पूजा नास्ति शास्त्रे दर्शनाना विभेदत ॥
शैव च वैष्णव शाक्त सौरं गाणपतं तथा ॥ ३२ ॥
स्कांद च भक्तिमार्गस्य दर्शनानि पृथक् पृथक् ॥
इत्थं पुराणसारोक्त्या पुष्पदंतोक्तितस्तथा ॥ ३३ ॥
पृथक्पृथक्दर्शनानि चान्यत्राप्येवमेव हि ॥
यथा शिवरहस्येऽथ शैवे लैङ्गे पराशरे ॥ ३४ ॥
निषिध्यैव परेशार्चां महेशार्चा विधीयते ॥
एव विष्णुरहस्यादौ विष्णुधर्मोत्तरे तथा ॥ ३५ ॥
पचरात्रे भागवते विष्णोरर्चाऽभिधीयते ॥
सौरे गाणपते शाक्त एकार्चा बहुशोरुता ॥ ३६ ॥

अभेदमें तो एकहीके पूजनमें सबको पूजन होयजाय है जैसे प्रचेतानकी एकतासों सबको होय भाय है व्यासजीके वचननसों सूत्रनसों लाघवसों एकही ईश्वर मान्य है ॥ २९ ॥ ३० ॥ ३१ ॥ ओर पृथक पूजा शास्त्रमें नहीं है किन्तु दर्शननके भेदसों शैव, वैष्णव, शाक्त, सौर, गाणपत, स्कान्द, ये भक्तिमार्गके भेद हैं एसे पुराणसारकी उक्तिसों तथा पु[illegible]न्तकी उक्तिसों अलग २ दर्शन हैं ओरभी ठिकानें कह्यो है जैसे शिवरहस्यमें ओर शिव, लिङ्ग, आदि पुराणनमें दूसरेनको पूजन निषेध करके शिवकी अर्चाको विधान है याहीप्रकार विष्णुरहस्य आदिमें विष्णुधर्मोत्तरमें पचरात्र श्रीमद्भागवतमें विष्णुकी अर्चाको विधान है सौर गाणपत, शाक्त, इनमें भी भाय एकही देवकी पूजाको विधान है ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥

नियमः पंचपूजायाः भारतादौ न दृश्यते ॥
दृश्यते बहुतीर्थेषु यज्ञेषु च व्रतेषुच ॥ ३७ ॥
पूजनं चैकदेवस्य पंचानां नियमः कुतः ॥
क्वचित्तु बहवो मान्या एकद्वित्रिचतुर्मुखाः ॥ ३८ ॥
पंचानां नियमो नास्ति धर्मशास्त्रसमीक्षणे ॥
एको विष्णुः शिवो द्वौ तौ त्रयो ब्रह्मेशाविष्णवः ॥ ३९ ॥
चतुर्थो मिहरः शक्तिर्गणेशश्चेत्त्यनेकधा ॥
ब्रह्माणं पूजयेन्नित्यं तापिनं नित्यमर्चयेत् ॥ ४० ॥
इत्येवं विधिवाक्यानि स्मृतिग्रंथेषु किं नहि ॥
कूर्मे ब्रह्मा महादेवो विष्णुर्विश्वेश्वरः परः ॥ ४१ ॥
एकस्य मूर्तयस्तिस्रः स्मृताः कार्यवशात्प्रभोः ॥
तस्मात्सर्वप्रयत्नेन त्रयः पूज्यास्सदा नृभिः ॥ ४२ ॥
पूजयेद्भावयुक्तेन यावज्जीवं प्रतिज्ञया ॥
तथा भविष्ये पूजैका विरंचेरभिधीयते ॥ ४३ ॥

॥ ३६ ॥ पंचपूजा भारतआदिमेंबी नहीं दीखे हे तीर्थ यज्ञ व्रत इन सबमें एकही देवको पूजन देखें हें कहीं बहुतनकी एकमुख,द्विमुख,त्रिमुख, चतुर्मुख, इनकी मान्यता लिखी हे ॥ ३७ ॥ ३८ ॥ धर्मशास्त्रके देखवेमें पाँचनको कछू नियम नहीं हे एकविष्णु, दो विष्णुशिव, तीन विष्णु शिव ब्रह्मा, सूर्य चौथे पाँचवी शक्ति छठे गणेश एसे अनेक हें ब्रह्माको पूजन नित्य करे सूर्यको पूजन करे ॥ ३९ ॥ ४० ॥ एसे स्मृतिवाक्यनमें वचन हें तासों पाँचनको नियम नहीं ये सिद्ध भयो कूर्ममें एक प्रभुकी कार्यवशसों तीन मर्ति कहीं हें तासों सब प्रयत्ननसों ये तीनों सदा मनुष्यनके पूजन करवे योग्य हें ॥ ४१ ॥ ४२ ॥ जबताईं जीवे तबताईं प्रतिज्ञा करकें भावसों पूजा करे याहीप्रकार भविष्यमें एक ब्रह्माहीको पूजन लिख्यो हे

पितामहः स देवानां भूतानां च पितामहः ॥
तस्मादयं सदा पूज्यो यतो लोकगुरुः परः ॥ ४४ ॥
यो न पूजयते भक्त्या सुरश्रेष्ठं चतुर्मुखम् ॥
न स नाकस्य राज्यस्य न स मोक्षस्य भाजनम् ॥ ४५ ॥
यस्तु पूजयते भक्त्या विरंचिं कमलासनम् ॥
स नाकराज्यमोक्षाणां क्षिप्रं भवति भाजनम् ॥ ४६ ॥
वरं देहपरित्यागो वरं नरकसंभवः ॥
न चासंपूज्य भुंजीत देवं वै पद्मसंभवम् ॥ ४७ ॥
ब्रह्माणं द्वेष्टि यो मोहात्सर्वदेवनमस्कृतम् ॥
नरो नरकगामी स्यात्तस्य संभाषणादपि ॥ ४८ ॥
सा भवद्भिः कुतस्त्यक्ता पंचपूजा विधीयते ॥
का पूजा कश्च संपूज्यः के च पूजाधिकारिणः ॥ ४९ ॥
कथं सा क्रियते पूजा पूजनस्य फलं नु किम् ॥
अत्रार्थे बहवो वादास्तत्र किंचित्प्रदृश्यते ॥ ५० ॥
त्यागो हि देवतोद्देशात्पूजाद्रव्यस्य कथ्यते ॥
पशुसोमादिसंघाते राजसूयप्रयोगवत् ॥ ५१ ॥

ब्रह्मा देव और सब प्राणीनके पितामह हैं तासों ये सदा पूज्य हैं ॥ ४३ ॥ ॥ ४४ ॥ जो भक्तिसों चतुर्मुखको पूजन नहीं करे हे वो स्वर्ग राज्य और मोक्षको पात्र नहीं जो भक्तिसों पूजे हे वोही स्वर्ग राज्य मोक्षको पात्र होय हे ॥ ४५ ॥ ४६ ॥ देह छोडदेनो वा नरकमें पात होनो श्रेष्ठ हे परन्तु ब्रह्माजीकी विना पूजा किये भोजन करनो उचित नहीं ॥ ४७ ॥ जो ब्रह्माजीको मोहसों द्वेष करे हे वाके संग भाषणमात्रसों मनुष्य नरकगामी होय हे ॥ ४८ ॥ तो ब्रह्माजीकी पूजाको आपने क्यों त्याग कियो हे और पंचपूजाको विधान करो हो पूजा कहा हे पूज्य कोन हे और कोन पूजाके अधिकारी हैं ॥ ४९ ॥ केसें करी जाय हे कहा फल हे यामें बहोत वाद हैं तामें कछू कहे हैं ॥ ५० ॥ देवताके उद्देश्यसों

देवता पूज्यते सा तु मंत्ररूपेति तांत्रिकाः ॥
ईशात्मिका चेतनैव सेति चोत्तरतांत्रिकाः ॥ ५२ ॥
स्ववर्णाश्रमधर्मस्था निष्पापाश्चाधिकारिणः ॥
गुणभेदेन भिन्नास्ते कामिनो वाप्यकामिनः ॥ ५३ ॥
विधिना क्रियते पूजा वेदतंत्रप्रयोगतः ॥
कायेन मनसा वाचाचोपचारैस्तु तादृशैः ॥ ५४ ॥
भुक्तिर्मुक्तिः फलं तत्र श्रद्धा भक्तिश्च साधनम् ॥
शास्त्राज्ञास्वेव विश्वासः श्रद्धा सा परिकीर्तिता ॥ ५५ ॥
माहात्म्यज्ञानजा प्रीतिर्भक्तिः सा समुदाहृता ॥
श्रद्धापूर्वास्तु वै धर्मा मनोरथफलप्रदाः ॥ ५६ ॥
श्रद्धया साध्यते सर्वं श्रद्धया तुष्यते हरिः ॥
यत्किंचित्क्रियते कर्म श्रद्धयाप्यणुमात्रकम् ॥ ५७ ॥
तन्महज्जायते पुंसां शाश्वतं प्रीतिदायकम् ॥
यथा समस्तलोकानां जीवनं सलिलं स्मृतम् ॥ ५८ ॥

द्रव्यके त्यागको पूजा कहें हें पशुसोमके समुदायमें राजसूयके जेसो ॥ ५१ ॥ तान्त्रिक मंत्ररूप देवता कहें हें ओर वो ईशरूप चेतन हे ये उत्तरतांत्रिक कहें हें॥ ५२ ॥ अपने वर्णाश्रमधर्ममें रहवेवारे पापरहित अधिकारी हें गुणभेदसों कामी अकामी वे भिन्न २ हें ॥ ५३ ॥ वेद-तंत्र प्रयोगसा विधिसों देह मन वाणीकरकें ओर उपचारनसों जो पूजा करी जाय हे ताको भोग मोक्ष फल हे ओर भक्ति श्रद्धा साधन हें शास्त्रके वचन ओर गुरुकी आज्ञामें विश्वास करनो याको नाम श्रद्धा हे ॥ ५४ ॥ ॥ ५५ ॥ माहात्म्यज्ञान जानकें जो प्रीति करनी ताको नाम भक्ति हे श्रद्धापूर्वकधर्मही फलके देवेवारे होय हें ॥ ५६ ॥ श्रद्धाहीसों सब सिद्ध होय हे श्रद्धाहीसों हरि प्रसन्न होय हें श्रद्धासों जो कछू थोरो कर्म करे वोबी बहोत ओर बडे फलको देवेवारो हे जेसे सब प्राणीनको

तथा समस्तसिद्धीनां जीवन भक्तिरिष्यते ॥
आराधन तु यद्वत्तस्या कायेन वचसा धिया ॥ ५९॥
तदन्यत्पूजनं नैतत्पूजा तस्यांगमिष्यते ॥
पूजांगमपि या भक्ति कर्मांगमपि सा स्मृता ॥ ६० ॥
भक्तिस्तुसापरा प्रोक्ता परा प्रेमैकलक्षणा ॥
तत्र पूज्यस्वरूप तु नारदीये निरूपितम् ॥ ६१ ॥
नारायणोऽक्षरोनंत सर्वव्यापी निरंजन
तेनेदमखिलं व्याप्त जगत्स्थावरजंगमम् ॥ ६२ ॥
आदिसर्गे महाविष्णुः स्वप्रकाशो जगन्मय ॥
गुणभेदमधिष्ठाय मूर्तित्रित्वमवाप्तवान् ॥ ६३ ॥
सृष्ट्यर्थमसृजद्देवो दक्षिणांगात्प्रजापति ॥
मध्ये रुद्राक्षमीशान जगदंतकरं मुने ॥ ६४ ॥
पालनायास्य जगतोवामांगाद्विष्णुमव्ययम् ॥
आदिसर्गे महाविष्णुरेवं त्रित्वमवाप्तवान् ॥ ६५ ॥

जीवन जल हे एसेही सब सिद्धीनको जीवन भक्ति हे भक्तिसों देह मन वाणीसों जो सेवा हे वो मुख्य हे पूजा वाको अंग हे ये पूजांग जो भक्ति हे वो कर्मांग हे ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६०॥ वो अपरा भक्ति हे प्रेमैकलक्षणा भक्ति परा हे तामें पूज्य स्वरूप नारदीयपुराणमें कह्यो हे ॥ ६१ ॥ अक्षर अनन्त सर्वव्यापी निरंजन नारायणसों ये चराचर सब व्याप्त हे ॥ ६२ ॥ सो सृष्टिके आदिमें स्वप्रकाश जगद्रूप महाविष्णु गुण भेदको आश्रय करके तीन मूर्ति धारण करते भये ॥ ६३ ॥ सृष्टिकी रक्षाके लिये दक्षिणांगसों प्रजापतिको मध्यसों जगतके प्रलयकारी ईशान रुद्रको ॥ ६४ ॥ ओर जगतके पालनके लिये वामांगसों विष्णुको एसे सृष्टिके आदिमें महाविष्णुही तीनरूपनको धारण कियो॥ ६५॥

तमादिदेवमजरं केचिद्रुद्रं वदंति वै ॥
केचिच्च विष्णुमपरे धातारं ब्रह्म चापरे ॥ ६६ ॥
तस्य शक्तिः परा विष्णोर्जगत्कार्यपरिक्षमा ॥
भावाभावस्वरूपा सा विद्याविद्येति गीयते ॥ ६७ ॥
प्रकृतिश्चापरा चेति वदंति परमर्षयः ॥
एष देवः सदा पूज्यः सर्वदेवमयो ह्ययम् ॥ ६८ ॥
किं तु कामविशेषेण मात्स्यादौ पूजनं रुतम् ॥

मात्स्ये ।

आरोग्यं भास्करादिच्छेद्धनमिच्छेद्धुताशनात् ॥ ६९ ॥
ज्ञानं च शंकरादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥

देवीपुराणे ।

योगोज्ञानं यशः सिद्धिर्महादेवादवाप्यते ॥ ७० ॥
आरोग्यं सांप्रतं पुत्रं भास्करात्प्राप्यते ध्रुवम् ॥
गतिमिष्टां तथा कामं प्रददाति त्रिविक्रमः ॥ ७१ ॥
धर्मार्थकाममोक्षाणां भाजनं विष्णुपूजकः ॥
सर्वान्कामानवाप्नोति संपूज्य विष्णुवल्लभाम् ॥ ७२ ॥

उन्हीं आदिदेवकों कोई रुद्र कहें हें दूसरे विष्णु कहें हें तीसरे ब्रह्मा कहें हें ॥ ६६ ॥ उन्हीं विष्णुकी जगत्कार्यकरवेमें समर्थ भावाभावस्वरूपशक्तिकों विद्या अविद्या कहें हें ॥ ६७ ॥ कोई परमर्षि प्रकृति कहें हें एसे ये देव सदा पूज्य सर्व देवमय हें ॥ ६८ ॥ ओर कामनाविशेषसों दूसरे देवतानकोबी पूजन मत्स्यपुराणमें कह्यो हे आरोग्य सूर्यसों धन अग्निसों ज्ञान शंकरसों मोक्ष जनार्दनसों योग ज्ञान यश सिद्धि महादेवसों मिलें हें ॥ ६९ ॥ ७० ॥ सूर्यकी उपासनासों निश्चय आरोग्य ओर पुत्र मिले हे त्रिविक्रम इष्टगति देवे हें ॥ ७१ ॥ विष्णुको पूजन करवेवारो धर्म अर्थ काम मोक्ष इनको पात्र होय हे ओर

विघ्नो न जायते तस्य यजेद्यस्तु विनायकम् ॥
मातृगणान्महासिद्धिं सर्वेषामेव जायते ॥ ७३ ॥
लभते धनधान्यानि मर्त्यं सपूज्य चानलम् ॥
स्वर्गापवर्गसंसिद्धिर्दुर्गायागात्प्रजायते ॥ ७४ ॥
तत्र विष्णुपूजोत्कृष्टेत्युक्तं कूर्मपुराणे ।
न विष्ण्वाराधनात्पुण्यं विद्यते कर्म वैदिकम् ॥
तस्मादनादिमध्यांतं नित्यमाराधयेद्धरिम् ॥ ७५ ॥

गारुडे ।

विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकर ॥
तस्मात्पूज्यतमं नान्यमहं मन्ये जनार्दनात् ॥ ७६ ॥

श्रीभागवते ।

यथा तरोर्मूलनिषेचनेन तृप्यति तत्स्कंधभुजोपि शाखाः ॥
प्राणोपहाराच्च यथेन्द्रियाणां तथैव सर्वार्हणमच्युतेज्या॥ ७७॥

लक्ष्मीको पूजन करवेवारो सबकामनकों पावे हे ॥७२॥ गणेशके पूजन करवेवारेको विघ्न नहीं होय हे मातृगणनसों महासिद्धि सबको मिले हे ॥७३॥ धन धान्य अग्निके पूजनसों स्वर्गमोक्षकी सिद्धि दुर्गाके पूजनसों होय हे ॥ ७४ ॥ कूर्मपुराणमें विष्णुकी पूजाकी श्रेष्ठता लिखी हे विष्णुके आराधनसों पुण्य कोईभी वैदिक कर्म नहीं हे तासों उन आदिमध्यअन्तरहित हरिको नित्य आराधन करे ॥ ७५ ॥ "गरुडपुराणमें" ब्रह्मा रुद्र दिवाकर ये विष्णुही हें तासों जनार्दनकों छोडके कोईको अतिपूज्य में नहीं मानूं हूं ॥ ७६ ॥ श्रीभागवतमें, जेसे वृक्षके मूलके सींचवेसों वाकी शाखा डाली सब तृप्त होयजांय हें ओर प्राणके तृप्तीसों सब इन्द्रिय वेसेही सम्प्र-

अन्यपूजानिषेधोपि श्रीगीतासु ।

कामैस्तैस्तैर्हृतज्ञानाः प्रपद्यंतेऽन्यदेवताः ॥
तं तं नियममास्थाय प्रकृत्या नियताः स्वया ॥ ७८ ॥
अंतवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् ॥
देवान् देवयजो यांति मद्भक्ता यांति मामपि ॥ ७९ ॥
आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन ॥
मामुपेत्य तु कौंतेय पुनर्जन्म न विद्यते ॥ ८० ॥
सर्वधर्मान् परित्यज्य मामेकं शरणं व्रज ॥
अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि माशुचः ॥ ८१ ॥

श्रीभागवते ।

मुमुक्षवोघोररूपान् हित्वा भूतपतीनथ ॥
नारायणकलाः शांता भजंति ह्यनसूयवः ॥ ८२ ॥
रजस्तमःप्रकृतयः समशीला भजंति वै ॥
पितृभूतप्रजेशादीन् श्रियैश्वर्यप्रजेप्सवः ॥ ८३ ॥

तसेवासों सबको पूजन होयजाय हे एसो लिख्यो हे ॥ ७७ ॥ दूसरेनकी पूजाको निषेध "श्रीगीताजीमें" कामनानसों जिनको ज्ञान हरजाय हे वे दूसरे देवतानकों प्राप्त होय हें ओर उनके २ नियमनकों करें हें ॥ ७८ ॥ परन्तु उन अल्पबुद्धीनको वो फल नाशवारो होय हे ओर उन्हीं देवतानको प्राप्त होंय हें ओर मेरे भक्त मोकों पावें हें ॥ ७९ ॥ ब्रह्मलोकपर्यन्त सब विनाशी हें ओर हे अर्जुन मोंकों पायकें पीछें जन्म नहीं पावे हे ॥ ८० ॥ सबधर्मनको छोडके मेरी शरण आवो में तुमको सबपापनसों छुटाऊँगो ॥ ८१ ॥ "श्रीभागवतमें" मोक्षकी इच्छा करवेवारे घोररूपभूतपतिनकों छोडकें शान्त होयकें मोकों भजें हें॥ ८२॥ रजोगुणी ओर तमोगुणी लक्ष्मी ऐश्वर्य पुत्रकी इच्छासों पितर भूत प्रजेशादिकनको भजन करें हें ॥ ८३ ॥

एवमेकार्चनं विष्णो' शास्त्रेषु बहुधोच्यते ॥
विद्वेषे तत्र किं मूलं निर्मूलमिव भाति न ॥ ८४ ॥
यत्तु श्रीशंकराचार्यैः पंचपूजा प्रचारिता ॥
तत्र मूलमिदं भाति श्रूयते च महन्मुखात् ॥ ८५ ॥
यदा बौद्धमते राजाह्यशोकश्चक्रवर्त्यभूत् ॥
प्रवृत्तं शासनं तस्याप्यतिम मनुशासने ॥ ८६ ॥
तथागतमतेचागामहं राजा तथा प्रजा ॥
मदीया संप्रवर्तेतां त्यक्त्वा धर्मांतरं निजम् ॥ ८७ ॥
ततस्तु दु खिता लोका' श्रुत्वा तच्चोग्रशासनम् ॥
निर्वाह्यो गृहिभिर्धर्म' कथं राजनि दु:खदे ॥ ८८ ॥
बहवस्त्वत्यजन् धर्मं केचिद्धर्मपरा जना' ॥
त्यक्त्वा गृहान् वनचरा जाता धर्मरिरक्षया ॥ ८९ ॥
स्वं स्व देवं समाश्रित्य तत्तल्लिंगं दधव्रता ॥
आशासाना' स्वधर्मस्य प्रचारं वैदिकस्य च ॥ ९० ॥

ऐसेही शास्त्रनमें प्रायः विष्णुही एक देवताको पूजन कह्यो है और द्वेष करवेमें कछू मूल नहीं है ॥ ८४ ॥ और जो श्रीशंकराचार्यजीने पंचदेवताको पूजन प्रचार कियो है तामें ये मूल जानपडे है और बडेनके मुखसों सुन्योभी है ॥ ८५ ॥ के जब बौद्धमतको अशोक राजा चक्रवर्ति भयो तब वाकी आज्ञा प्रचलित भई ॥ ८६ ॥ वाने कह्यो के हम बौद्धमतके हैं प्रजाकोभी दूसरे धर्मनकों छोडकें वोही पालनो चहिये जैसे राजा वैसी प्रजा ॥ ८७ ॥ तब ऐसो ताको कठोर शासन सुनकें प्रजा बडी दुःखी भई और कहवेलगी के दु खदायी राजाके होयवेपे गृहस्थ कैसे अपने धर्मनको निर्वाह करे ॥ ८८ ॥ बहुतननें तो धर्मकों छोड दीनो कोई धर्मकी रक्षाके लियें घरनकों छोडकें वनमकों चलेगये ॥ ८९ ॥ अपनें२ देवनके चिन्हनको आश्रय करकें वैदिकधर्मके प्रचारकी आशामें पुभ

आशायामेव पंचत्वं पुत्रपौत्रैः समन्विताः ॥
तत्संतानप्रसूतैस्तु चिराद्धर्मोऽपि विस्मृतः ॥ ९१ ॥
पुस्तकानामलाभेन पंडितानामभावतः ॥
ते लिंगवृत्तयो जाता विरुद्धाश्च परस्परम् ॥ ९२ ॥
ततस्तु शंकरः साक्षादवतीर्णः स शंकरः ॥
भयंकरस्तु बौद्धानां स्वानां क्षेमंकरो यमी ॥ ९३ ॥
बौद्धान्निर्जेतुकामोऽसौ विरुद्धान्वीक्ष्य वैदिकान् ॥
अन्योन्यसंधये तत्र पंचपूजा प्रवर्तिता ॥ ९४ ॥
न तु सिद्धांततस्तस्य दृश्यतेभिमता क्वचित् ॥
स तु नारायणासक्तो गीतादिग्रंथवर्णनात् ॥ ९५ ॥
मंगलाचरणादस्य स्तोत्रग्रंथैः स्वधर्मतः ॥
न्यासिनो वैष्णवाः प्रायो विष्णुलिंगं च तत्स्मृतम् ॥ ९६ ॥
व्रजामि शरणं विष्णोरित्त्येवं तत्कृतौ स्मृतम् ॥
मुरारिं वा पुरारिं वा धातारं वा यथारुचि ॥ ९७ ॥
पूजयंतु जनास्तेभ्यो वारयामो न वै वयम् ॥
सत्वात्संजायते ज्ञानं सत्वमूर्तिर्हरिः स्वयम् ॥ ९८ ॥

पौत्रनके सहित मरगये ओर उनकी संतान बहोत काल होयवेसों धर्मकोवी भूलगई ॥ ९० ॥ ९१ ॥ पुस्तक ओर पंडितनके न रहवेसों परस्पर विरुद्ध लिंगी होयगये ॥ ९२ ॥ तब साक्षात् शंकरनें अवतार लीनो जो बौद्धनके भय करवेवारे ओर अपनेनके सुखकारी भये ॥ ९३ ॥ बौद्धनके जीत-वेकी इच्छासों विरुद्ध वैदिकनकों देख उनके आपसमें मेलके लिये पंचपूजा चलाई ॥ ९४ ॥ ओर आप तो नारायणके भक्त हे इनके गीतादिकग्रन्थ-नके व्याख्यानसों मंगलाचरणसों स्तोत्रनसों ग्रन्थनसों ये बात स्पष्ट हे ओर संन्यासी प्रायः वैष्णव होय हें उनको विष्णुचिह्न हे ॥ ९५ ॥ ९६ ॥ में विष्णुके शरण जाऊँ हूँ एसो उनकी पद्धतिमें लिख्यो हे विष्णु शिव ब्रह्मा आदिमेंसों

तस्मात्संपूजयेद्विष्णु यदीच्छेत्परमां गतिम् ॥
ईश्वरार्चनत श्रेय सर्वैक कोपि संमत ॥ ९९ ॥
यूय भजध्व बहुभि किमित्येतद्वदाम्यहम् ॥
श्रुत्वैतद्वचन तेषा रागद्वेषविवर्जितम् ॥ १०० ॥
यतिराट् सप्रसन्नात्मा जगाद वचन पुन ॥
एकदेवार्चनं वास्तुचास्तु वानेकपूजनम् ॥ १०१ ॥
आनन्दमयसूत्रस्य व्याख्यान श्राव्यता मम ॥
ततस्तु श्रीमदाचार्यो प्रथम तन्मतानुगम् ॥ १०२ ॥
ऊचुर्वरणकैर्भिन्न पद्मपादादिसंमतम् ॥
विष्णुस्वामिमतेनाह पुनरेतत्सविस्तरम् ॥ १०३ ॥
ब्रह्मवित्परमाप्नोति तैत्तिरीयश्रुतौ रुतम् ॥
कोब्रह्मवित्पर कश्च कोवर किं फल पुन ॥ १०४ ॥
तत परमुखेनाह चेयाभ्युक्तेति गीः श्रुते ॥
सत्यं ज्ञानमनतं यत्तद्ब्रह्मेति निरूप्यते ॥ १०५ ॥

यथारुचि कोईकोंबी पूजा करो हम रोके नहीं हे परन्तु सतोगुणसे ज्ञान उत्पन्न होय हे सत्वमूर्ति स्वय हरि हे ॥ ९७ ॥ ९८ ॥ यातें जो परगति चाहे तो विष्णुकी पूजा करे ईश्वरकी सेवासों कल्याण होय हे ये एक हैं कोई वी रहें ॥ ९९ ॥ ओरजो आप बहुतनकों भजो हो सो कहा हे एसे रागद्वेषसों रहित श्रीमदाचार्यजीके वचननको सुनके यतिराज प्रसन्न होयके पीछें बोले के एकदेवको पूजन हो वा अनेकको हो ॥ १०० ॥ १०१ ॥ अब " आनन्दमयो ऽभ्यासात " या सूत्रको व्याख्यान सुनाइये तब श्रीमदाचार्यजीनें पहले उनके मतके पद्मपादाचार्यादिकनके सम्मत अर्थको सुनायो पीछें अपने विष्णुस्वामिमतसें सविस्तर सुनायो ॥ १०२ ॥ १०३ ॥ तैत्तिरीयश्रुतिमें लिख्या हे जो ब्रह्मको जानवेवारो परमात्माको पावे हे तो कौन ब्रह्मवित् हे कौन पर हे कौन अवर हे कहा फल हे ॥ १०४ ॥ " सत्यज्ञान

तज्ज्ञानात्सर्वकामाप्तिः परब्रह्मात्मना भवेत् ॥
परावरत्वमेकस्य रमणेच्छा निरूपिता ॥ १०६ ॥
परस्तु परमानन्दो गणितानंदकोऽवरः ॥
ब्रह्मात्मा द्विविधः सोऽयं भक्त्या ज्ञानेन लभ्यते ॥ १०७ ॥
ज्ञानप्राप्त्यै भृगोराख्या तपोब्रह्मैव साधनम् ॥
तपसावगतानां स्यादन्नप्राणमनोधियाम् ॥ १०८ ॥
कथमब्रह्मता तेषां जगद् ब्रह्मात्मकं खिलम् ॥
देहाद्यन्नादिमूर्त्तिश्च तत्तत्कामोपबृंहिता ॥ १०९ ॥
गणितानन्दब्रह्मस्था परानन्दमयाऽऽप्यते ॥
सा पूर्णानन्दरूपातः फलरूपा निगद्यते ॥ ११० ॥
नातः परं श्रूयतेऽत्र फलप्राप्तिः स्फुटा श्रुतौ ॥
स्तुतौ मयस्ततोऽभ्यास आनंदस्य प्रपाठके ॥ १११ ॥
द्व्यचोमयड्विकारेस्यात् त्र्यचो नेति नियम्यते ॥
इत्थं व्याकुर्वतामग्रे नेत्थं प्राह यतीश्वरः ॥ ११२ ॥

मनन्तं ब्रह्म" यासों कह्यो भयो ब्रह्म हे ताके ज्ञानसों सर्वकी प्राप्ति होय हे ताहीकी रमणकी इच्छा निरूपण करी हे परमानन्द पर हे गणितानन्द अवर हे वो ब्रह्मात्मा ज्ञान ओर भक्तिसों मिले हे ॥ १०५ ॥ १०६ ॥ ॥ १०७ ॥ ज्ञान प्राप्तिके लिये भृगुकी आख्या हे तपही ब्रह्मको साधन हे तपसों जाने गये जो अन्नमयादिक हें उनको अब्रह्मता केसे हे जगतही ब्रह्मात्मक हे देहादिक जो अन्नादि मूर्ति हें वे कामके लियें हें गणितानन्दमें रहकेवी ताकी पर ब्रह्मता हे ओर वो पूर्णानन्द रूप हें तासों फल रूप हें ॥ १०८ ॥ १०९ ॥ ११० ॥ यातें पर श्रुतिमें फलप्राप्ति दूसरी नहीं हे येही प्रपाठकमें हे द्व्यच्सों विकारार्थक मयट् होय हे त्र्यच्सों नहीं एसो नियम होय हे एसे [illegible]

व्यचश्छन्दसि सूत्र तु विध्यर्थं न नियामकम् ॥
मृद्विकारघटादौ य आकाशो मरितो भवेत् ॥ ११३ ॥
स तद्विकारएवैवमानंद कोशसभृत ॥
तथा नियमपक्षेपि सिध्यत्येव विकारता ॥ ११४ ॥
यथाहेतुमनुष्येभ्यः सूत्राद्धेत्वनुवर्तने ॥
हेत्वर्थानदशब्दाच्चावगतार्थे विधौ मयट् ॥ ११५ ॥
आनन्दमयशब्दोऽय ज्ञेयो ह्यन्नमयादिवत् ॥
इत्युक्त यतिराजेनास्मदाचार्यास्तदा जगु ॥ ११६ ॥
नियमार्थं हि तत्सूत्र हेत्वर्थोऽत्र न सभवेत् ॥
उपादाननिमित्ताभ्यां स द्विधा प्रकृते तु क ॥ ११७ ॥
अनुवृत्तिर्भाष्यकारादिभि कुत्र निरूपिता ॥
न वृत्तिकारे सा प्रोक्ता भवद्भि प्रोच्यते कथम् ॥ ११८ ॥
प्राचुर्यार्थे मयट् सूत्रकारेणैव निरूपित ॥
प्राचुर्यस्य तु यद्भाष्येऽपरसत्तावबोधनम् ॥ ११९ ॥

बोले के एसो नहीं "द्वयचश्छन्दसि" ये सूत्र तो विध्यर्थक है नियामक नहीं है मृद्विकारघटादिकनमें जो आकाश है वो वाको विकारही है याही-प्रकारको संभृत आनन्द है तो नियमपक्षमेंभी विकारता सिद्ध होय है ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ "यथाहेतु" या सूत्रसों हेतुकी अनुवृत्ति है हेत्वर्थक आनन्दशब्दसों विधिमें मयट् है ॥ ११५ ॥ आनन्दमय शब्दभी अन्नमयशब्दके जेसो है एसे यतिराजके कहवेपे भीम-राचार्यजी बोले ॥ ११६ ॥ जो वो सूत्र नियमार्थकही है हेतुअर्थकी सम्भावना नहीं है उपादाननिमित्तसों दो भांतकोहे तो प्रकृतमें यहाँ कहा है ॥ ११७ ॥ भाष्यकारादिकननें अनुवृत्ति कहाँ कही है न वृत्तिकारनें कही ॥ ११८ ॥ ओर सूत्रकारहीनें प्राचुर्यअर्थमें मयट् कह्यो है प्राचुर्यको

अभिप्रेतं न तद्युक्तं प्रकाशप्रचुरो रविः ॥
निदाघो ग्रीष्मबहुलः कुबेरो बहुवित्तवान् ॥ १२० ॥
स्वसत्ता भासते चात्र नान्यसत्ता प्रतीयते ॥
प्रमाणांतरतश्चान्यसत्ता क्वापि प्रतीयताम् ॥ १२१ ॥
प्रकृते श्रुतिवाक्येभ्यः स्वसत्ता दृढतां गता ॥
सूत्रकारो विकारार्थनिषेधाय तदुत्तरम् ॥ १२२ ॥
सूत्राणि पेठे बहुशश्चानन्दमयता यतः ॥
पंचकोशाः विशुध्यंतां श्रुतिरेषान्यगा पुनः ॥ १२३ ॥
कोशाजीवगतास्ते स्युरिमा ब्रह्मविभूतयः ॥
श्रुतावन्नमयादीनां फलरूपत्वकीर्तनात् ॥ १२४ ॥
मैत्रायणिश्रुतौ चापि ह्यन्नं विष्णुरितीरितम् ॥
आनंदमयमात्मानमुपसंक्रामतीत्यतः ॥ १२५ ॥
परोपसंक्रामो नोक्तः फलतास्यावसीयते ॥
श्रीमद्भागवते चांते ह्यानन्दमयता श्रुता ॥ १२६ ॥

तो भाष्यमें अपर सत्ता कही हे ॥ ११९ ॥ तासों आपको अभिप्रेत नहीं सिद्ध होय हे गरमी बहुत हे जामें एसो ग्रीष्म बहोत धनवारो कुबेर यहाँ अपनीही सत्ता भासे हे परसत्ता नहीं प्रतीत होय हे दूसरे प्रमाणनसों अन्य-सत्ता कहीं भासे यहाँ तो श्रुतीनसों स्वसत्ताही दृढ हे सूत्रकार विकारार्थके निषेधके लिये आगे बहुतसे सूत्र पढे हें पंचकोशनको शुद्ध करो कोश जीव-गतब्रह्मके विभूति हें श्रुतिमें अन्नमयादिकनकों फलरूप वर्णन कियो हे ॥ १२० ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ मैत्रा-यणीश्रुतिमेंबी अन्नकों विष्णु कह्यो हे आत्माको आनन्दमय कहके उपसंहार कियो हे ॥१२५ ॥ परोपसंक्रम नहीं कह्यो याहीसों याकी फलरूपता हे श्रीमद्भागवतमेंबी अन्तमें आनन्दमयता देखें हें ओर श्रुतिमेंबी याकी ब्रह्म-

श्रुतिस्तुतौ तथाचास्य कथिता ब्रह्मरूपता ॥
ब्रह्मण पुच्छरूपत्वं तत्पुच्छांगं तु पक्षिण ॥ १२७ ॥
ततस्तत्पुच्छमेव स्यादथर्वांगिरसादिवत् ॥
तेनानन्दमयो ब्रह्म तत स्वार्थे मयण्मत ॥ १२८ ॥
आनन्दस्तेन चाभ्यस्त सूत्रकारेण बोध्यते ॥
इत्थं विवादे संवृत्ते सायकालेप्युपस्थिते ॥ १२९ ॥
अल यतीश्वर प्राह शिष्या प्राहुरलं ह्यलम् ॥
तत सौहृदसलाप कृत्वोत्तस्थौ यतीश्वर ॥ १३० ॥
अस्मदार्योपि चोत्तस्थौ चन्द्रमौलिनमस्कृत ॥
राज्ञोपढौकित दत्तमर्पयत्तत्पुरोधसा ॥ १३१ ॥
सत्कृता बहुमानेन प्रस्थितास्ते यथायथम् ॥
अथ स्वशिविर गता गुरवरा व्यधुः स्वाह्निक
प्रभातसमये ततोऽभिससरु सुविद्यापुरम् ॥
इतो नृपतिवादिनी समनुगात्ततां वादिनीं
पवित्रसलिलां शिवां जगति तुंगभद्रेव सा ॥ १३२ ॥

रूपता कही हे तामों आनन्दमय ब्रह्म हे ओर स्वार्थमें मयट् प्रत्ययहे याहीसों व्यासजी अभ्याससों आनन्दकों बोध करें हें एसे विवाद होते सन्ध्या समय होयगयो ॥ १२६ ॥ १२७ ॥ १२८ ॥ १२९ ॥ तब यतीश्वर बोले के बस ओर उनके शिष्यभी बोले बस २ पीछें शिष्टाचार करके यतीश्वर उठे ओर अस्मदाचार्यजीभी उठे ओर चन्द्रमौलिमहादेवको नमस्कार करके राजाकी दीनी भई भेटकों उनके पुरोहितसा अर्पण करायो ओर बहाँसों सत्कारकों पायकें पधारे ॥ १३० ॥ १३१ ॥ पीछें अपने डेरामें आयकें आह्निक करकें वहाँसा प्रात काल विद्यानगरकों पधार या आडी

तन्मार्गेण शनैः शनैः प्रचलिता विज्ञैस्समाराधिता
मार्गेऽस्मिन्समुपागतैर्मुनिजनैः पुष्पोपहारादिभिः ॥
ते विद्यानगरोपकंठविपिने कुंजेऽवतीर्णाः शुभे
आरूढे मिहिरे महातपभरे कर्तुं च माध्याह्निकम् ॥ १३३ ॥
आचार्यान् प्रणिपत्य तत्र नृपतेर्दूतो गतः सत्वरं
हर्षोत्त्कर्षवशान्नृपस्य सदने नीतः प्रतीहारकैः ॥
श्रुत्वा दूतसमागमं नृपवरः कार्यं विहायाखिलं
सिद्धार्थं मुखतोऽनुमाय ससुखं पूर्णार्थतामागतः ॥ १३४ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिँस्तृतीये समजनिपटहोद्वादशोयंजयाख्ये॥१३५॥

---

तुंगभद्राके तटपे राजाकी सेना आई ही ॥ १३२ ॥ सो वाही मार्गसों धीरे धीरे चलते ओर मार्गमें आये भये विद्वाननसों मुनिजननसों पुष्पनसों आराधना किये गये श्रीमदाचार्यजी विद्यानगरके उपवनमें मध्यान्ह करवेकूँ लिये उतरे ॥ १३३ ॥ वहाँ आचार्यनकों प्रणाम करकें राजाको दूत आगे बेगीसों बडे हर्षसों गयो सो ताको द्वारपाल ले गये राजावी दूतको आवनो सुनकें ओर सबकामनकों छोडकें वाके मुखपेसों वाको सिद्धार्थ समझकें ओर आप पूर्ण मनोरथ भयो ॥ १३४ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेद-व्यास विष्णुस्वामिमतके ग्रन्थनके अनुकूल हरिभक्तनके सुख देवेवारे या चारित्रग्रन्थके तीसरे प्रस्थानमें ये बारहवों पटह समाप्त भयो ॥ १३५ ॥

---

अथ व्रज्यां कृष्णदेव कृष्णदेवप्रियात्मनाम् ॥
निशम्य दूतात्प्रीतोऽस्मै धनं प्रादान्महामना ॥ १ ॥
तेषामभिमुख गंतु समभूत्समहीपति ॥
सामंतान्मंत्रिण स्वीयान् सर्वानेव समादिशत् ॥ २ ॥
विशापतेर्निदेशेन सज्जितास्ते समागता ॥
निस्सानादिमहावाद्यैस्सामता पृतनागणे ॥ ३ ॥
कुंजराणां तुरगाणां रथानां पादचारिणाम् ॥
समागतानामकरोत्काहल प्रतिहारताम् ॥ ४ ॥
ध्वजैर्ध्वजिन्य शोभंते पताका निहतातपा ॥
भटानामायुधैर्दंशैर्भ्राजत्पुरटमंडिते ॥ ५ ॥
सन्नद्ध वीक्ष्य तत्सर्व भूप प्राह पुरोधस ॥
पुरोभिगम्यतां ब्रह्मन् शिविकाछत्रचामरै ॥ ६ ॥
मातंगैरश्ववारैश्च कुंजरै स्यदनैर्बलै ॥
पादुकानां प्रतिष्ठार्थमाचार्याणां महात्मनाम् ॥ ७ ॥
अहं ते पृष्ठत किंचिद्दूरादायामि सत्वरम् ॥
मगल कलश वामे कृत्वा वारवधूजन ॥ ८ ॥

पीछें कृष्णदेव राजा कृष्णदेवके आत्मा श्रीमदाचार्यजीके पधारवेकी दूतके मुखसों सुनके बडे प्रसन्न होयकें वाकों बहोत धन दीनो ॥ १ ॥ ओर आपके सामने आयवेके लिये तैयार भयो अपनी सेना ओर मंत्रीनको सबकों आज्ञा दीनी ॥ २ ॥ सो राजाकी आज्ञामें निसान नगारा आदि सब तैयार भये ओर हाथी घोडा रथ सिपाहीनको बडो कोलाहल भयो ॥ ३ ॥ ४ ॥ ध्वजा (पताका) सों घामका दूर करवेवारी सेना शोभती भई एसी सब तैयारीकों देखके राजा पुरोहितसों बोले के हे ब्रह्मन पालकी छत्र चमर हाथी सवार रथ सेना आदिकों लेके महात्मा श्रीमदाचार्यजीके पादुकानकी प्रतिष्ठाके लिये आगे चलो ॥ ५ ॥ ६ ॥ ७ ॥ मैं तुमसों थोरी दूर पीछे येगी

विद्वद्भिर्ब्राह्मणैः सार्द्धमाचार्यैश्च महात्मभिः ॥
पौरैर्जानपदैरिभ्यैरिष्टैः शिष्टैः कुटुंबिभिः ॥ ९ ॥
चतुरंगवरूथिन्यां मंत्रैर्गीतैश्च मंगलैः ॥
तथेत्युक्त्वा गुरुः प्रागात्पुरः सीम्नः परेऽजिरे ॥ १० ॥
सशिष्यान्सगणान् तत्राचार्यान् दीक्षार्चने स्थितान् ॥
अवतीर्य समागत्य पुरो गत्वावनींगतः ॥ ११ ॥
सोपायनकरश्चेडे राज्ञो वृत्तं व्यजिज्ञपत् ॥
यावत्कृताह्निकाचार्याजातास्तावन्महीपतिः ॥ १२ ॥
समागतः समाजन मघवांगिरसं यथा ॥
समुत्तीर्य गजेन्द्रात्स धरेन्द्रो ब्राह्मणोत्तमैः ॥ १२ ॥
आचार्यैश्च निजाचार्यैरिभ्यैः सभ्यैश्च मंत्रिभिः ॥
प्रणतश्चरणोपांते दंडवत्प्रेमविह्वलः ॥ १४ ॥
अथोपढौकितं चक्रे सुवर्णानां शतं मुदा ॥
स्वीयेभ्योऽकारयच्चैवं विश्राम्योपबलिं पुनः ॥ १५ ॥

आऊ हूँ तब मंगलकलश विद्वान् ब्राह्मण महात्मानकों आगे करकें पुरीके बसवेवारे सेठ साहूकारनके संग पुरोहितजी पुरकी सीमाके आगे गये ॥ ८ ॥ ॥९॥१०॥सो शिष्यनके सहित आपकों देखकें दंडवत् कर भेट धरके राजाको वृत्तान्त कह्यो ओर पीछें जबताईं श्रीमदाचार्यजी आह्निक करें इतने-हीमें जेसे इन्द्र बृहस्पतिके पास गये हे वेसेही राजा आयो सो हाथीसा उत-रकें विद्वान् ब्राह्मण अपने आचार्य प्रजा मन्त्री इनके संग बडी नम्रतासों प्रेमसों विह्वल होयकें श्रीचरणके समीप दंडवत् करतो भयो ॥ ११ ॥ ॥ १२ ॥ १३ ॥१४ ॥ ओर भेट करकें अपने दूसरे मनुष्यनसोंवी भेट करावतो भयो पीछे श्रीमदाचार्यजीकी आज्ञासों बेठके बोल्यो के आप दक्षिण-दिशाकों पवित्र करते जितने दिन बिताये वे हमको कल्पके समान बीते हैं

आशीर्मन्त्रैर्ब्रह्मघोषैर्मंगलान्यपचारयत् ॥
आचार्याणां निदेशेन सोपविष्टोऽब्रवीद्वच ॥ १६ ॥
श्रीमद्भिर्दक्षिणामाशां चरद्भिः पावनेच्छया ॥
यावद्वर्षाणि नीतानि तानि कल्पायनानि न ॥ १७ ॥
केनापि भाग्ययोगेन सुवर्णार्कोऽधुनोदित ॥
यद्धरेर्वदनस्यागाद्वदन विषय दृशाम् ॥ १८ ॥
लौकिकार्थैस्त्रिलोकीय वियुक्ते शोकमृच्छति ॥
कथ न संभवेदेषोऽलौकिकार्थे वियोजिते ॥ १९ ॥
न संपत्सुकृतस्येय न सपत्पौरुषस्य न ॥
सपत्कृपाकटाक्षाणां सेय समुदिताऽधुना ॥ २० ॥
यदद्य दर्शनं जात तत्र हेतुर्ममेक्ष्यते ॥
गच्छद्भिर्जीवनकृते यद्युक्तं चरणार्चनम् ॥ २१ ॥
चिर सिंहासनस्याग्रे कृत य पादुकार्चनम् ॥
भावेन राजभूत्यैव तदद्य फलितं मम ॥ २२ ॥
सत्यवचासत्यवाग्भोजाता पूर्णार्थता च न ॥
नगरं मदिर स्वीय कुरुताङ्घ्रिपवित्रितम् ॥ २३ ॥

अब कोई भाग्ययोगसों सूर्यको उदय भयो ह जो भगवद्वदनावतार आपके दर्शन भये लौकिकके वियोगमें मनुष्य शोक करे हैं ओर आपको तो अलौकिक वियोग हे सो ये आपको दर्शन मेरे सुकृतको वा पुरुषार्थको फल नहीं हे किन्तु सुवर्णाभिषेकके समय जो श्रीचरणनको पूजन कियो हो सो आज फलित भयो हे ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ आपकी सत्य वाणी भई ओर मेरो मनोर्थ पूरो भयो अब या अपने नगर ओर मन्दिरको पवित्र करिये एसी राजाके विज्ञप्ति करवे-

इत्थं विज्ञाप्यमानेऽस्मिन्नाचार्याः पंडिताः परे ॥
सर्वे विज्ञापनं चक्रुः प्रसशंसुर्यथोचितम् ॥ २४ ॥
पप्रच्छुः कुशलं राज्ञो दत्वाशिषमनुत्तमाम् ॥
वार्तां विधाय चलितमाचार्यैः प्रोत्थितैस्ततः ॥ २५ ॥
गुरूणां पादुके राज्ञा शिबिकायां निवेशिते ॥
छत्रेण चामराभ्यां च राजाऽऽचार्यानुगोऽभवत् ॥ २६ ॥
पद्भिश्चेरुर्यदाचार्याः सर्वे पादचरास्तदा ॥
निन्युस्ते नगरं स्वीयं महोत्सवपुरस्सरम् ॥ २७ ॥
नगरे नरनारीणां व्यूहा बालपुरःसराः ॥
आपणे चत्वरे प्राप्ता हर्म्याद्युपरि कौतुकात् ॥ २८ ॥
तत्र तत्र जनाश्चक्रुः कुसुमैरभिवर्षणं ॥
राजकीयाः सुवर्णस्य पुष्पाचारं समाचरन् ॥ २९ ॥
इभ्याः सभ्यास्तत्र तत्र व्यदधुश्चोपढौकितं ॥
महोत्सवेन तैर्नीता राजद्वारे महीभृता ॥ ३० ॥

पे ओर संगके आचार्य पंडितजन सबननें प्रार्थना करी ओर प्रशंसाकरी ॥२३॥२४॥ तब राजाको कुशल पूँछकें ओर आशीर्वाद देकें वार्ता करकें श्रीमदाचार्यजी पधारे ओर राजानें श्रीमदाचार्यजीकी पादुकानको पालकीमें पधरायकें छत्र चमरनके सहित पाँवनसों पीछे २ चल्यो ओर बडे उत्सवसों नगरमें पधराये गलीनमें चौकनमें छतनपें बालक स्त्रीपुरुषनके झुंडके झुंड जमा होय गये ओर पुष्पनकी वृष्टि करवेलगे ओर राजकीयमनुष्यननें सुवर्णके फूलनकी वृष्टि करी ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ओर शहरके सभ्य धनाढ्यननें भेट करी एसे बडे उत्सवसों राजद्वारमें पधराये ओर पादुकानसों उत्तमवस्त्र बिछे मार्गमें चलते मन्त्रनसों अभिषेक किये गये एसे श्रीमदाचार्यजीकों सिंहासनमें पधरायकें राजा राजाकी स्त्री भ्राता बहेन ओर बन्धूननें वैदिकरीतसों बडे उत्तम उपचारनसों पूजन करकें बडी भेट करते

क्षत पादुकाभ्यां ते वरांशुकवृतेऽध्वनि ॥
नीत्वा राजसभाद्वारेऽभिषक्तामतुमूर्द्धनि ॥ ३१ ॥
सिंहासने चोपवेश्य कृतमाचार्यपूजन ॥
राज्ञा राजांगनाभिश्च मात्रा भ्रमात्य बंधुभि ॥ ३२
वैदिकेन विधानेन चोपचारैर्महोत्तमै ॥
कृत्वोपढौकित भूरि चक्रुरारार्तिकं महत् ॥ ३३ ॥
सौवर्णेनेव पात्रेण तौर्यत्रिकपुर सर ॥
चरणामृततोय तद्राजतामत्रसभृत ॥ ३४ ॥
जगृहु शिरसा सर्वे पपुश्चैव च सर्वश ॥
उपढौकितसद्द्रव्य ब्राह्मणेभ्य समर्पित ॥ ३५ ॥
स्वकीयेभ्य परेभ्यश्च देवेभ्योऽपि विभागश ॥
ततस्तु तीर्थयात्राया आचार्योश्च महीपति ॥ ३६ ॥
पप्रच्छु सकल वृत्त भट्टार्याद्याश्च त जगु ॥
आचार्ये प्रस्थितं चेत पपायां समवस्थित ॥ ३७ ॥
गतिर्विहगमस्यासीद्गुरूणामघितीर्थत ॥
ऋष्यमूके ततो रामदासेन सह सगम ॥ ३८ ॥
महिमा रामभक्तेश्च तत्र सम्यड्निरूपिता ॥
स्कांदे कुमारपादस्य जयस्तेपां प्रपत्तय ॥ ३९ ॥

भये ओर सुवर्णपात्रसों आरती उतारके चरणामृत पान करके मस्तकपे धारण कियो ओर राजा तथा दूसरे आचार्यननें तीर्थयात्राको वृत्तान्त पूँछ्यो सो सगके शेषभट्टादिकननें सब हाल कहे के यहाँसो आप पपासर पधारे ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ यहाँ आपके चरणतीर्थसों एक पक्षीकी गति भई पीछे एक रामदासके सग ऋष्यमूकपर्वतमे समागम भयो ॥ ३८ ॥ श्रीरामकी महिमाको अच्छी प्रकारसों निरूपण भयो स्कान्दतीर्थमें कुमारपादको जय कियो ओर उनको

श्रीशैले भोगिकायस्य कायस्तंभजयोऽभवत् ॥
व्यंकटे व्यंकटेशस्य तोषः पारायणादभूत् ॥ ४० ॥
कामकोष्णीं पुरीं भूतिं श्रीशेषार्यजनेः पदं ॥
शिवकांचीं चाथ याता नेमुश्चैकांबरेश्वरं ॥ ४१ ॥
कांच्यां श्रीहस्तनाथेनाकृष्य दत्तं च दर्शनं ॥
शैवानां वैष्णवानां च जयः प्रीतिः प्रकाशिता ॥ ४२ ॥
पक्षितीर्थे ततो याता दृष्टौ तौ पक्षिणाविह ॥
चिदंबरं ततो याता शंकरस्वामिसंभवम् ॥ ४३ ॥
कुंभकोणमितः प्राप्ताश्शिक्षितास्तत्र वैदिकाः ॥
दक्षिणद्वारिकां याता चोपदिष्टाश्च वैष्णवाः ४४ ॥
अयोध्यां दक्षिणां दृष्ट्वा रामभक्तिर्निरूपिता ॥
तंजावरे प्रजाभिश्च प्रजेशेन च सत्कृताः ॥ ४५ ॥
श्रीरंगं समनुप्राप्ता राघवार्यो विनिर्जितः ॥
ऋषभाद्रिं परिक्रम्य मीनाक्षीं समुपागताः ॥ ४६ ॥

शरण लीनो ॥ ३९ ॥ श्रीशैलमें सर्पशरीरधारीको जय कियो और वेंकटाचलमें पारायणसों श्रीव्यंकटेशको प्रसन्न कियो ॥ ४० ॥ श्रीरामानुजाचार्यजीकी जन्मभूमि कामकोष्णीपुरीकों पधारे शिवकांचीमें एकाम्बरेश्वरको नमस्कार कियो विष्णुकांचीमें श्रीवरदराजजीनें बडे प्रेमसों दर्शन दिये वहाँ शैव तथा वैष्णवनकों जीतकें उनमें प्रीति प्रकाश करी ॥ ४१ ॥ ४२ ॥ पीछें पक्षितीर्थमें पक्षीनकों देखे चिदम्बरकों गये कुम्भकोणमें जायकें वैदिकनकों शिक्षा दीनी दक्षिणद्वारकामें जायकें वैष्णवनकों उपदेश कियो ॥ ४३ ॥ ४४ ॥ दक्षिण अयोध्यामें रामभक्तिकों निरूपण कियो पीछें तंजावरकी प्रजा तथा राजासों सत्कारकों पायो ॥ ४५ ॥ श्रीरंगमें राघवाचार्यकों जीत्यो ऋषभाद्रिकी परिक्रमा करकें मीनाक्षी आये वहाँबी विष्णु-

तत्रापि विष्णुभक्तानां सदाचारो निरूपित ॥
दृष्ट्वा नवग्रहांत्रामस्थापितान् गुरवस्तत ॥ ४७ ॥
रामेश्वरमनुप्राप्ता वीरशैवा निराकृता ॥
विश्वेश श्रीरामनाथ गौरीं दृष्ट्वा परान्सुरान् ॥ ४८ ॥
धनुस्तीर्थेऽभिसस्नाता श्रीदर्भशयनं गता ॥
तत्र पारायणं चक्रुर्धिक्चक्रुर्वीरवैष्णवान् ॥ ४९ ॥
ताम्रपर्ण्यां तत स्नात्वा विप्रदु खनिवृत्तये ॥
पालकोटेश्वरस्यार्तिर्हृता धर्म प्रकाशित ॥ ५० ॥
श्रीवैकुंठे च शेषार्यआलवालयतीश्वर ॥
जीर्यस्वामी च तोताद्रौ जितश्चांबु प्रकाशितम् ॥ ५१ ॥
दीर्घनारायण याता मालावादो निरूपित ॥
कुमारीं कन्यकां प्राप्तास्सुदरेशं ततो गता ॥ ५२ ॥

भक्तनको सदाचार सिखायो वहाँसों श्रीरामके स्थापित नवग्रहनके दर्शन कर रामेश्वरमें जायकें वीरशैवनकों तिरस्कार कियो ओर विश्वनाथ श्रीरामनाथ गौरी ओर दूसरे देवतानके दर्शन करकें धनुषतीर्थमें स्नान कर श्रीदर्भशयनकों पधारे वहाँ पारायण कियो ओर वीरवैष्णवनको धिक्कार कियो ताम्रपर्णीमें स्नान करकें ब्राह्मणनको दु ख दूर करवेकें लिये पालकोटके राजाको रोग दूर कियो धर्मकों उपदेश कियो ॥ ४६ ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥ श्रीवैकुठमें शेषाचार्य आलवालके यतीश्वर तोताद्रिमें जीर्णस्वामीको जीत्यो ओर जल प्रगट कियो दीर्घनारायणमें मालावाद कियो कुमारीकन्याको पधारे वहाँसों सुदरेश्वर, आदिकेशव, अनन्तशयन आये यहाँ राजाकी स्त्रीके प्रेतको दूर कियो राजाको ओर देवपूजकनकों शरण लीने वहाँसों जनार्दनक्षेत्रमें पधारकें अपने सम्प्रदायवारेनकों शिक्षा

आदिकेशवमायाता अंनतशयनं ततः ॥
तत्र राजांगनाविष्टप्रेतराजो निराकृतः ॥ ५३ ॥
अनुगृहीतोऽथ नृपतिस्तथा देवार्चका अपि ॥
ततो जनार्दनं प्राप्तास्तत्र स्वीयाश्च शिक्षिताः ॥ ५४ ॥
पारायणं कृतं तत्र जनास्तु शरणीकृताः ॥
देवनारायणं प्राप्ता रणगोपालमुत्तमं ॥ ५५ ॥
हिमगोपालमायाता मलयाचलमूर्द्धनि ॥
कौंडिनस्याश्रमं तत्र कौंडिनी च सरिद्वरा ॥ ५६ ॥
पारायणेऽभूत्प्रकटस्तत्रासौ मुनिसत्तमः ॥
मुनिकन्योदितं ज्ञानं मनुस्तेन समर्पितः ॥ ५७ ॥
ततः कर्णाटके मध्यश्रीरंगं समुपागताः ॥
मांहिषं द्रंगमायाता महेशेन समर्चिताः ॥ ५८ ॥
राजधर्मान् भक्तिधर्मान् दत्वाऽसौ शरणीकृतः ॥
श्रीरंगमुत्तमं याता यादवाद्रिं हरेः पदं ॥ ५९ ॥
यत्र चिलपिलरायाख्यो हरिर्दृष्टो यतिः पुनः ॥
गोपीचंदनमृणमुद्राधारणं चेह साधितम् ॥ ६० ॥

दीनी पारायण कियो बहोत मनुष्यनकों शरण लीनो वहाँसों देवनारायण रणगोपाल हिमगोपाल मलयाचलके ऊपर कौंडिन्यके आश्रम कौंडिनी नदीकों पधारे वहाँ पारायण करते समय कौंडिन्य ऋषि प्रगट होयकें गोपिकानकों ज्ञान तथा मन्त्र बतायो पीछें कर्णाटकमें श्रीरंगजी आये मैसूर आये वहाँके राजानें पूजन कियो वाको राजधर्म्म भक्तिधर्म उपदेश करकें शरण लीनो हरिके स्थान यादवाद्रि श्रीरंगजी पधारे वहाँ चिलपिलरायहरिकों देख्यो पीछें यतिकों देख्यो वहाँ गोपीचन्दनमुद्राको धारण सिद्ध कियो ॥ ५१ ॥ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥

सुब्रह्मण्य तत प्राप्तास्ततः सकर्षणोनुत ॥
कर्मठा ब्राह्मणास्तत्र बोधिता श्रुतियुक्तिभि ॥ ६१ ॥
ज्ञान भक्तिर्विरक्तिश्च तेभ्य सम्यङ्निरूपिता ॥
ततस्तु पृष्ठतो याता सम्प्राप्ताश्चोडुपस्थलम् ॥ ६२ ॥
तत्र माध्वयतीन्द्रेण वादस्तप्ताकधारणे ॥
सतर्पीनथ गोकर्णमपश्यँच्छ्रीमहेश्वरम् ॥ ६३ ॥
स्थापितो वैदिको मार्गस्तांत्रिकोऽत्र निराकृत ॥
पुरोधा भवतां तत्र नेतुकाम समागत ॥ ६४ ॥
वैभांडिकाश्रम तस्मात्समायाता शनै शनै ॥
श्रीशकरार्यपट्टस्थै पुरुषोत्तमयोगिभि ॥ ६५ ॥
विवाद पचपूजाया व्याख्याऽऽनंदमयस्य च ॥
दर्शन चन्द्रमौलेश्च जातस्तत्र जयावह ॥ ६६ ॥
एव सक्षेपतोयात्रा दक्षिणाशासुविजय ॥
निरूपितोधरेशाग्रे भवद्भ्योगुरुभि कृत ॥ ६७ ॥

वहाँसों सुब्रह्मण्यतीर्थ आये पीछें सकर्षणकों नमस्कार कियो वहाँ श्रुतीनसों तथा युक्तीनसों कर्मठ ब्राह्मणनकों बोध दीनो ज्ञान भक्ति वैराग्यकों अच्छीप्रकारसों उनको बतायो पीछें उडुपीमें पधारे वहाँ मध्वमतके स न्यासीनके सग तप्तमुद्राधारणमें वाद भयो पीछें सप्तर्षि गोकर्णमहादेवके दर्शन किये वैदिकमार्गको स्थापन कियो तान्त्रिकनको हटायो यहाँ आपके पुरोहित पधरायवेकों आये सो यहाँसों धीरे २ विभांडकके आश्रम शृंगेरीमठ आये यहाँ पचपूजाके विषयमें विवाद शकराचार्यजीके पीठस्थ पुरुषोत्तम सन्यासीसों भयो और "आनन्दमयोऽभ्यासात्" या सूत्रकी व्याख्या करी सो यहाँ जय भयो पीछे चन्द्रमौलिके दर्शन किये एसो सक्षेपसों श्रीमन्माधवजीको दक्षिणदिग्विजय आपसों कह्यो एसो राजासों शेषभट्टके कहेंपे श्रीमदाचार्यजी अपनी सन्ध्याकी वेला आयनी देखकें यहाँके

ततस्तु संध्यावेलां स्वामायांतीं वीक्ष्य सत्वराः ॥
आचार्याश्च महीपालं संतोष्य गुरवोंचिताः ॥ ६८ ॥
पूर्वस्थलं ततो राजा तथा प्रास्थापयत्स्वकैः ॥
मातामहगृहं प्राप्ताः सच्चक्रुस्तैश्च सत्कृताः॥ ॥ ६९ ॥
तुंगभद्रातटे तत्र चावतीर्णानिजस्थले ॥
एकांते पावने रम्ये स्वारामे छात्रसंवृताः ॥ ७० ॥
विसृज्य राजपुरुषान् स्नात्वा चक्रुर्निजाह्निकम् ॥
सर्वे स्नात्वा तथा चक्रुः पाकं च हरिपूजनम् ॥ ७१ ॥
तत्र वैष्णववीराणां ध्वजिन्यः स्वाश्रमं गताः ॥
स्थितश्च लकुटालोकी वीरः केतुकमंडलुः ॥ ७२ ॥
ततो हुताशनाचार्या निजदेवार्चनं व्यधुः ॥
आरात्तिकं प्रणामं च कृत्वा तीर्थं ततः पपुः ॥ ७३ ॥
निवेदितेन पाकेन वैश्वदेवं विधाय च ॥
दत्त्वान्नमतिथिभ्यश्च गुरवो बुभुजुः स्वकैः ॥ ७४ ॥
मौनेन विधिना तत्राभ्यवहारं विधाय ते ॥
चक्रुः षोडश गंडूषान् पुनः प्रक्षाल्य पत्करौ ॥ ७५ ॥

आचार्यनको ओर राजाको सन्तोष करकें पधारे सो अपने पहले स्थानकों आवते अपने नानाके घर पधारे उननें बडो सत्कार कियो पीछें तुंगभद्राके तटमें एकान्तमें रमणीक अपने स्थलमें अपने शिष्यनके संग उतरे ॥ ६१ ॥ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ओर राजपुरुषनको लौटायकें स्नान करकें अपनो आह्निक कियो दूसरे-मनुष्यनी स्नान करकें वैसेही करते भये ओर हरिपूजन ओर पाक कियो ओर वीरवैष्णवनकी सेनाबी अपनें आश्रमको गई ओर लकुटालोकी केतु कमंडलु वीरबी गये ओर आप अपने देवकी सेवा करकें आरती प्रणाम करकें तीर्थपान करकें नैवेद्य भोग धर पीछें वैश्वदेव कर अतिथीनकों

आचमं चक्रिरे न्याय्य स्थिता पूते कुशासने ॥
पात्रशुद्धौ स्थानशुद्धौ जातायामाचम व्यधु ॥ ७६ ॥
एलालवगतुलसीदलं च मुखशुद्धये॥
प्राश्य धौत्राणि जगृहु कौशेयानि जहुस्तत ॥ ७७ ॥
निजासने चोपविष्टा प्रसादान्नं स्वदासयो ॥
दामोदरकृष्णयोश्च स्थापित चादिशन् करात् ॥ ७८ ॥
शंभुभट्टादय सर्वे तथा दामोदरादय ॥
कृतकार्या यदा प्राप्ता कथारंभस्तदा कृत ॥ ७९ ॥
कथोपनिषदा पूर्व कथा भागवतस्य च ॥
कथिता भावगभीरा नानाविच्छित्तिमंडिता ॥ ८० ॥
कीर्तनानि हरे पश्चाद्वैष्णवै समकारयन् ॥
सम्पन्नायां पात्रशुद्धौ सुषुपुर्वीररक्षिताः ॥ ८१ ॥
उषसि प्रतिबुद्धास्ते कीर्तयतो मधुद्विषम् ॥
हस्तौ पादौ मुख नेत्रे प्रक्षाल्यासनसंस्थिता ॥ ८२ ॥

देकें अपने मनुष्यनके सग मौनविधिसों आपने भोजन किये पीछें सोलह कुल्ला करकें हाथ पाँव धोयकें आचमन करकें इलायची लौंग तुलसीदल मुखशुद्धिके लियें लेकें दुसरे धौतवस्त्रको धारण कियो ओर रंगे वस्त्रको छोर दीनो ओर अपने दास दामोदरदास कृष्णदासकों अपने हाथसों प्रसाद धरकें अपने आसनपे विराजमान भये ओर शम्भुभट्टादिक तथा दामोदरादिक जब अपने २ कार्यकों करकें आये तब कथाको आरम्भ कियो तामें प्रथम उपनिषदनकी कथा करी पीछें अनेक शंकासमाधानपूर्वक भावसों गम्भीर श्रीमद्भागवतकी कथा करी ॥ ७१ ॥ ७२ ॥ ७३ ॥ ॥ ७४ ॥ ७५ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ पीछे वैष्णवनने कीर्तन किये ओर पात्रादिशुद्धिके पीछें वीरवैष्णवनसों रक्षा किये गये सब सोतेभये पीछें श्रीमदाचार्यजी उष कालमें उठकें भगवत्कीर्तन

दध्युर्हरिं गोकुलेशं तत्त्वध्यानपुरस्सरम् ॥
देहकृत्यं ततश्चक्रुर्दंतशुद्धिं च पल्लवैः ॥ ८३ ॥
मलस्नानं बहिष्कृत्वा तीर्थस्नानं विधानतः ॥
निवृत्य धृत्वा कौपीनं कटिवस्त्रं तथा जिनम् ॥ ८४ ॥
मालां तिलकमुद्राश्च धृत्वा संध्यां ततोऽचरन् ॥
विधाय तर्पणं तस्माद्धृत्वा दंडकमंडलू ॥ ८५ ॥
पादुकाभ्यां समायाताः स्नातैः शिष्यजनैर्वृताः ॥
स्थाने प्रविश्य प्रक्षाल्य चरणौ च करौ पुनः ॥ ८६ ॥
बृष्यां समुपविष्टास्ते विधायाचमनादिकम् ॥
औपासनाहुतीश्चक्रुस्ततस्तु हरिपूजनम् ॥ ८७ ॥
वेदाभ्यासं ततश्चक्रुः स्नानं माध्याह्निकं ततः ॥
तर्पणं पूजनं पाकनिवेदनमतः परम् ॥ ८८ ॥
वैश्वदेवं ततो भुक्तिशास्त्राभ्यासमितः परम् ॥
ततः समागतेभ्यश्च ददुर्ज्ञानं यथोचितम् ॥ ८९ ॥
तस्मिन् काले नृपः प्राप्तः ववंदे स निजैः सह ॥
अथाह नृपतिः प्रीतो निशम्य चरितं गुरोः ॥ ९० ॥

करकें हाथ, पाव, मुख, नेत्र, इनकों धोयकें आसनमें विराजमान होयकें श्रीगोकुलचन्द्रमाजीको ध्यान करकें देहकृत्य कियो ओर पल्लवनसों दन्तशुद्धि करकें मलस्नान बाहेर करकें विधिसों तीर्थस्नान कियो ओर कौपीन, कटि-वस्त्र, मृगचर्म, धारण करकें तिलक मुद्रा करकें सन्ध्योपासन तर्पण करकें दंड कमंडलु लेकें शिष्यजननके संग पादुकानसों चलते अपने स्थानमें प्रवेश करकें पाँव हाथ धोयकें कुशासनमें विराजमान होयकें आचमन करकें औपासन होमकों कियो पीछे भगवत्सेवा करकें वेदाभ्यास कियो ओर मध्याह्नस्नान करकें तर्पण पूजन करकें भोग धरे पीछें वैश्वदेव करकें भोजन कियो उपरान्त शास्त्राभ्यास कियो ओर आये भये मनुष्यनकों यथोचित

विज्ञापन चकारासौ नतोसौ विहितांजलि ॥
गुरुभिर्यत्प्रतिज्ञात पूर्वं यात्रासमुद्यते ॥ ९१ ॥
विधाय यात्रां चागत्य करिष्यामि तवोदितम् ॥
कर्त्तव्य वचनं तन्मे यदह शिष्यतां गत ॥ ९२ ॥
अवरोधस्त्रियः सर्वा दीक्षणीयाश्च मज्जनाः ॥
ज्ञान विशुद्धं मे देय सप्रदायार्थसभृति ॥ ९३ ॥
किंचित्कालमवस्थेयं सदा स्यात्तु न शक्यते ॥
एषा मे प्रार्थना नाथा स्सनाथा भवता वयम् ॥ ९४ ॥
भक्ते समुद्धारोभवत्स्वलम् ॥
सपादित समुद्धारो भवतां तेषु युज्यते ॥ ९५ ॥
इति राज्ञोऽर्थनां श्रुत्वा प्राहुरादेशकोत्तमा ॥
वैश्वानराचार्यवर्या श्रीकृष्णज्ञानदायिनः ॥ ९६ ॥
राजन् स्वधर्माचरण कार्यं शक्त्यनुसारत ॥
निवृत्ति सर्वथा कार्या विधर्मात्परधर्मत ॥ ९७ ॥

ज्ञान दीनो वाही समयमें अपने मनुष्यनके संग राजानें आयकें प्रणाम कियो ओर गुरुनको चरित्र सुनकें प्रसन्न होयकें ॥ ८१ ॥ ८२ ॥ ८३ ॥ ॥ ८४ ॥ ८५ ॥ ८६ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ हाथ जोडकें नम्र होयकें प्रार्थना करी जो आपनें प्रतिज्ञा करीही के यात्रा करकें लोटके आयकें तुम्हारो कह्यो करेंगे सो करिये क्यों जो में आपको शिष्य हूं मेरे अन्त पुरकी सब स्त्रीनकों ओर मेरे मनुष्यनकों दीक्षा दीजिये ओर मोकों सम्प्रदायके अर्थकों विशुद्ध ज्ञान दीजिये ओर जो सग न विराजसकें तो थोरेही समय विराजे हे नाथ ! ये मेरी प्रार्थना हे आपसों हम सनाथ हैं आप अपने भक्तनको उद्धार करें हें एसी राजाकी प्रार्थना सुनकें गुरुनमें उत्तम श्रीकृष्णज्ञानके देवेवारे वैश्वानराचार्य बोले के हे राजन! शक्तिके अनुसार अपने धर्मको आचरण करनो ओर परधर्मसों सदा निवृत्त

धर्मः साधारणश्चैकः सत्यशौचादिलक्षणः ॥
वैशेषिको द्विजातीनां परः संस्कारलक्षणः ॥ ९८ ॥
नित्यनैमित्तिकः काम्य इष्टापूर्त्तादिभेदतः ॥
बहुधा प्रोच्यते शास्त्रैः काम्यस्तत्र कृताकृतः ॥ ९९ ॥
मूर्द्धाभिषिक्तनृपतेः प्रजानां पालनात्मकः ॥
गुणधर्मो विशेषेण कर्त्तव्यः कार्य एव वा ॥ १०० ॥
वैष्णवानां विशेषेण नित्यधर्मः प्रशस्यते ॥
साधारणश्च यो धर्मो भक्तिधर्मो विशेषतः ॥ १०१ ॥
गुरोस्सेवा हरेस्सेवा सेवा हरिजनस्य च ॥
रक्षा प्रजानां नित्यैव सपर्या च तपस्विनाम् ॥ १०२ ॥
राजा स्वयं चरेद्धर्मं तत्र संचारयेत्प्रजाः ॥
राजैव मूलं धर्मादेर्नार्थः कोपि नृपं विना ॥ १०३ ॥
प्रातः प्रबुध्य देवेशं कीर्तयेन्मधुसूदनम् ॥
भूत्वा पवित्रस्तं ध्यायेत्ततः स्वाह्निकमाचरेत् ॥ १०४ ॥

रहनो सत्यशौचादिलक्षण एक साधारण धर्म हे दूसरो द्विजातीनकों संस्कार लक्षण विशेष हे ओर इष्टापूर्त आदिके भेदसों नित्य, नैमित्तिक, काम्य, एसे बहोत प्रकारके धर्मशास्त्रनमें कहें हें उनमें काम्य कृताकृत हे ओर राजानको प्रजापालन धर्म विशेष करकें करनो चाहिये ॥ ९१ ॥ ९२ ॥ ॥९३॥९४॥९५॥९६॥९७॥९८॥९९॥१००॥ ओर वैष्णवनको भक्तिधर्म विशेष हे गुरुकी सेवा हरि भक्तनकी सेवा हरिकी सेवा प्रजाको पालन तपस्वीनकी सेवा इन धर्मनकों राजा स्वयं करे ओर प्रजाकोबी धर्ममें चलावे राजाही धर्मनको मूल हे विना राजाके कोई बात नहीं होती सो प्रातःकाल उठकें श्रीविष्णुभगवान्‌को कीर्तन करे पवित्र होयकें ध्यान करे पीछें आपनो आह्निक करे ओर विधाक्रमसों भावसों हरिहीकी सपर्या (सेवा) करे

सपर्यां भावतः कुर्याद्धरेरेव विधानतः ॥
गुरोरर्चां सदा कुर्याद्दूरस्थस्यापि शक्तितः ॥ १०५ ॥
एकग्रामे नित्यदेव सप्ताहाद्योजनांतरे ॥
पक्षात् षड्योजनाद्दतमासि दिग्योजनादपि ॥ १०६ ॥
ऋतुतस्तु ततश्चोर्द्धमयनाद्विंशयोजने ॥
देशांतरे वत्सरोर्द्धे दूरस्थेऽस्मिंस्त्रिहायनात् ॥ १०७ ॥
निजधर्मान्निजेष्टाच्च स्वगुरोर्विमुखो हि यः ॥
वर्षात्रिवर्षात्षड्वर्षाद्द्वादशाब्दात्पतत्ययम् ॥ १०८ ॥
साधुवृत्तस्य तु गुरोराज्ञा सेवा विधीयते ॥
दुर्वृत्ताद्दूरतस्तिष्ठेज्जह्याद्धर्मद्विषं गुरुम् ॥ १०९ ॥
दानं देयं ब्राह्मणेभ्योऽन्नं वस्त्रं सर्वजंतुषु ॥
वैष्णवेभ्यस्तदिष्टं यत्तेष्वास्ते भगवान् हरिः ॥ ११० ॥
ब्रह्मचारी यतिः साधुः पक्वान्नस्वामिनावुभौ ॥
संपूज्यान्नं च वस्त्रं च तेभ्यो देयं गृहस्थितैः ॥ १११ ॥

और दूरभी गुरू होंय तो भी यथाशक्ति उनकी सेवा सदा करे एकग्राममें होंय तो नित्य, एकयोजनमें होंय तो, सप्ताहमें, छे योजनमें होंय तो पक्षमें दशयोजनमें होंय तो मासमें, ताके उपरान्त दोमासमें बीसयोजनमें छे मासमें देशान्तरमें वर्षदिनमें तासोंभी दूर होंय तो तीनवर्षमें सेवा करे अपने धर्मसों इष्टसों गुरुसों जो विमुख होय हे सो वर्षसों या तीन वर्षसों छे वर्षमों या बारह वर्षसों पतित होयजाय हे सदाचारवारे गुरुकी सेवा राजा करे और दुराचरणवारे गुरुसों दूर रहे धर्मद्वेषी गुरुकों छोडदे ब्राह्मणनको दान देवे अन्न वस्त्र सब प्राणीनको दे और वैष्णवनकों जो वे मांगें सो देवे क्योंकि उनमें भगवान् वसें हें ॥ १०१ ॥ १०२ ॥ ॥ १०३ ॥ १०४ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ॥ ११० ॥ ब्रह्मचारी सन्यासी ये पके भये अन्नके स्वामी हें इन

दुर्वृत्तो वा सुवृत्तो वा सूर्योढोन्नं समर्हति ॥
संभोज्यातिथिविप्रांश्च स्वयं भुंजीत बंधुभिः ॥ ११२ ॥
यस्य कुल्याः समश्नंति पोष्यवर्गाश्च नित्त्यशः ॥
पर्वयात्रोत्सवैर्युक्तः श्रीमानेष गृही भवेत् ॥ ११३ ॥
पितरौ च गुरुः पुत्रा बंधवः किंकराः स्त्रियः ॥
अभ्यागतोऽतिथिः पोष्या यस्मान्नित्त्यं समाश्रिताः ॥ ११४ ॥
ततोऽर्थसाधनं कार्यं शास्त्रोक्तेनैव वर्त्मना ॥
हरेर्भक्तिस्सदा कार्या रात्रौ च हरिकीर्तनम् ॥ ११५ ॥
वैष्णवं शास्त्रमभ्यस्यन् धर्मशास्त्रं ततः परम् ॥
वेदांतं गुरुभिर्बोध्यं ज्ञानं सत्संगतो भवेत् ॥ ११६ ॥
भवंति वैष्णवाः संतः संतः षट्कर्मकारिणः ॥
संप्रदायपराः संतः संतो बहुविधाः स्मृताः ॥ ११७ ॥
हरेरेकाश्रयं कुर्यान्नस्यात्रैवर्गिकोल्पधीः ॥
महामनाः शुचिः शांतः श्रद्धालुर्विजितेंद्रियः ॥ ११८ ॥

पूजन करकें गृहस्थ अन्न वस्त्र देवे दुराचारी हो या सदाचारी हो अतिथि अन्न देवेके योग्य हे अतिथि ब्राह्मणनको भोजन करवायकें बन्धुनके संग आप भोजन करे जाके घरमें कुलके पोष्यवर्ग नित्य भोजन करें हें पर्व यात्रा उत्सव होय हें वो श्रीमान् गृहस्थ हे, माता पिता गुरू पुत्र बन्धु स्त्री किंकर अभ्यागत अतिथि ये पोष्य कहावें हें पीछें शास्त्रोक्तमार्गनसों अर्थ साधन करे हरिकी भक्ति करे रातको हरिकीर्तन करे वैष्णवशास्त्रको अभ्यास करे पीछें धर्मशास्त्रको ओर गुरूनसों वेदान्त समझे सत्संगसों ज्ञान सम्पादन करे वैष्णव सन्त कहावे हें, छा कर्मके करवेवारे साम्प्रदायिक एसे बहोतप्रकारके सन्त हें सो हे राजन् हरिको एक आश्रय करे ओरकी इच्छा न करे पवित्र शान्त महामनवारो [illegible] न्द्रिय भगवानकी भक्ति करवेवारो

अस्मदीयेषु शिष्येषु भगवद्भक्तिशालिषु ॥
विद्वत्साम्नायविज्ञप्त्यै वासयैक निजांतिके ॥ ११९ ॥
उपदेश्य नृपायेत्थ पुनर्गत्वा नृपालये ॥
सर्वे सदीक्षिताश्चक्रु कृतो राज्ञो मनोरथ ॥ १२० ॥
श्रीविट्ठलप्रभो सेवां तस्मै सम्यङ्न्यरूपयन् ॥
राज्ञो मत शेषभट्ट विशेषज्ञमयूयुजन् ॥ १२१ ॥
निजाश्रम समागत्य प्रस्थानाय समुद्यता ॥
तद्देशीयान् जगुस्तत्र शिष्यानाचार्यसत्तमा ॥ १२२ ॥
स्वस्वस्थानेषु गंतव्य मंतव्यं वचन हि न ॥
आकांक्षित च कर्तव्य स्वानामुत्कंठितात्मनाम् ॥ १२३ ॥
हरीच्छात पुन संगो ह्यस्माकं भविता न किम् ॥
स्वातिबिंदून् विंदति द्राक् विश्वासादेव चातक ॥ १२४ ॥
इत्थ नारायणादींश्च बहुधा भूपतिं तथा ॥
संबोध्य प्रार्थिता शिष्यैराचार्या प्रस्थितास्तत ॥ १२५ ॥

एसो हमारे शिष्यनमेंसों कोई एक विद्वान्कों अपने पास राखो ऐसें राजाकों उपदेश करकें पीछें राजाके घर पधारकें सबको दीक्षा दीनी ओर राजाको मनोरथ सिद्ध कियो ॥ १११ ॥ ११२ ॥ ११३ ॥ ११४ ॥ ११५ ॥ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ १२० ॥ ओर श्रीविठ्ठलनाथजीकी सेवाको क्रम उनको अच्छीतरहसों बतायकें ओर राजाके सम्मत शेष भट्टकों राजाके पास नियुक्त करके अपने आश्रम आयके वहाँसो पधारवेकों तैयार भये ओर या देशके रहवेवारे शिष्यनसों कह्यो के अपने २ स्थाननको जावो हमारी आज्ञा मानों तुममें उत्कंठा करवेवारेनकी इच्छा पूर्ण करो भगवान्की इच्छासों पीछे कहा हमारो संग न होयगो विश्वासहीसों चातक स्वातीके बिन्दुको पावे है ऐसें नारायणआदिशिष्यनकों

ततस्तैस्सहायं सपर्यां विधाय निधाय स्वकं मस्तकं प्राह चेदम्॥
पुनर्दर्शनं देयमाचार्यवर्यैरमीषां मम प्रार्थना सार्थनीया ॥१२६॥
नृपं शिष्यवर्गं तदाचार्यवर्यास्तथेत्यूचुरात्मीयपुंसामभीष्टम् ॥
स्वकीयानशेषान्कृतार्थान्विधायनताविट्ठलं विट्ठलाय प्रतस्थुः
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिँस्तृतीये समजनि पटहो वह्निभूसम्मितोयम् १२८

---

वंदे श्रीरुक्मिणीजानिं भजनानंदसद्रसम् ॥
कृतावतारमुद्धर्त्तुं नृणां श्रीविट्ठलं हरिम् ॥ १ ॥
विद्यानगरतो ह्यामनवद्यां च पद्धतिम् ॥
समाश्रित्य प्रचलिता स्सशिष्या गुरुसत्तमाः ॥ २ ॥

ओर राजाको बोध करकें वहाँसों पधारे ओर राजा सबके संग पूजा करकें दंडवत करकें ये बोल्यो के मेरी ओर इन सबनकी येही प्रार्थना हे के फिर दर्शन देवें तब श्रीमदाचार्यजी राजा ओर शिष्यनकी प्रार्थनाको मानकें ओर उनको कृतार्थ करकें विठ्ठलेशजीकों नमस्कार करकें श्रीविठ्ठलनाथजीकों पधारे ॥ १२१ ॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यासविष्णुस्वामिमतके ग्रन्थनके अनुकूल हरिभक्तनके सुख देवेवारे या ग्रन्थके तीसरे प्रस्थानमें ये तेरहवों पटह समाप्त भयो ॥ १२७ ॥

---

अब ग्रन्थकार श्रीरुक्मिणीसों उत्पत्ति हे जिनकी भजनानन्दके सत् रसरूप मनुष्यनके उद्धारके लिये कियो हे अवतार जिननें एसे श्रीविठ्ठलभगवान्कों

आयाता कतिचिद्दिवसे पद्धत्यां यामद्वयांचिता ॥
निजाह्निक हरेरर्चां कुर्वतस्तत्कथां सदा ॥ ३ ॥
कोलापुरे महालक्ष्म्या निकेतं सुसमृद्धिमत् ॥
यत्र सा वैष्णवी शक्तिर्यशोदागर्भजा श्रुता ॥ ४ ॥
दृष्ट्वा तां देवतां नत्वा दत्वा चोपायन मुदा ॥
स्थित्वैकघस्रं तत्रत्या ुपदिश्याव्रजन्नित ॥ ५ ॥
महालक्ष्म्या प्रचलिता चरतस्तीर्थमण्डलम् ॥
सह्याद्रिखंडमायाता यत्र चाहोबलेश्वर ॥ ६ ॥
कृष्णा कृष्णप्रिया जाता ब्रह्मवेदाख्यकूटयो ॥
अश्वत्थमूलान्निष्क्रांता आवृत्याहोबलेश्वरम् ॥ ७ ॥
अतीतयोजनयुग वैराजक्षेत्रमास्थिता ॥
यत्राग्राणामग्रहार स्व किं भूसुरभूषित ॥ ८ ॥
तत्र ज्योतिर्विदो विप्राच्छ्रुत्वा क्षेत्रस्य वैभवम् ॥
तमग्रतो विधायैव स्नानं चक्रुर्यथाविधि ॥ ९ ॥

नमस्कार करें हैं, पीछें शिष्यसमेत श्रीमदाचार्यजी विद्यानगरसों मनोहर पद्धति ( मार्ग ) को आश्रय करके पधारे सो अपनो आह्निक हरिकी सेवा तथा कथा करते ओर दो प्रहर चलते थोरे दिनमें कोलापुरमें घने समृद्धिवारे श्रीमहालक्ष्मीजीके स्थानमें पहुँचे जहाँ यशोदाके गर्भसों उत्पन्न भई वैष्णवी शक्ति हे एसो सुने हें उनके दर्शन कर भेंट धर एक दिन वहाँ रहके वहाँवारेनको उपदेश करकें वहाँसों पधारे सो तीर्थमंडल सह्यपर्वतमें गये जहाँ "अहोबलेश्वर" हें ओर जहाँ पिप्पलवृक्षके मूलसों कृष्णकी प्यारी कृष्णा नदी निकसी हे वहाँसों विराजक्षेत्र गये जहाँ तैलङ्ग ब्राह्मणनको स्वर्ग जेसो अग्रहार हे वहाँ ज्योतिषीब्राह्मणनसों क्षेत्रको माहात्म्य सुनकें उनकों आगे करकें यथाविधि

बहूनि तत्र तीर्थानि तथाप्यंतिगतानि वै ॥
तेषु स्नाताश्चक्रतीर्थे गोतीर्थे राघवस्य च ॥ १० ॥
जानक्याश्च तथा तीर्थे भीमतीर्थे ततः परम् ॥
जीवाप्तये द्विजार्भस्य शूद्रं हत्वा तपस्विनम् ॥ ११ ॥
राघवोऽत्र विशुद्धोऽभूत् रामतीर्थे गुरोर्गिरा ॥
कृष्णतीर्थे समानीय गा गोपालोऽभ्यषेचयत् ॥ १२ ॥
तेन प्रीतमना जातः कृष्णा जाता ततः प्रिया ॥
महेन्द्रो मखभंगेन न्यषेधद्वारिदान्निजान् ॥ १३ ॥
दुर्भिक्षस्तेन संजातस्तृणं काष्ठं सुदुर्लभम् ॥
मानुषीं तनुमाश्रित्य कुर्वंल्लीलास्तथाविधाः ॥ १४ ॥
जांगलेषु ह्यनूपेषू धेनूरत्रानयद्धरिः ॥
इत्थं प्रभावं संश्रुत्य वदतश्च सविस्तरम् ॥ १५ ॥
वेदिकायां समासीनाश्चोर्द्ध्वपुंड्रादिचिह्निताः ॥
समाधिभाषां ते पेठुर्देवर्षिनृविशुद्धये ॥ १६ ॥
पूजां कृत्वाथ पाकं च निवेद्य हरये च तत् ॥
परिचर्यां समाप्यैव कृत्वा कर्तव्यमेव च ॥ १७ ॥

स्नान कियो जो तीर्थ वहाँ पासमें हे सबमें स्नान कियो जहाँ चक्रतीर्थ हे राघवको गोतीर्थ हे ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥ ९ ॥ १० ॥ जानकीतीर्थ भीमतीर्थ हे जहाँ तपस्वी शूद्रकों मारकें गुरुकी आज्ञासों रामतीर्थमें राघव शुद्ध भये हे जहाँ गौअनकों स्नान करवायो हे गोपालनें वाही समयसों मानुषी शरीरकों धारणकर अनेक लीला करते कृष्णा कृष्णकी प्यारी भई यज्ञके भंगसों इन्द्रनें अपने मेघनकों जब रोंक्यो तासों दुर्भिक्ष भयो तृण काष्ठ दुर्लभ भये तब कृष्ण भगवान् अनूप जांगलदेशमें गौअनकों लाये एसो विस्तारसों प्रभाव वहाँको सुनते भये ओर अपनी वेदीमें विराजमान होयकें समाधिभाषाको पाठ करकें सेवा करकें

ततस्ते गुरवोऽभुञ्जन् श्रुतवतो यश स्थिता ॥
पप्रच्छ प्रणतास्तस्मै तत्किंचिदिह वर्ण्यते ॥ १८ ॥
आंध्रा प्राज्ञास्तत्र गतास्तेषां मुख्यो दिवाकर ॥
महर्षिकुलसभूत प्रांजलि सोऽब्रवीद्गुरून् ॥ १९ ॥
कर्मणां का गतिः पूर्णा ज्ञानस्याचार्यसत्तमा ॥
उपासनाभिधा भक्ते वदतु कृपया निजान् ॥ २० ॥
आचार्यो प्राहुरेतेभ्य यूयं शास्त्रविदुत्तमा ॥
नतो ऽपधु प्रश्नमल्पज्ञानां तताकृते ॥ २१ ॥
वेदाभ्यासैकनिरता ह्यग्निहोत्रपरायणा ॥
पट्कर्माणोपि कर्मिष्ठा स्सत्य यांत्यावजंत्यपि ॥ २२ ॥
गतिरेषैव सपूर्णा दृष्टा वैदिककर्मणाम् ॥
भूलोक च पुन सत्य जनिर्विप्रादिपूत्तमा ॥ २३ ॥
सुखमत्र परत्रापि दु खं तेषां न विद्यते ॥
कदाचिद्विच्युता स्तेभ्यो दुख भुक्तापि याति शम् ॥ २४ ॥

पाक करकें भगवान्के अर्पण करकें ओर सब कर्तव्यनकों करकें प्रसाद लीनो पीछें वहाँके आन्ध्रब्राह्मणनमें मुख्य महर्षिकुलमें उत्पन्न दिवाकरनामक ब्राह्मण हाथ जोडके बोले के हे आचार्यवर्य कर्मनकी केसी गति है ओर ज्ञान उपासनाकी केसी है सो कृपा करकें आज्ञा करो ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ ॥ १९ ॥ २० ॥ तब आप बोले जो तुमतो शास्त्रजानवेवारेनमें उत्तम हो जानतेभी प्रश्न करो हो सो दूसरे अज्ञानीनके ज्ञानके लिये, वेदाभ्यास करवेवारे अग्निहोत्रपरायण पट्कर्म करवेवारे कर्मिष्ठनको सत्यलोक मिले हे भूलोक मिले हे जावते आवते रहें हें ब्राह्मणनमें जन्म होय हें यहाँ वहाँ दोनो ठि-काने सुख मिले हे उनको दु ख नहीं होय हे येही वैदिककर्मनकी गति हे कदाचित् उनसों च्युत होयकेभी दु ख भोगकें पीछें सुखकों पावे हें वर्णा

संस्कृतानिजसंस्कारैः स्ववर्णाश्रमधर्मगाः ॥
कर्ममार्गे तेऽधिकृता ज्ञाने निष्कामचेतसः ॥ २५ ॥
पापकर्मविनिर्मुक्ताः काम्यकर्मबहिर्मुखाः ॥
नित्यनैमित्तिकरता ज्ञानमार्गेऽधिकारिणः ॥ २६ ॥
मौंजीबंधोत्तरं वेदवेदांगेषु च पंडितः ॥
सन्यस्य विधिना ज्ञानं गुरोराश्रमवान् भवेत ॥ २७ ॥
आश्रमत्रितयं कृत्वा विरक्तश्चैकमाश्रमम् ॥
विधाय यततां ज्ञानं सद्गुरोः प्राप्नुयादयम् ॥ २८ ॥
शुक्लगत्या ब्रह्मलोकं प्राप्योषित्वा चिरं बुधः ॥
मुच्यते ब्रह्मणा साकं ज्ञानिनो गतिरीदृशी ॥ २९ ॥
केचित्तत्रापरोक्षेण जातज्ञानेन पंडिताः ॥
ईश्वरस्य गुरोश्चापि सद्यो मुच्यंत्यनुग्रहात् ॥ ३० ॥
उपासकास्तु देवानां वेदमार्गपरायणाः ॥
आगमोक्तेन मार्गेण तं देवं प्रविशंति ते ॥ ३१ ॥

श्रमके अनुसार अपने संस्कारनसों संस्कृत होयकें कर्ममार्गके अधिकारी हें ओर ज्ञानमें निष्काम चित्तवारे पापकर्मसों रहित काम्यकर्मसों बहिर्मुख नित्यनैमित्तिककर्म करवेवारे अधिकारी हें यज्ञोपवीतके पीछें वेदवेदांगमें पंडित होयकें विधानपूर्वक गुरूसों सन्यास लेकें अथवा तीनों आश्रम पहले करकें विरक्त होयकें संन्यासाश्रम लेकें ज्ञान सम्पादन करकें शुक्लगतिसों ब्रह्मलोकमें जायकें बहोत समय वहाँ रहकें ब्रह्मके संग मुक्त होय हें ज्ञानिनकी ये गति हे कोई अपरोक्षज्ञानसों ईश्वरगुरूकी कृपासों वेगेही मुक्त होयजाय हें ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ ॥ २९ ॥ ३० ॥ ओर वेदमार्गमें तत्पर होयकें देवतानके उपासक वेदके कहे भये मार्गनसों वहाँ देवतानमें प्रवेश करें हें ओर मुक्त होयजाय

मुच्यते तेन ते सार्कं भ्रश्यंते निगमच्युता ॥
केवलागममार्गे तु निजानैवाधिकारिण ॥ ३२ ॥
ईश्वरे प्रेमसंपत्तिर्माहात्म्यज्ञानपूर्विका ॥
सा भक्तिस्तु तया सद्यो मुच्यतेऽनुग्रहाद्धरे ॥ ३३ ॥
एव ते कथिता विप्रा प्रोचुस्ते साधुसाध्विति ॥
प्रणम्य स्वगृह याता प्रातरार्यो स्ततोंचिता ॥ ३४ ॥
तत श्रीविठ्ठलेशस्य पुर दृष्ट्वा जनाकुलम् ॥
देवस्य सविधेऽरण्ये पारे स्थातुं दधुर्मनः ॥ ३५ ॥
सरिद्वरां भीमरथीं विपिनारामशोभिताम् ॥
स्वच्छाच्छस्वादुपानीयां शोभंतीं सुमनोभरे ॥ ३६ ॥
कूजद्विहगमिथुनां प्रफुल्लकमलाकराम् ॥
हससारसचक्राह्वैर्मंडितां सुपतत्रिभि ॥ ३७ ॥
क्रीड्यमानां च यादोभिर्वीचिमालापरिष्कृताम् ॥
साश्रितां जतुभि स्सर्वैर्दृढशुर्मुनिसेविताम् ॥ ३८ ॥

हैं उन्हींके सग ओर जो निगमसों रहित हैं वे भ्रष्ट होयजाय हैं ओर केवल आगममार्गमें निज अधिकारी नहीं हैं किन्तु ईश्वरमें माहात्म्यज्ञानपूर्वक प्रेम सम्पादन ये भक्ति है यासों भगवान्की अनुग्रहसों वेगी मुक्त होयजाय हैं एसें कहवेपे बहोत उत्तम२ये कहके वे ब्राह्मण प्रणाम करकें अपने २ घरमकों गये ओर प्रात काल श्रीमध्वाचार्यजी वहाँसों पधारे सो बहोत भीड़वारे श्रीविठ्ठलेशजी के पुरकों देखकें उनके पासही पारमें विराजवेको मन कियो वनबगीचानसों शोभित स्वच्छस्वादुजलवारी पुष्पनसों शोभती पक्षीनके जोडा जहाँ शब्द कररहें हैं कमल फूल रहें हैं हंस सारस चकई चकवा आदि अच्छे पक्षीनसों मंडित जलजन्तु जहाँ क्रीडा कररहें हैं लहरीरूपीमालासों अलकार करीगई मुनीनसों सेवित एसी नदीनमें श्रेष्ठ भीमरथी नदीकों देख्यो सो वाके पार जायकें

तीर्त्वाऽभिषेकविधिना स्नाताश्चक्रुर्निजाह्निकम् ॥
तावच्छ्रीविठ्ठलेशेन सख्यभावः स्फुटीकृतः ॥ ३९ ॥
तद्दर्शनरसोद्भूतप्रेमप्रसरसंप्लुतः ॥
विज्ञापितास्तज्जनैश्च संप्राप्ता मंदिरं हरेः ॥ ४० ॥
तत्र भागवतैः सर्वैर्हर्षोद्रेकवशादमी ॥
वंदितानंदिता नीतास्स्वकीयाचार्यभावतः ॥ ४१ ॥
प्रणम्य देवं साष्टांगं समर्प्य च महाधनम् ॥
संस्पृश्य चरणांभोजे परिष्वज्य मुदं ययुः ॥ ४२ ॥
तत्राभ्यर्चा कृता पंचामृतसेकपुरस्सरा ॥
निजाभिनीतैः सद्वस्त्रैर्विचित्रैरपि मंडनैः ॥ ४३ ॥
अत्त्युत्तमैः शाकपाकैर्नैवेद्यं विनिवेदितम् ॥
दत्वाचमनतांबूले कृतं नीराजनं हरेः ॥ ४४ ॥
तौर्यत्रिकेन महता चारु संस्तवनं कृतम् ॥
प्रदक्षिणा प्रणामं च कृत्वा संतोष्य तज्जनान् ॥ ४५ ॥

अभिषेकविधिसों स्नान करकें अपनो आह्निक कियो इतनेहीमें श्रीविठ्ठलेशजीनें मित्रता प्रगट करी सो उनके दर्शनसों रसको उद्भव भयो है ओर प्रेमरससों डूबगये ओर सेवकनसों प्राथेना कियेगये एसे श्रीमदाचार्यजी उनके मंदिरमें पधारे ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ वहाँ सब भागवत वैष्णवननें बडे हर्षसों प्रणाम करकें स्तुति करकें अपने आचार्यनके जेंसे पधराये सो वहाँ पधारकें देवको साष्टांगप्रणाम करकें भेट धरकें चरणस्पर्श करकें आलिङ्गन करकें बडे आनन्दित भये ओर पंचामृतसों स्नान करायो ओर अपने लाये भये अच्छे वस्त्र तथा आभूषण धराये ओर उत्तम शाक पाकवारे नैवेद्य निवेदन किये आचमन करायकें ताम्बूल देकें बडे बाजनके संग आरती करी ओर स्तुति प्रदक्षिणा प्रणाम करकें वहाँके सेवकनको सन्तोष करकें अपनी

निजाशिक्षां समागत्य तत्र पारायणं व्यधुः ॥
श्रीमद्भागवतारंभे जातस्तत्र महोत्सवः ॥ ४६ ॥
आयाता वैष्णवाः स्वीया विप्रा भागवतोत्तमाः ॥
पीत्वा कथामृतं कर्णपुटैरत्यद्भुतं हरेः ॥ ४७ ॥
भीतसंसारसंतापाः प्राहुः प्रांजलयस्तु ते ॥
दीनबंधो दयासिंधो विज्ञप्तिं नोऽवधारय ॥ ४८ ॥
श्रीमतां सम्प्रदाये किं प्रमाणं किं च साधनम् ॥
तदाहुः श्रीमदाचार्या वेदैः सूत्रैश्च गीतया ॥ ४९ ॥
श्रीमद्भागवतं मानं साधनं नवधार्चनम् ॥
श्रीवेदव्यासश्रीविष्णुस्वामिनो नः परंपरा ॥ ५० ॥
भावाद्वैतक्रियाद्वैतद्रव्याद्वैतस्य भावना ॥
श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम् ॥ ५१ ॥
अर्चनं वंदनं दास्यं सख्यमात्मनिवेदनम् ॥
नवभिः साधनैरेतैः प्रीयते भगवानलम् ॥ ५२ ॥

बैठकमें आपकें पारायण कियो तामें बडो उत्सव भयो अपने वैष्णव और भागवतब्राह्मण सब कथारूपी अमृतकों पान करकें संसारतापसों छूटकें हाथ जोडकें बोले जो हे दीनबन्धो ! हे दयासिन्धो ! हमारी प्रार्थना सुनो आपके सम्प्रदायमें कहा प्रमाण हे कहा साधन हे तब आपनें कह्यो जो चारो वेद सूत्र गीता श्रीमद्भागवत ये प्रमाण हें नवधा भक्ति साधन हे श्रीवेदव्यास श्रीविष्णुस्वामी ये हमारी परम्परा हे ॥ ४१ ॥ ४२ ॥ ४३ ॥ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥ ५० ॥ भावाद्वैत क्रियाद्वैत द्रव्याद्वैत ये भावना हे श्रवण कीर्तन स्मरण पादसेवन अर्चन वंदन दास्य सख्य आत्मसमर्पण इन नवसाधननसों भगवान् प्रसन्न होय हें सम्प्रदायपूर्वक य सब करे अथवा एकही करे एसे आपके कहेवेपे कोइ

संयुक्तैश्च पृथग्भूतैः संप्रदायपुरस्सरैः ॥
आचार्यभाषितं श्रुत्वा कोप्यूचे नाम वल्लभः ॥ ५३ ॥
विनापि संप्रदायेन नाम किं नैव मोचकम् ॥
कः संप्रदायो गोपीनां गजेन्द्रस्य हनूमतः ॥ ५४ ॥
अजामिलस्य ब्रूताथ सिद्धिर्भक्त्यैव दृश्यते ॥
अब्रुवन्श्रीमदाचार्यास्तदा सत्यं तवेरितम् ॥ ५५ ॥
मोचकं पातकानां च मोचनं बंधनस्य च ॥
हरेर्नाम्नः प्रभावेण जायते नात्र संशयः ॥ ५६ ॥
हरिलीलारसप्राप्तौ संप्रदायश्च कारणम् ॥
गोप्यस्तु श्रुतयः साक्षादिंद्रद्युम्नो गजोप्यसौ ॥ ५७ ॥
रुद्रावतारः कपिराट् न ते शास्त्रस्य गोचराः ॥
शिष्योऽसौ विष्णुदूतानां जातः साक्षादजामिलः ॥ ५८ ॥
श्रूयते स हरिद्वारे तपस्तेपे ततः पुनः ॥
पुण्यं गंगाजलं सर्वं स्थानभेदान्न किं पुनः ॥ ५९ ॥
पुण्यातिपुण्यं भवति नाम्नाप्याम्नायभेदतः ॥
वेश्यादिसहिता मत्ता गायंतीह हरेर्यशः ॥ ६० ॥

वल्लभ नामको बोल्यो जो कहा विना सम्प्रदायके नामसों पाप नहीं छूटते गोपीनको गजेन्द्रको हनूमान्को अजामिलको कहा सम्प्रदाय हो उनको सिद्धि भक्तिहीसों देखें हें तब आपने कह्यो जो तुम्हारो कहनो ठीक हे हरिनामके प्रभावसों पातक ओर बन्धन छूटजाँय हें यामें संदेह नहीं हे परन्तु हरिलीलारसप्राप्तिमें सम्प्रदाय कारण हे ओर गोपी तो साक्षात् श्रुतिरूप हीं । गज इन्द्रद्युम्न हो हनुमान् रुद्रावतार हे वे शास्त्रके विषय नहीं हे ओर अजामिल साक्षात् विष्णुदूत हो सुनें हें जो हरिद्वारमें उननें वडी तपस्या करीही, सब गंगाजल पुण्य हे परन्तु स्थानभेदसों कहा विशेष नहीं हे

वृदावने तपोयुक्ता मुनय किं च ते समा ॥
गर्ते च पल्वले तीर्थे यथा नीरं विभिद्यते ॥ ६१ ॥
तथैव भिद्यते नाम भक्तिश्च नवधा तथा ॥
तदाहासो पुन क्वेत्थ सम्यक् शास्त्रे निरूपितम् ॥ ६२ ॥
रविप्रभेव तत्तुल्य नाम सर्वत्र चैकधा ॥
चांडालस्य गृहे दीप्ति यथैव कुरुते प्रभा ॥ ६३ ॥
तथैव गेहे विप्रस्य नेत्य नाम्न्यपि सा भिदा ॥
त्वं वृद्धो बालिशमतिस्तदा श्रीवल्लभा जगु ॥ ६४ ॥
दशापराधा श्रूयंते नाम्नि किं ते न गोचरा ॥
वर्णाश्रमपरित्यागो गुरुत्यागस्ततः पर ॥ ६५ ॥
पापारंभो नामभक्त्या देवद्वेषस्सदाश्रयात् ॥
वैष्णवानां च विद्वेषो नामविक्रयण तथा ॥ ६६ ॥
आजीवनकृते नामयोजन शपथेष्वथ ॥
अविश्वासोऽस्य माहात्म्येयापराधकृते हरे ॥ ६७ ॥

वेश्याविकवी हरिको यश गान करें हैं वृन्दावनमें तपस्वी मुनिबी गान करें हैं तो कहा वे समान हैं ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ॥ ५६ ॥ ५७ ॥ ५८ ॥ ४९ ॥ ६० ॥ कीचवारेगडहा तीर्थमें जल कहा जुदो नहीं होय हे एसेही नाम भक्ति जुदे २ हैं तब पीछे वानें कही जो शास्त्रमें ये बात अच्छीप्रकारसों कहीं कही है सूर्यके प्रभा जेसो नाम सब ठिकाने एकही चालको हे चांडालके घरमें जेसो प्रकाश हे वेसेही ब्राह्मणके घरमें एसे नाममेंबी भेद नहीं तब आपने कह्यो जो दश अपराध सुनें हैं वे कहा नाममें नहीं हैं वर्णाश्रम छोडदेनो, गुरुको त्याग,पापको आरम्भ,नामभक्ति करकें देवतानसों द्वेष, वैष्णवनसों द्वेष, नामको बेंचनो नामसों जीविका, कसमखानो, तासी माहात्म्यमें अविश्वास, अपराध करनेके लिये, एसे नामके

इत्येवं दशधा नाम्नोऽप्यपराधाः प्रकीर्त्तिताः ॥
नाम्नस्तैनैव नाम स्यात्प्रसादो भजतामपि ॥ ६८ ॥
अपि चेत्सुदुराचारो भजते मामनन्यभाक् ॥
साधुरेव स मंतव्यः सम्यग्व्यवसितो हि सः ॥ ६९ ॥
क्षिप्रं भवति धर्मात्मा शश्वच्छांतिं निगच्छति ॥
इत्यादिवचनैर्भक्तः कृतपापो विशुद्ध्यति ॥ ७० ॥
नैवं पापपरो नाम्ना पापाच्छुद्धिस्तु सर्वतः ॥
भक्तिमार्गेऽप्यशक्तानां पापिनां तद्बलादपि ॥ ७१ ॥
यस्यां योनौ भवेज्जन्म शुद्धौ भक्तिः पुनर्भवेत् ॥
शांडिल्यकथनं चैव वैष्णवेष्वपरत्र च ॥ ७२ ॥
हरेर्न विप्रियं कार्यं हरिरेतैः प्रकुप्यति ॥
सरलाः साधवः शांता विरक्ताश्च दयालवः ॥ ७३ ॥
शक्त्या स्वधर्मनिरतास्ते हरेरतिवल्लभाः ॥
खलता निर्दयत्वं च दुष्टा सत्या हितं वचः ॥ ७४ ॥

दश दोष हैं इनसों भजेश्वारेनको नाम प्रसाददायी नहीं होयहे ओर "अपिचे-त्सुदुराचारः" इत्यादि गीताके वचननको ये तात्पर्य हे के जानें पाप कियो हे ओर पीछें निरन्तर मोकों भजे हे वो शुद्ध होयजाय हे ॥ ६१ ॥ ६२ ॥ ६३ ॥ ॥ ६४ ॥ ६५ ॥ ६६ ॥ ६७ ॥ ६८ ॥ ६९ ॥ ७० ॥ ओर नामसों पापपर न हो भक्तिमार्गमें अशक्त जो हें उनकोबी नामबलसों दूसरे जन्ममें शुद्ध होयवेपे भक्ति उत्पन्न होय हे एसो शांडिल्यको कथन हे ओर दूसरी जगहबी लिख्यो हे के हरिके विरुद्ध काम न करे हरि तासों क्रुद्ध होय हें सीधे साधु, शान्त, विरक्त, दयालु, स्वधर्मतत्पर जो हें वे भगवान्‌के अति प्यारे हें ओर खल निर्दई दुष्ट मिथ्यावादी कामी क्रोधी अतिलोभी महात्मानके अपराधी गो ब्राह्मण भक्त देवता इनके द्वेषी पाप क-

कामक्रोधोतिलोभश्च ह्यपराधो महात्मनाम् ॥
गोविप्रभक्तदेवानां विद्वेषश्चेनसां कृति ॥ ७५ ॥
सम्प्रदायगुरूणां च त्यागो नास्तिकता तथा ॥
एतैर्दोषैश्चापराधैर्हरिर्नैव प्रसीदति ॥ ७६ ॥
पवाद स पुनश्चैव कथं भक्ता विरागिण ॥
वर्णाश्रमाचारहीना नैव भागवता मता ॥ ७७ ॥
अब्रुवंच्छ्रीमदाचार्यो शृणुष्व वचनं मम ॥
विष्णुलिंगधराश्चेते वैष्णवाश्रमिणो मता ॥ ७८ ॥
गुरूणां संप्रदायेन कुर्वंति भजन हरे ॥
परोपकारे सन्नद्धा धर्मरक्षापरायणा ॥ ७९ ॥
शक्त्या स्वधर्मं कुर्वंति तपोदानव्रतादिकम् ॥
अन्नसत्र प्रकुर्वंति पांथानामाश्रयप्रदा ॥ ८० ॥
सन्मार्गस्योपदेष्टारो हरिपूजाप्रवर्त्तका ॥
विमुखा पापकर्मभ्यो हिंस्यधर्मनिवर्त्तका ॥ ८१ ॥

रवेवारे सम्प्रदायगुरूनके त्यागी नास्तिक इनसों हरि नहीं प्रसन्न होय हैं तब पानें कह्यो के ये वैरागी भक्त कैसे हैं ये तो वर्णाश्रम ओर आचारसों हीन हैं भागवत वैष्णव एसे नहीं होते तब आपनें कह्यो के सुनो ये तो विष्णुके चिन्ह धारण करवेवारे हैं वैष्णवाश्रमी हैं गुरुनके सम्प्रदायसों हरिको भजन करें हैं परोपकारमें कटिबद्ध रहे हैं धर्मकी रक्षामें तत्पर हैं शक्तिसों स्वधर्म, तप, दान, व्रतादिक, अन्नक्षेत्र करें हैं मार्गमें चलवेवारेनको आश्रय देय हैं ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ॥ ७६ ॥ ७७ ॥ ७८ ॥ ७९ ॥ ८० ॥ सन्मार्गके उपदेष्टा हरि पूजाके प्रवर्तक, पापकर्मनसों विमुख, हिंसाके निवर्तक, जितेन्द्रिय, शान्त,

जितेंद्रियाः शांतरूपाः कामक्रोधादिवर्ज्जिताः ॥
शरणागतसंत्राणपरा गोब्राह्मणप्रियाः ॥ ८२ ॥
वैष्णवाचार्यसद्भक्ता निर्लोभा वीतरागिणः ॥
एते वै वैष्णववरास्तीर्थयात्रापरायणाः ॥ ८३ ॥
कथं त्यक्ताश्रमाश्चैतेऽवद्यमेषु च किं पुनः ॥
पुनः स प्राह किमतो नामैश्यं न हि पापिनाम् ॥ ८४ ॥
स्वधर्मत्यागिनां नृणां गतिर्नैव फले भिदा ॥
आचार्यास्तु तदा प्रोचुः शक्त्या धर्मं समाचरेत् ॥ ८५ ॥
देशकालादितस्त्यक्तेऽशक्त्या नामास्ति संश्रयम् ॥
यथेदानीं द्विजा व्रात्यास्तरं त्येवहिसंश्रयात् ॥ ८६ ॥
नैवं नामाश्रयात्याग इत्युक्तं बहुशो बुधैः ॥
एवं ब्रुवत्सु गुरुषु स पपात धरातले ॥ ८७ ॥
धिक्कृतो वैष्णवैः सर्वैः प्राह प्राञ्जलिरुत्थितः ॥
भवतामपराधेन वज्रकायोपि भिद्यते ॥ ८८ ॥
कोहं वराको नैतन्मे मात्सर्याद्याहृतं मनाक् ॥
स्मार्त्तानां संशयच्छित्यै प्रश्नोयं समुदाहृतः ॥ ८९ ॥
उत्तरं वांछितं लब्धं शरणीकुरु मां प्रभो ॥
भवतां शरणं प्राप्य कृतार्थः स्यान्नचान्यथा ॥ ९० ॥

कामक्रोधादिसों वर्जित, गो ब्राह्मणनके प्रिय, वैष्णवाचार्यनके भक्त, निर्लोभी, रागरहित एसे ये तीर्थयात्रा करवेवारे वैष्णवनमें श्रेष्ठ हैं ये त्यक्ताश्रमी कैसें हैं इनमें कहा दोष हे ये कहवेपे वो पृथ्वीपे गिरपड्यो ओर सब वैष्णवनने धिक्कारो तब वो हाथ जोडके उठके बोल्यो के आपके अपराधसों वज्रको शरीरवारोवी पिघलजाय मेरी तो कौन गिनती मेरे मनमें कछू मात्सर्य नहीं हे मैंनें तो स्मार्तनके संदेह दूर करवेके लिये ये प्रश्न कियो हे

गुरवस्तु तदा तस्मै ददुरष्टाक्षरं मनुम् ॥
मालां रहस्य विज्ञान सेवन विठ्ठलप्रभो ॥ ९१ ॥
पुनश्च ज्ञानदेवस्य नामदेवस्य चापरे ॥
सम्प्रदायगता शिष्या प्रोचु प्रांजलयो मुदा ॥ ९२ ॥
विष्णुस्वामिगुरोरेव वयमाम्नायगामिन ॥
शरण व प्रपन्ना स्मोप्युपदेशाभिलापिण ॥ ९३ ॥
सम्प्रदाये कुमाराणां ब्राह्मे भागवते बुधा ॥
ब्रह्मदत्तादयश्चेमे द्वैताद्वैतपरायणा ॥ ९४ ॥
श्रीमन्निम्बादित्यनामा ह्याचार्योऽत्र पुराऽभवत् ॥
सुदर्शनावतारोऽसौ सनकादिमते स्थित ॥ ९५ ॥
एव भागवता चैते श्रीराधाकृष्णवल्लभा ॥
चित्त्वादभेदो नोक्तासौ यथैव गुरुचन्द्रयो ॥ ९६ ॥
भेदस्तु वास्तव प्रोक्तो जीवात्मपरमात्मनो ॥
एवविध मतं चेषामस्माकं कीदृशं प्रभो ॥ ९७ ॥

सो यथार्थ उत्तर मिलगयो मोकों शरण लीजिये आपके शरण आयके कृतार्थ होऊगो दूसरे उपायसों नहीं ॥ ८१ ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥ ८६ ॥ ८७ ॥ ८८ ॥ ८९ ॥ ९० ॥ तब श्रीमदाचार्यजीने वाको अष्टाक्षर मन्त्र दियो ओर माला दीनी सम्प्रदायको रहस्यज्ञान विठ्ठलप्रभुकी सेवा दीनी पीछें ओरभी ज्ञानदेवके शिष्य हाथ जोडकें बोले के विष्णुस्वामिसम्प्रदायकेही हमलोग हैं हम उपदेश लेवेकी इच्छासों आपके शरण आये हैं ओर सनत्कुमारादिकनके सम्प्रदायके द्वैताद्वैतपरायण ब्रह्मदत्तआदि ये पंडित हैं इनके सम्प्रदायके आचार्य श्रीनिम्बादित्य यहाँ पहले भये हे जो सुदर्शनके अवतार हैं सनकादिमतमें एसें ये वैष्णव हैं राधाकृष्णके भक्त चित्तसों अभेद ओर वास्तविक भेद मानें हैं एसो इनको मत हे ओर हमारो केसो हे तब प्रसन्न होयके

तदाहुर्गुरवो हृष्टाः सावधाना निबोधत ॥
द्विविधः संप्रदायो वः शेषब्रह्मादिभेदतः ॥ ९८ ॥
शैवभागवतानां नो हारः सर्वमिदं जगत् ॥
तथापि ब्रह्मभेदोसौ कितव इति च श्रुतेः ॥ ९९ ॥
ब्रह्मरूपेण ब्रह्मांशो जीवो दास्याय निर्गतः ॥
स दासभावतो भक्त्या हरेर्लीलाधिकारभाक् ॥ १०० ॥
यदि भेदो वास्तवः स्यान्न स्यादच्युतता हरेः ॥
अप्रच्युतः स्वरूपेण तेनेदमखिलं ततम् ॥ १०१ ॥
यत्र येन यतो यस्मै यस्मिन्यद्यद्यथा यदा ॥
स्यादिदं भगवान्साक्षादित्युक्तास्याऽखिलात्मता ॥ १०२ ॥
विशुद्धं केवलं ज्ञानं सदानंदं निरामयम् ॥
तत्त्वं तदेतदखिलं लीलयाऽनेकधाऽभवत् ॥ १०३ ॥
तमेतं भजमानानां रुचीनामेव भेदतः ॥
संप्रदायाः पृथग्जातायोग्याः स्वीयाधिकारतः ॥ १०४ ॥

आप बोले के सावधान होयके सुनो शेषब्रह्मादिभेदसों दो प्रकारको तुम्हारो सम्प्रदाय हे ओर शैव भागवत हमलोगनको हरिही ये सब जगत् हे तो "ब्रह्मभेदांशा"या श्रुतिसों ब्रह्मरूपसों ब्रह्मांश जीव दास्य करवेके लिये निकसें हें वे दासभावसों भक्तिसा हरिलीलाके अधिकारी हें ॥ ९१ ॥ ॥ ९२ ॥ ९३ ॥ ९४ ॥ ९५ ॥ ९६ ॥ ९७ ॥ ९८ ॥ ९९ ॥ ॥ १०० ॥ जो वास्तव भेद होय तो हरिकी अच्युतता नहीं होयगी अप्रच्युतस्वरूपसों उनने ये सब रच्योहे "यत्र येन"या वचनसों भगवान्‌की सर्वात्मकता हे विशुद्ध निरामय वोही ब्रह्म अपनी लीलासों अनेकप्रकारको भयो हे उन इनको भजवेवारेकी रुचिभेदहीसों ओर अधिकारीनके भेद हीसों जुदे २ सम्प्रदाय हें ॥ श्रीगीताजीमें भगवान्‌नें कह्योहे जो मनुष्य एकत्व

गीतायां भगवानाह चोपासतेऽथ मां जनाः ॥
एकत्वेन पृथक्त्वेन बहुधा विश्वतो मुखम् ॥ १०५ ॥
या प्रेमलक्षणा भक्तिः सात्मनो निरुपाधिकी ॥
परात्मनि न सा मुख्या तस्मादेकात्मना भजेत् ॥ १०६ ॥
भावाद्वैतं ब्रह्मणास्य सुवर्णस्योर्मिकादिभिः ॥
विधीयते क्रियाद्वैतं सत्क्रियाणां समर्पणे ॥ १०७ ॥
हरेर्यदा भवेद्द्रव्यं द्रव्याद्वैतं तदा भवेत् ॥
भक्तिर्हरौ विरक्तिश्च समृतौ तृप्तिरात्मनि ॥ १०८ ॥
वीतलज्जो हरेरेव कीर्तयन् विमलं यशः ॥
नृत्यति क्वापि हसति रौति रोदिति मुह्यति ॥ १०९ ॥
पुलकाचितसर्वांगोबाष्पकंठोप्यलौकिकः ॥
जायते भगवद्भक्तः कर्तव्यं तस्य किं पुनः ॥ ११० ॥
सर्वत्रैव हरिं पश्यन् स्वयंच हरितां गतः ॥
पूर्णार्थो ब्रह्मभावेन विशुद्धाद्वैतदर्शनात् ॥ १११ ॥

ओर पृथकभावसों मोकों भजेहैं जो प्रेमलक्षणाभक्ति है वो आत्माकी निरुपाधि है परमात्मामें वो मुख्य नहीं है तासों एकात्म करके भजे भावाद्वैत, क्रियाद्वैत, द्रव्याद्वैतकी ब्रह्ममें भावना करे । हरिमें भक्ति संसारमें विरक्ति आत्मामें तृप्ति करे । ओर लज्जाको छोडके हरिहीके विमलयशको गान करते नाचे है कहीं हँसे है रोय है मोहित होय है आनन्दित होय है श्वाससों कठ भरजाय है एसो अलौकिक भक्ति होय है वाको कहा कर्त्तव्य है ॥ १०१ ॥ १०२ ॥ १०३ ॥ १०४ ॥ ॥ १०५ ॥ १०६ ॥ १०७ ॥ १०८ ॥ १०९ ॥ ११० ॥ सब ठिकाने हरिको देखते आपबी हरिरूप होयजाय है ओर शुद्धाद्वैतदर्शनसों

यूयं कुरुत सद्भक्तिं भेदाभेदकथोज्झिताः ॥
प्रसीदति हरिर्भक्त्या सर्वमन्याद्विडंबनम् ॥ ११२ ॥
अनुशास्य स्वशिष्येभ्यश्चैवमादेशिकोत्तमाः ॥
चक्रुः पारायणं नित्त्यं शृंगारं विठ्ठलप्रभोः ॥ ११३ ॥
तत्र शृंगारसमये कृते रंगमहोत्सवे ॥
पीतरंगसुगंधानां चूर्णैः श्रीशेऽभितोषिते ॥ ११४ ॥
निर्वर्त्त्यार्चां प्रचलिते कश्चिद्भक्तो हरिप्रियः ॥
पांडुरंगाऽभिधः प्राप्तो श्रीहरिप्रेरितो हृदा ॥ ११५ ॥
पयोव्रतो द्वादशाब्दं व्रजलीलादिदृक्षया ॥
प्राञ्जलिः प्रणतः प्राह पूरयंतु मनोरथम् ॥ ११६ ॥
गुरवः शरणं प्राप्तमनुगृह्णंतु किङ्करम् ॥
तदाऽसा गुरुभिर्नीतः स्नातः शुद्धो निजस्थले ॥ ११७ ॥
भीमरथ्या महानद्या दर्यामुत्तररोधसि ॥
दिव्ये च लोचन दत्त सा लीला तस्य दर्शिता ॥ ११८ ॥

ब्रह्मभावसों पूर्णार्थ होयजाय हे तासों भेदाभेदकी कथाकों छोडक तुम सब भक्ति करो । भगवान् भक्तिसों प्रसन्न होय हैं। ओर सब विडम्बना हे । एसे अपने शिष्यनकों उपदेश करते भये नित्य पारायण करते ओर विठ्ठलप्रभुकी सेवा करते कोई दिन रंगमहोत्सवमें शृंगारसमयमें पीतरंगसुगन्धवारे चर्णसों भगवान्को तुष्ट करकें चले सो कोई भक्त पांडुरंग नामक भगवान्की प्रेरणासों राहमें मिल्यो जो बारह वर्ष केवल दूध पीके रह्यो हो सो व्रजलीला देखवेकी इच्छासों हाथ जोडके बोल्यो के हे गुरो ! मैं आपके शरण आयो हूँ या किंकरके ऊपर आप अनुग्रह करें । तब आप उनको अपने स्थानमें ले गये ओर स्नान किये भये शुद्ध इनको महानदी भीमरथीके उत्तर आडी कन्दरामें दिव्यदृष्टि देके लीला दिखाई ओर लीलाको निरूपण कियो सो ताके आनन्दमें दामोदर कृष्णदास ओर अपनेभक्त तथा वो ब्राह्मण ये सब

निरूपितायां लीलायां परमानंदसम्प्लुता ॥
दामोदर कृष्णदास परे स्वीया द्विजोप्यसौ ॥ ११९ ॥
मुहूर्तद्वितय सप दृष्टानदोत्सवादित ॥
पूर्णार्थो श्रीमदाचार्यै पुनर्लोके समुद्धृता ॥ १२० ॥
बध्वांजलिं पुन प्राह किमर्थमहमुद्धृत ॥
परमानंदसमग्नो गुरुभिश्च कृपालुभि ॥ १२१ ॥
तदाहुर्गुरवस्तस्मै रुक्मिणीवल्लभ हरिम् ॥
सेवस्वेय हरेर्लीला ध्याता भास्यति चेतसि ॥ १२२ ॥
पूर्णार्थो ब्राह्मणश्चेत्थ गतो मुक्तपयोव्रत ॥
सेवमानो हरिं नित्यं लीलालीनोऽभवत्पुन ॥ १२३ ॥
अथाहु श्रीमदाचार्यान् सर्वे ते निजसेवका ॥
व्रजस्य दर्शनं कार्यं यत्र कृष्णेन खेलितम् ॥ १२४ ॥
वयं तु शरणापन्ना नैव यामो भवद्दते ॥
श्रीमत एव चास्माकं देवतं पुरुषोत्तमा ॥ १२५ ॥

मग्न होय गये सो नन्दोत्सवसा आदि लेके लीला दो मुहूर्त दिखाई पीछें याही लोकमें उनका उद्धार कियो ॥ १११ ॥ ११२ ॥ ११३ ॥ ॥ ११४ ॥ ११५ ॥ ११६ ॥ ११७ ॥ ११८ ॥ ११९ ॥ ॥ १२० ॥ सो वो भक्त हाथ जोडके बोल्यों के मोको क्यों आपनें निकास्यो मैंतो परमआनन्दमें मग्न हो । तब श्रीमदाचार्यजीने कह्यो जो रुक्मिणी वल्लभकी सेवा करो ओर जब चित्तमें ध्यान करोगे तब लीला दीखपडेगी यामकार वो ब्राह्मण पूर्णार्थ होयकें ओर पयोव्रत छोडकें गयो ओर नित्य हरिकी सेवा करतो लीलामें लीन भयो पीछ सब सेवकनने प्रार्थना करी जो जहाँ कृष्ण खेले हें या व्रजके दर्शन करावो हम सब तो आपके शरण हैं आपकों छोडके नहीं जायेंगे आपही हमारे पुरुषोत्तम देव हे तब आपनें आज्ञा

तदाहुः श्रीमदाचार्याः सम्यक् सम्यक् विचारितम् ॥
व्रजमेव हि सर्वस्वमस्माकमिति गम्यते ॥ १२६ ॥
इत्युक्त्वा विठ्ठलं गत्वा विज्ञाप्य च तदाज्ञया ॥
आचार्याः प्रस्थितास्तस्मात्स्वकीयैः पंचसेवकैः ॥ १२७ ॥
श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिँस्तृतीयेसमजनिपटहोवेददिक्सम्मितोयम् १२८

---

वंदे श्रीजानकीजानिं गोस्वामितिलकायितम् ॥
दैवोद्धारकृते जातं रघुनाथं सलक्ष्मणम् ॥ १ ॥
नाशिकं समनुप्राप्ता राघवस्याशिकापदम् ॥
विक्षता शूर्पणख्यात्र लक्ष्मणेन पुरा कृता ॥ २ ॥

जो बहुत उत्तम विचाऱ्यो हे व्रजही हमारो सर्वस्व हे वहीं चलेंगे ये कहकें श्रीविठ्ठलनाथके पास जायकें विज्ञप्ति करकें उनकी आज्ञासों अपने सेवकनके संग वहाँसों पधारे॥ १२१॥ १२२ ॥ १२३ ॥ १२४ ॥ १२५ ॥ १२६ ॥ ॥ १२७ ॥ समयनीतिके जानवेवारे जगद्गुरु श्रीमद्गोविन्दाचार्यजी महाराजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यासविष्णुस्वामीसम्प्रदायके ग्रन्थनके अनुकूल हरिभक्तनके सुख देवेवारे या चरित्रग्रन्थमें तीसरे प्रस्थानमें चौदहवों पटह ये समाप्त भयो ॥ १२८ ॥

---

अब ग्रन्थकार श्रीरघुनाथजीके अवतार गोस्वामिश्रीरघुनाथजीको नमस्कार करे हैं के दैवीजीवनके उद्धारके लिये प्रगट भये श्रीजानकीशको में नमस्कार करूं हूँ ॥ १ ॥ पीछें श्रीमदाचार्यजी वहाँसों नाशिक पधारे जहाँ

यत्र पचवटी पचावती गोदानदीतटे ॥
यत्र भ्राजज्जटी प्रीत्यै जानकी जानकीशयो ॥ ३ ॥
पारायणं कृत तत्र श्रीनारायणतुष्टये ॥
पारायणस्य मध्ये तु नास्तिकस्य बुधोत्तमे ॥ ४ ॥
आकर्णित समायाता ह्याचार्यो वैष्णवाऽभिधाः ॥
बाल्ये यैर्निर्जिता काशी कैशोर्ये कृष्णवित्सभा ॥ ५ ॥
पारायण ते कुर्वंति भांति ते वह्निसन्निभा ॥
आदेय दर्शनं तेषा निर्णेय दर्शन पुनः ॥ ६ ॥
हर्षामर्षो न कर्तव्यो महद्भयोऽत्र जयाजये ॥
भस्मरुद्राक्षकलिता समायाता सहस्रश ॥ ७ ॥
समाहताश्चोपविष्टा ह्याचार्यान् प्रणिपत्य ते ॥
वयं तु ब्राह्मणा सर्वे शिवाराधनतत्परा ॥ ८ ॥
श्रौतस्मार्ताग्निनिरता वेदविद्यासु विश्रुता ॥
वेदे च धर्मशास्त्रे च तत्रयुग्मे च व्याकृतौ ॥ ९ ॥

लक्ष्मणजीनें सूपनखाकी नाक काटी ही ॥ २ ॥ जहाँ गोदावरी नदीके किनारे पचवटी हे वहाँ श्रीनारायणकी प्रसन्नताके लियें पारायण कियो सो बीचमेंही नासिकके विद्वाननने सुन्यो के श्रीषष्ठमाचार्यजी पधारे हैं जिननें बाल्यावस्थामें काशीकों किशोर अवस्थामें कृष्णदेवराजाकी सभाकों जीत्यो हे वे पारायण करें हैं अग्निपुञ्जके समान तेज हे उनके दर्शन करनो पीछे दर्शनशास्त्रनको निर्णय करनो चाहिये उन महात्माके सग जयपराजयको कछू हर्ष क्रोध न करनो चहिये सो ये विचारकें भस्मरुद्राक्ष धारन किये हजारन विद्वान् आये सो अच्छे सत्कारसों पायकें बैठे ओर आपकों प्रणाम करकें बोले के हम शिवाराधनमें तत्पर हें श्रौतस्मार्तअग्निवारे वेदवि

नाशिकस्था द्विजाः ख्याता नासाभा दक्षिणादिशः ॥
अस्माकं वेदविद्यासु क्रियतां सुपरीक्षणम् ॥ १० ॥
दीयतां वाथ गुरवः प्रोचुः शीघ्रं विधीयताम् ॥
इत्युक्त्वा पृष्टसूक्तस्य पदक्रमजटादिषु ॥ ११ ॥
अनुलोमप्रातिलोम्यात्परीक्षायै समर्पिता ॥
व्याकृतौ स्मृतिग्रंथे च मीमांसाद्वितये तथा ॥ १२ ॥
दत्तं परीक्षणं तेषां ग्रहणे विजयः कृतः ॥
ततस्ते खिन्नमनसो मतवादेऽभ्ययूयुजन् ॥ १३ ॥
भस्मरुद्राक्षकलिता महादेवार्चने रताः ॥
ते वै भागवताः प्रोक्ता नेतरे शंकरद्विषः ॥ १४ ॥
इत्थं कूर्मे तथादित्ये लैंगे शैवे सहस्रशः ॥
वचांसि विलसंत्येव गतिस्तेषां निरूप्यताम् ॥ १५ ॥
इत्युक्ते प्राहुराचार्या यूयं संभ्रममागताः ॥
शंकरो भगवांस्तस्य भक्ता भागवता न किम् ॥ १६ ॥

याधर्मशास्त्र तन्त्र इनमें प्रसिद्ध नासिकके रहवेवारे दक्षिणदिशाके नासिका रूप ब्राह्मणहैं हमारी वेदविद्यामें परिक्षा करो अथवा आपही दीजिये॥ ३ ॥ ४ ॥ ५॥ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ तब श्रीमदाचार्यजीनें वेगीसों कह्यो जो, लीजिये सो उननें पद क्रम जटा सूक्त इनमें पूँछ्यो सो आपनें सीधो उलटो दोनों चालसों पढदीनो ओर व्याकरण स्मृति दोनों मीमांसा इन सबमें परीक्षा देदीनी ओर उनसों लेवेके समय उनसों नहीं बन्यो सो उनको विजय कियो। तब वे उदास होयके मतवादमें विवाद करवेलगे ओर कह्यो के महादेवकी पूजा करवेवारे भस्मरुद्राक्ष धारण करवेवारेही भागवत हैं दूसरे शंकरसों द्वेष करवेवारे नहीं ये बात कूर्म आदित्य लिंग शिव आदिपुराणनमें हजारनठिकाने लिखी है सो ताकी कहा गति होयगी ये कहवेवे आपवोले तब कहा भयो आगये हो शंक—

अभेदोपासनामार्गे तथा तन्त्रैर्निरूप्यते ॥
वय नोपासनामार्गे वय भक्तिपदे स्थिता ॥ १७ ॥
एक एवेश्वरः सेव्यो भक्तैरिति निरूप्यते ॥
घटाकर्णो यथा शंभो कौशिकश्च यथा हरेः ॥ १८ ॥
चन्द्रशर्मादयश्चापि ह्येकं देव समाश्रिताः ॥
भवदुक्तप्रमाणेषु शंभोरेव समर्चनम् ॥ १९ ॥
दृष्ट शिवरहस्यादावन्यार्चाया निषेधनम् ॥
एव विष्णुरहस्ये च विष्णुधर्मोत्तरे तथा ॥ २० ॥
गीताभागवतादौ च विष्णोरर्चैव साधिता ॥
काशीखडे द्वारकाया माहात्म्ये चन्द्रशर्मण ॥ २१ ॥
प्रसंगाद्विष्णुधर्मेषु स्थितिर्भस्माक्षयोर्न हि ॥
प्रोच्यते वैष्णवो धर्मो वैशेष्यात्पांचरात्रिके ॥ २२ ॥
शखचक्राद्यूर्द्ध्वपुंड्र तुलसीस्रग्मुताश्च वै ॥
कालाग्निरुद्रोपनिषत्प्राह पाशुपत व्रतम् ॥ २३ ॥

भगवान्‌हैं उनकेभक्त भागवत क्यों न होयगें अभेदउपासनामें तथा तन्त्रमें ये लिख्यो है हम वा मार्गमें नहीं है किन्तु भक्तिमार्गमें स्थित है भक्तनको एकहीकी सेवा करनी चाहिये जैसे महादेवके भक्त घंटाकर्ण हैं हरिके कौशिक हैं सो आपके कहे प्रमाणनमें शम्भुहीको पूजन है और शिवरहस्यआदिग्रन्थनमें दूसरेके पूजनको निषेध देखे हैं याहीप्रकार विष्णुरहस्य विष्णुधर्मोत्तर गीता भागवतमें विष्णुहीको पूजन लिख्यो है ॥ ११ ॥ १२ ॥ १३ ॥ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ और काशीखडमेंभी द्वारकाके माहात्म्यमें चन्द्रशर्माके प्रसगमें विष्णुधर्ममें भस्म रुद्राक्षको धारण नहीं देखते विशेषकरके पंचरात्रमें वैष्णवधर्म कह्यो है शीतलशखचक्रकी मुद्रा ऊर्द्धपुंड्र तुलसीकी मालाको धारण लिख्यो है ऐसेही कालाग्निरुद्रउपनिषदमें पाशुपतमत भस्मरुद्राक्षको धारण कह्यो है

भस्मनो धारणे चैवं जाबालाश्चाक्षधारणे ॥
भस्मधारणतः पूतः तिर्यक्पुंड्रधरो जनः ॥ २४ ॥
शैवं पदं समभ्येतीत्युच्यते न तु वैष्णवम् ॥
रुद्राक्षसंस्थदेहस्तु कुक्कुरो म्रियते यदि ॥ २५ ॥
सोपि रुद्रपदं याति किं पुनर्मानवो गुह ॥
विना भस्मत्रिपुंड्रेण विना रुद्राक्षमालया ॥ २६ ॥
पूजितोपि महादेवो न पूजाफलदायकः ॥
विभूतिधारणं त्यक्त्वा त्यक्त्वा रुद्राक्षधारणम् ॥ २७ ॥
मा मां पूजय विश्वेशं शिवलिंगस्वरूपिणम् ॥
एवं लिंगे तथा सूतसंहितायां हरेर्वचः ॥ २८ ॥
इत्येवं बहुवाक्येषु रुद्रधर्मांगता स्मृता ॥
भस्मरुद्राक्षयोर्नैव विष्णुधर्मांगता क्वचित् ॥ २९ ॥
श्वेतद्वीपेऽपि दृश्यंते भस्मरुद्राक्षधारणम् ॥
इत्येवं कूर्मवचनं दुर्गाभागादिगं मतम् ॥ ३० ॥
रुद्राक्षेण जपो विष्णुमनोर्वाराहभाषितम् ॥
रुद्राक्षाकारतुलसीस्रजा सूतेन तद्वतम् ॥ ३१ ॥

भस्मको तिरछा पुंड्र धारण करवेवारो मनुष्य शैवपदकों पावे हें ये लिख्यो हे वैष्णवस्थान नहीं लिख्यो हे ओर कह्यो हे के रुद्राक्ष जाके देहमें होय एसो कूकुरबी मरे पीछें रुद्रपद पावे हे ओर मनुष्यको तो कहा कहें विना भस्मत्रिपुंड्रके विना रुद्राक्षकी मालाके पूजा कियेबी महादेव पूजाके फलकों नहीं देते विभूति तथा रुद्राक्षके धारणके विना शिवलिंगस्वरूपी विश्वेश जो में हूँ उनकी पूजा न करो एसे लिंगपुराण ओर सूतसंहितामें भगवान्के वचन हें एसे बहोतसे वचननमें भस्मरुद्राक्षको रुद्रधर्मको अंग कह्यो हे विष्णुधर्मको अंग कहीं नहीं कह्यो हे ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ २५ ॥ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ एसे शैव वैष्णवतन्त्रनके

तापानां मोचक भस्मरुद्राक्षमपि तादृशम् ॥
ते वर्णागसद्धर्मौ प्रोच्यते मुनिभि क्वचित् ॥ ३२ ॥
शैवतत्रानुसारेण तत्तच्छास्त्रे निरूप्यते ॥
क्वचित्तत्रानुरोधेन धर्म पौराणिका अपि ॥ ३३ ॥
वदति तादृश तत्तु आप्तत दवलविभि ॥
इत्थं पाराशराद्युक्त्या पुराणमुपलक्षणम् ॥ ३४ ॥
शैववैष्णवयोर्धर्मौ तत्तत्तत्रानुसारिणौ ॥
शैववैष्णवयोस्तुल्यं प्रामाण्य तत्रयोरपि ॥ ३५ ॥
तत्र श्रेयस्कर मुख्य पचरात्रादिवैष्णवम् ॥
तथाहि भारते मोक्षधर्मे नारायणीयके ॥ ३६ ॥
गृहस्थो ब्रह्मचारी च वानप्रस्थो यतिस्तथा ॥
य इच्छेत्सिद्धिमास्थातुं देवतां ता यजेत स ॥ ३७ ॥
गृहस्थ इत्यादिप्रश्ने राज्ञो भीष्मोऽब्रवीद्वच ॥
स पितुर्मुखत पूर्वं पचरात्राभिध शुभम् ॥ ३८ ॥
शास्त्र श्रुत तदुत्पत्तिर्मयात सर्वमुच्यते ॥
श्रुत्वा नारायणात्पूर्वं शास्त्र सप्तर्षिभि पुन ॥ ३९ ॥

अनुमार दोनों धर्म कहे हें ओर दोनों तन्त्रप्रमाण हें तोभी कल्याण करवेवारो मुख्य वैष्णवपचरात्र हे देखो भारतके नार णीय मोक्षधर्ममें लिख्यो हे के भी ष्मनें कह्यो के पचरात्रशास्त्र पहले नारायणसों सप्तर्षिननें सुन्यो ओर या कल्पमें नारदजीने सुन्यो ये बडो शास्त्र हे ये कल्याणरूप हे ब्रह्म हे हित हे बडो उत्तम हे ऋक् यजु साम अथर्व इनको साररूप हे येही प्रमाण हे ओर दूसरे ठिकानेभी पचरात्रकी प्रशसा लिखी हे सांख्य, योग, पचरात्र, वेद पाशुपत ये स्वत प्रमाण हें युक्तीनसों इनको नाश नहीं करना पाशुपतको शिवनें कह्यो हे ओर सम्पूर्ण पचरात्रके वक्ता नारायण हें एसो जो नहीं जाने हें वे अज्ञानी हे विष्णु धर्मोत्तरमेंभी येही बात लिखी हे ओर रामाय-

लोके प्रचारितं सार्द्धं वसुना तत्तिरोहितम् ॥
ततो नूत्नेषु कल्पेषु तस्योत्पत्तिः पुनः पुनः ॥ ४० ॥
नारायणादिदानीं तु नारदेनाहृतं पुनः ॥
प्रवर्तते महाशास्त्रं तदुक्तं कुर्विति व्यगात् ॥ ४१ ॥
इदं श्रेय इदं ब्रह्म चेदं हितमनुत्तमम् ॥
ऋग्यजुः सामभिर्जुष्टमथर्वांगिरसैस्तथा ॥ ४२ ॥
भविष्यति प्रमाणं वै ह्येतदेवानुशासनम् ॥
एवं ते कथितो धर्मः सात्वतोयमुवाच ह ॥ ४३ ॥
कुरुष्वैनं यथा तुभ्यमाख्यातः पार्थिवोत्तम ॥
तथा तत्रेतरत्रापि पंचरात्रप्रशंसनम् ॥ ४४ ॥
सांख्यं योगः पंचरात्रं वेदाः पाशुपतं तथा ॥
आत्मप्रमाणान्येतानि न हंतव्यानि युक्तिभिः ॥ ४५ ॥
सांख्यस्य वक्ता कपिलो योगस्य च पितामहः ॥
अपांतरतमश्चैव वेदाचार्यः स उच्यते ॥ ४६ ॥
ऊचिवानिदमव्यग्रं ज्ञानं पाशुपतं शिवः ॥
पंचरात्रस्य कृत्स्नस्य वक्ता नारायणः प्रभुः ॥ ४७ ॥
समेव शास्त्रकर्त्तारं प्रवदंति मनीषिणः ॥
न चैवमेवं जानंति तमोभूता विशांपते ॥
निष्ठा नारायणमृते नान्योऽस्तीति वचो मम ॥ ४८ ॥

विष्णुधर्मोत्तरे–

सांख्यं योगः पंचरात्रं वेदारण्यकमेव च ॥
कृतांत पंचकं विद्धि ब्रह्मणः परिमार्गणे ॥ ४९ ॥

णके उत्तरकांडमें लिखी हे के वेद पुराण पंचरात्रसों जो नित्य गाये जाय हैं विष्णु उन्हीको यज्ञनसों पूजन करें हैं वाराहपुराणमें बी लिख्यो हे के पंचरात्रके यथाक्रमके जानवेवारे पुरुष पातकनसों छूटके हरिमें प्रवेश करें हैं

रामायणोत्तरकांडे च

वेदैश्चैव पुराणैश्च पचरात्रैस्तथा परे ॥
यो नित्यं गीयते विष्णु क्रतुभिश्च यजति तम् ॥ ५० ।

वाराहपुराणांतरे च

पचरात्रविदो ये च यथाक्रमपरायणा ॥
विधौतपातकाः सर्वे ते हरिं प्रविशंति हि ॥ ५१ ॥

बृहत्पाराशरे

वैदिक तु जप कुर्यात्पौराण पंचरात्रकम् ॥
पचरात्रविधानेन स्थंडिले वापि पूजयेत् ॥ ५२ ॥
इत्थ वै पचरात्रस्य भारतादौ प्रशसनात् ॥
सात्त्विको वैष्णवो धर्मो राजसो वैधस स्मृत्त ॥ ५३ ॥
तामस शांभवो धर्म सम्रुयोग्यस्तथात्मनाम् ॥
एव लिंगपुराणादौ दृश्यते वचनान्यथ ॥ ५४ ॥
हिरण्यगर्भो रजसा तमसा शकर स्वयम् ॥
सत्त्वेन सर्वगो विष्णु सर्वात्मा सदसन्मय ॥ ५५ ॥

बृहत्पाराशरमेंभी लिख्यो है के वैदिक व पौराणिक जप पंचरात्रके विधानसौं करे अथवा स्थंडिलमें पूजन करे एसेही भारतादिकग्रन्थनमें पंचरात्रकी प्रशंसा देखें हैं॥ ३१ ॥ ३२॥ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ ४० ॥ ॥ ४१ ॥ ४२ ॥ ४३ ॥ ४४ ॥ ४५ ॥ ४६ ॥ ४७ ॥ ४८ ॥ ॥ ४९ ॥ ५० ॥ ५१ ॥ ५२ ॥ सतोगुणवारो वैष्णवधर्म है ब्रह्माको राजस है शम्भुको तामस है येही बात लिंगपुराणमेंभी देखें हैं के रजोगुणतें ब्रह्मा तमोगुणतें शकर सतोगुणतें सर्वव्यापी विष्णु हैं ओर सात्विकजन विष्णुकी तामसजन शकरकी राजस ब्रह्माकी सेवा करें हैं राजसकल्पनमें ब्रह्माको तामसमें शिवको संकीर्णमें सरस्वतीको सात्विकमें विष्णुको अधिक माहात्म्य होय है एसें मत्स्यपुराणके वचननसों कल्पशब्द कालवाची है ओर

सात्त्विकैः सेव्यते विष्णुस्तामसैरेव शंकरः ॥
राजसैः सेव्यते ब्रह्मा संकीर्णैश्च सरस्वती ॥ ५६ ॥
राजसेषु च कल्पेषु माहात्म्यं ब्रह्मणोऽधिकम् ॥
तामसेषु शिवस्याग्नेर्माहात्म्यं विनिरूप्यते ॥ ५७ ॥
संकीर्णेषु सरस्वत्याः पितॄणां व्याप्तिरुच्यते ॥
सात्त्विकेषु च कल्पेषु माहात्म्यमधिकं हरेः ॥ ५८ ॥
तदेव योगसांसिद्धा यास्यंति परमां गतिम् ॥
इत्थं मत्स्यपुराणोक्त्या कल्पः कालोऽत्र कल्प्यते ॥ ५९ ॥
कल्पशब्देन पक्षोपि स्वयमेवोपलक्ष्यते ॥
सत्वात्संजायते ज्ञानं ज्ञानान्मुक्तिरवाप्यते ॥ ६० ॥
तस्मात्तु सात्त्विको धर्मः सेवनीयो मुरद्विषः ॥
सर्वासामेव सिद्धीनां मूलं तच्चरणार्चनम् ॥ ६१ ॥
आवश्यकं मुमुक्षूणां वैष्णवो धर्म इष्यते ॥
न वर्णधर्मता चास्य भस्मरुद्राक्षसंभृते ॥ ६२ ॥
मन्वादिस्मृतिषु क्वापि सूत्रेषु न च दृश्यते ॥
व्रतमेतत्पाशुपतं व्रतमेतत्तु शांभवम् ॥ ६३ ॥

पक्षकोबी कहें हें सतोगुणसों ज्ञान उत्पन्न होय हे ज्ञानसों मुक्ति होय हे तासों विष्णुको सात्विक धर्म्म पालवेके योग्य हे सबसिद्धीनको मूल उनके चरण-कमलनको पूजन हे ओर मुमुक्षुजननके लिये वैष्णवधर्मकी आवश्यकता हे ओर भस्मरुद्राक्षको धारण कछू वर्णधर्म नहीं हे मन्वादिस्मृति तथा सूत्रनमें कहीं नहीं देखे हें ये पाशुपतव्रत हे ये शाम्भवव्रत हे एसे उपनिषदकेवचननसों वणधर्मको अंग कहाँसों कहो हो ओर विष्णुधर्मको अंग तो वे स्वममेबी नहीं होय सकें हें।वासुदेवउपनिषदमें गोपीचन्दनके धारणको विधान सामान्य हे तासों वो वर्णधर्म स्पष्ट हे तुम सब वैदिक होयके सूत्रादिकनमें नहीं कहे

इत्येवोपनिषद्वाक्याद्वर्णधर्मांगता कुत ॥
विष्णुधर्मांगता तस्य स्वप्नेऽपि न हि सिद्ध्यति ॥ ६४ ॥
वासुदेवोपनिषदि गोपीमृद्धारणश्रुते ॥
तस्या सामान्यविदिता वर्णधर्मांगता स्फुटा ॥ ६५ ॥
यूयं वै वैदिका भूत्वा कुत सूत्राद्यभाषितम् ॥
अत्याग्रहेण कुरुत भस्मरुद्राक्षधारणम् ॥ ६६ ॥
काशीखण्डेऽपि हसित भस्मधारणमात्रत ॥
गति स्यात्किं न मुच्यते रासभा भस्मधूसराः ॥ ६७ ॥
तांत्रिकत्वेन या निंदा शिवकेशवतत्रयो ॥
न हि निंदेति नयत सा श्रौताध्वप्रशंसिका ॥ ६८ ॥
तामसत्वेन या निंदा निषिद्धाचारतोपि वा ॥
सा द्विजानधिकारस्य तत्रयो शैवशाक्तयो ॥ ६८ ॥
वैष्णवेषु च तंत्रेषु निषिद्धाचरण न हि ॥
तप्तांकधारण क्वापि तद्धि हेय द्विजातिभि ॥ ७० ॥
निंदित वैष्णवे तत्रे तथा शास्त्रांतरेऽपि च ॥
निर्माल्यग्रहण शंभोस्तथा भस्माक्षधारणम् ॥ ७१ ॥

भस्मरुद्राक्षधारणको अति आग्रहसो क्यों करो हो। काशीखण्डमेंभी भस्मधारणमात्रसे। तो उपहास कियो है के जो भस्महीसों गति होती होय तो भस्ममें लटे गदहानकी क्यों नहीं होय है और शिवकेशवतन्त्रकी जो तान्त्रिकपनासे। निन्दा है घो वैदिकमार्गकी प्रशंसापर है और तामसपनासो वा निषिद्धाचारसो जो शैव शाक्त तन्त्रनकी निन्दा है घो द्विजनके अनधिकारके लिये है और वैष्णवतन्त्रमें तो निन्दित आचरण नहीं है जो कहीं तप्तमुद्राको धारण है घो द्विजातीनको छोडवेने योग्य है ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ ॥ ५७ ॥ ५८ ॥ ५९ ॥ ६० ॥ ६१ ॥ ६२ ॥ ६३ ॥ ६४ ॥ ॥ ६५ ॥ ६६ ॥ ६७॥ ६८ ॥ ६९ ॥७०॥ और वैष्णवतन्त्र तथा

यज्ञांते धारणं भूतेर्भस्मस्नानं तथारुचि ॥
उद्धूलनं वनस्थस्य तेन भूतिः शुचिः स्वयम् ॥ ७२ ॥
त्रिपुंड्रधारणं शैवमूर्द्ध्वपुंड्रं तु वैष्णवम् ॥
ब्राह्मणस्योर्द्ध्वपुंड्रं स्यात् वैष्णवस्य विशेषतः ॥ ७३ ॥
धर्मकार्येषु सर्वेषु चोर्द्ध्वपुंड्रं विधीयते ॥
ततो वै वैष्णवो धर्मः सेव्यः सत्त्वात्मिकैर्जनैः ॥ ७४ ॥
इत्युक्ते श्रीमदाचार्यैर्ब्राह्मणास्तु परस्परम् ॥
भाषितं सत्यमेवार्यैर्नास्ति सूत्रे तयोर्भृतिः ॥ ७५ ॥
स्मृतौ न दृश्यते तद्वत्स्मात्तांगं शंकरार्चनम् ॥
देवेषु ब्राह्मणः शंभुर्विप्रैरर्च्यस्ततः स वै ॥ ७६ ॥
तत्प्रीतये भस्मरुद्रधारणं चेति वाग्वृथा ॥
देवेषु जातिर्नैवास्ति ह्यस्ति चेद्भगवान् हरिः ॥ ७७ ॥
स ब्राह्मणः सर्वदेवमूर्तिः सेव्यो न किं पुनः ॥
एवं परस्परं सर्वे उक्त्वा कृत्वा च जल्पितम् ॥ ७८ ॥
पुण्यात्मानस्तेषु केचिदाचार्यान्स्वगुरून्व्यधुः ॥
ततः प्रणम्य ते सर्वे कृत्वैव च प्रदक्षिणम् ॥ ७९ ॥

दूसरे शास्त्रनमें महादेवको निर्माल्य ग्रहण तथा भस्मरुद्राक्षधारण निन्दित हे यज्ञके अन्तमें भूति धारणहे तासों भस्म शुचि पवित्र हे शैव त्रिपुंड्रहे वैष्णव ऊर्द्ध्वपुंड्र हे ब्राह्मणनको ऊर्द्ध्वपुंड्र चाहिये वैष्णवनको विशेष करके हे सब धर्मकार्यनमें ऊर्द्ध्वपुंड्रको विधान हे तासों सतोगुणी मनुष्यनको अवश्य वैष्णवधर्म सेव्य हे ऐसे आपके कहवे पे सब ब्राह्मण आपसमें कहवेलगे के आर्य सत्य कहें हें सूत्रमें भस्मरुद्राक्षको धारण नहीं हे स्मृतिनमेंबी नहीं देखते तासों स्मृतिकोबी अंग नहीं ओर जो कोई कहें हें के देवतानमें शंभु ब्राह्मण हें तासों ब्राह्मणनको अवश्य पूज्य हें सो ये बोलनो वृथा हे कारण के देवतानमें

प्रशसतस्तदाचारं गतास्ते स्वनिकेतनम् ॥
पारायणं समाप्यात्र आचार्यास्त्र्यंबक गता ॥ ८० ॥
गोदा विनिस्सृता यत्र गौतमार्षिप्रभावत ॥
त्र्यवकेश नमस्कृत्य दृष्ट्वा गोदासमुद्गमम् ॥ ८१ ॥
आचार्या प्रस्थितास्तस्मान्नर्मदां शर्मदां प्रति ॥
तापीं सरिद्वरां प्राप्य सर्वपापापहारिणीम् ॥ ८२ ॥
स्नात्वा विमलपानीये तीर्थान्यत्र प्रचक्रमु ॥
तत प्रचलिता द्रष्टुमोंकारेश महेश्वरम् ॥ ८३ ॥
सोमोद्भवायां सस्नाता आचार्ये शकरो नुत ॥
तत्तीर्थजातं तत्तीरे स्नात्वा च विधिनार्चितम् ॥
तत्रत्यविप्रैर्भूपेन स्वर्चिताश्चलितास्तत ॥ ८४ ॥

जाते नहीं जो है तो भगवान् हरिही ब्राह्मण हैं सर्वदेवमूर्ति हैं यातें वेही सेव्य क्यों नहीं एसे आपसमें बात करके जो पुण्यात्मा है सो आपके शरण आये ओर दूसरे सबही प्रणाम प्रदक्षिणा करके आपके आचारकी प्रशसा करते अपने स्थानको गये ओर श्रीमदाचार्यजीभी पारायण समाप्त करके त्र्यम्बककों पधारे जहाँ गौतमऋषिके प्रभावसों गोदावरी नदी निकसी है वहाँ त्र्यम्बकेशके नमस्कारकरके ओर गोदावरीके प्रागट्यके स्थलको देखके वहाँसों नर्मदाको पधारे बीचमें सब पापनको दूर करवे वारी तापीकों पायके वाके विमलजलमें स्नान करके वहाँके तीर्थनकी प्रदक्षिणा कर नर्मदास्नान कर ओंकारेश्वरको नमस्कारकर पीछे वहाँके ब्राह्मण तथा राजासों पूजित होयके वहाँसों पधारे ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ ॥ ७६ ॥ ७७ ॥ ७८ ७९ ॥ ८० ॥ ८१ ॥ ८२ ॥ ८३ ॥ ॥ ८४ ॥ समयनीतिके जानवेवारे जगद्गुरू श्रीमद्गोविन्दाचार्यजी महा

श्रीवेदव्यासविष्णुप्रभुचरणमिते सम्मिते ग्रन्थसार्थैः
श्रीगोविन्दाभिधानां समयनयविदां देशिकानां निदेशात् ॥
आचार्याणां चरित्रे हरिजनसुखदे शास्त्रिकृष्णैर्निबद्धे
प्रस्थानेऽस्मिंस्तृतीये समजनि पटहः पञ्चदिक्सम्मितोयम्८५

---

वंदे संसारसंहारमीशितुर्वदनानलम् ॥
कालकालं यं वदंति भक्तानामभयंकरम् ॥ १ ॥
अथ पारं समागत्य रेवोदक्तीर्थमंडलम् ॥
परिक्रम्य ततः प्राप्ताः पुण्यां माहिष्मतीं पुरीम् ॥ २ ॥
तस्याः परिक्रमं कृत्वा स्थिताश्च विपनोत्तमे ॥
समागतैर्विज्ञवर्यैः श्रुतवृत्तैरभिष्टुताः ॥ ३ ॥
पृष्टा वेदेषु चांगेषु संशयाँश्चिच्छिदुर्मुदा ॥
राजन्यैश्च विशांवर्गैर्मानिताः प्रस्थितास्ततः ॥ ४ ॥
अटाव्यार्थं विशालायानीतास्तत्रत्यभूसुरैः ॥
अवंतिकां समासाद्य स्नात्वा क्षिप्रां महानदीम् ॥ ५ ॥

राजकी आज्ञासों कृष्णशास्त्रीके बनाये श्रीमद्वेदव्यास विष्णुस्वामि मतके ग्रन्थनके अनुकूल हरिभक्तनके सुखदेवेवारे या चरित्र ग्रन्थके तीसरे प्रस्थानमें ये पन्द्रहवों पटह समाप्त भयो ॥ ८५ ॥

---

सो नर्मदाके उत्तर तीर्थमंडलकी परिक्रमा करकें पुण्य माहिष्मती पुरीके उत्तम वनमें विराजे वहाँ आपके यशको सुनकें विद्वान् लोग आये सो स्तुति करकें वेद तथा अंगनमें प्रश्न करते भये सो उनके संदेहनको दूर कियो ओर वहाँके राजवर्गसों मान पायकें पधारे सो उज्जयनीमें महानदी क्षिप्राको स्नान करकें कालकाल तथा भद्रकाली क्षीरसागर के दर्शन करकें सिद्ध बट ओर सांदीपिनीके स्थानमें पधारकें गोमतीके तीर विराजमान होयकें पारायण

कालकाल महाकालमर्चित ते वर्षादेरे ॥
भद्रकालीमपश्यस्ते ददृशु क्षीरसागरम् ॥ ६ ॥
जग्मु सिद्धवट तस्माद्दद्दृशु सांदीपिने पदम् ॥
आसीना गोमतीतीरे तत्र पारायण व्यधु ॥ ७ ॥
बोधिपत्र समारोप्य तस्य चक्रुर्महत्तरुम् ॥
निरातप तत्र जात दृष्ट्वाश्चर्यं जनै कृतम् ॥ ८ ॥
नागर्यो नागरा सर्वे यात्यायांति समीक्षितुम् ॥
तच्छ्रुत्वा ब्राह्मणा केचिदुद्धताश्च परस्परम् ॥ ९ ॥
आमन्त्र्य शतसंख्याका युगपत्प्रष्टुमागता ॥
ते सर्व जनमेलायां समागत्य पुर स्थिता ॥ १० ॥
दूरीकृत्य जनान्कांश्चित्सार्द्धं प्रश्नान्प्रचक्रमु ॥
श्रुत्वाचार्याश्च तान्प्रश्नान् तेपां धौर्त्यं विलोक्य च ॥ ११ ॥
शताननतया तेपामुत्तर युगपद्ददु ॥
तत्र प्रश्नावलिं चैनां लिलिखाम्युत्तरावलिम् ॥ १२ ॥
साक्षिप्य वाक्पतेर्वाक्यविस्तर केन धार्य्यते ॥
शिवेशमन् शृणु विधि भाट्टास्त भावनां जगु ॥ १३ ॥

दियें यहाँ एक पिप्पलके पत्रको गाड़दीनो सो बडो वृक्ष होयगयो यहाँ छाया होयगई ये आश्चर्य देखवेकों नगरके लोग आते जाते हे सो कोई उद्धत ब्राह्मण सुनके आपसमें सो ब्राह्मण मिल्के एकही सग पूछनेके लिये मनुष्यनके मेलामें आयकें आगे ठाडेभये ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ और मनुष्यनको हटायके एक सगही प्रश्न किये सो आपने उनके प्रश्नको सुनके और उनकी धूर्तता देखके सो मुखकरकें एकही कालमें उत्तर दिने सो ये प्रश्नावली और उत्तरावली संक्षेपसों लिखूहूं ॥ ११ ॥ १२ ॥ क्योंकि वाक्पतिके विस्तारको कोन धारण करसकेहे शिवशर्मन् विधि सुनो भट्टमत-

प्राभाकरानियोगाख्यं तार्किकाश्चेष्टसाधनम् ॥
बुधशर्म्मन् विधिः सोयमपूर्वो नियमस्तथा ॥ १४ ॥
परिसंख्येति त्रिविधा प्राहुस्तौतादिकादयः ॥
अपूर्वो रौहिणेयासावप्राप्तस्य च प्रापकः ॥ १५ ॥
पक्षाप्राप्तौ पूरणेन नियमो विष्णुशंकर ॥
परिसंख्या निवृत्यैवाऽपरोयं शेषशेषिणोः ॥ १६ ॥
स्वरूपबोधकः कर्मणो भीमोत्पत्तिसंज्ञक ॥
आग्नेयोष्टकपालो वै भवतीत्त्यंबिकेश्वर ॥ १७ ॥
इति कर्त्तव्यता गर्भाऽभिधायिकरणस्य यः ॥
यागादेः फलसंबंधबोधकोप्यधिकारिकः ॥ १८ ॥
दर्शेन पूर्णमासेन यजेतेति यथांगुले ॥
देवदत्त गृहाणैतदंगसंबंधबोधकः ॥ १९ ॥
यजेत व्रीहिभिश्चेति नियोगविधिसंज्ञकम् ॥
सखाराम प्रयोगाख्यं विधिं त्वमुपधारय ॥ २० ॥

चारे ताकों भावना कहेंहें ॥ १३ ॥ प्रभाकरके अनुयायी नियोग कहेंहें तार्कि-क इष्टसाधन कहेंहें बुधशर्मन् सुनो अपूर्व नियम परिसंख्या ये तीन प्रकारकी विधि तौतादिक कहेंहें ( हे रौहिणेय ) अप्राप्तकी प्राप्त करवेवारी अपूर्व विधि होयहे ( विष्णु शंकर ) पूरणप्राप्तिमें नियम होयहे दूसरेको निवृत्त करवेवारी परिसंख्या होयहे ( भीमोत्पत्ति ) कर्मको स्वरूप बोधक येहे ( अम्बिकेश्वर ) जेसे ( आग्नेयोऽष्टाकपालः ) अग्निदेवके लिये आठ कपालहें येहे इति कर्त्तव्यताको कहवेवारो याग आदिको फल सम्बन्धको बोध करवेवारो अधि-कारिकहे जेसे ( अंगुले ) दर्शपूर्णमाससों यज्ञ करे येहे ( देवदत्त ) ये अंग सम्बन्ध बोधक हे धान्यसों यज्ञ करे ये नियोगविधिहे ( सखाराम ) प्रयोगविधिकों समझो ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

सांगप्रधानकर्मात्मप्रयोगैक्यस्य बोधक ॥
विधिसम्मिश्रणात्मासौ श्रौत कल्पेति चापरे ॥ २१ ॥
भाट्टा प्राभाकरा प्राहुर्विवादं ह्यम्बिकेश्वरं ॥
आत्मा श्रोतव्य इत्यत्र त्रिविधोपि विधिर्विधे ॥
शंकरात्रापूर्वविधिरन्वयव्यतिरेकत ॥ २२ ॥
नापरोक्षकृतौ शक्ति शब्दस्येति मतं हि न ॥
गणेशेनियमश्चात्र भिन्नात्मज्ञानहेतुता ॥ २३ ॥
मुक्तेर्माभूदितिश्रुत्या द्वैताध्यासाय पूर्यते ॥
शंभोऽत्र परिसंख्यैवं ब्रह्मसत्योऽमृत व्रजेत् ॥ २४ ॥
अत आत्मैव श्रोतव्य कर्म संन्यस्य चापर ॥
विधीच्छयोर्यवादोय बालंभट्टानुवादत ॥ २५ ॥
अहमात्मेति सिद्धोयस्तदभ्यासो ह्यनूद्यते ॥
प्रमाया करणं यत्त तत्प्रमाण चैतुर्भुज ॥ २६ ॥

॥ १९ ॥ २० ॥ अंगसहित प्रधान कर्मको एक बोधकरवेवारी होय हे दूसरे विधिसमिश्र वेदविहित कल्पकों कहें हैं ॥ २१ ॥ ( अम्बिकेस्वर ) भाट्ट प्रभाकर विवाद कहे हैं, आत्मा "श्रोतव्य" यहां विधिकी तीनों विधि हैं ( शंकर ) यहां अन्वयव्यतिरेकसों अपूर्वविधि हे अपरोक्षकृतिमें शब्दकी शक्ति नहीं हे ये हमारो मतहे ( गणेश ) यहा नियम हे आत्म ज्ञानको हेतु भिन्नहे ॥ २२ ॥ २३ ॥ "मुक्तेर्माभूत्" या श्रुतिसों द्वैतके अध्यासके लिये कहीगई हे ( शम्भो ) यहमें रहवेवारेकों अमृत मिले हे यहां परिसंख्याहे ॥ २४ ॥ ( बालम्भट्ट ) कर्मको छोडके आत्माही श्रोतव्यहे ये अर्थवादहे 'अहमात्मा' यासों जो सिद्ध हे ताको अनुवादहे ( चतुर्भुज ) प्रमाको जो करण हे सो प्रमाण हे ॥ २५ ॥ २६ ॥

अज्ञातज्ञापकं ज्ञानं प्रमा स्याद्यदभाषितम् ॥
इंद्रियार्थप्रयोगेण ज्ञानमक्षजमच्युत[17] ॥ २७ ॥
लिंगेन लिंगिनो ज्ञानमनुमानं महेश्वर[18] ॥
सादृश्यमूलकं ज्ञानमुपमानं दिवाकर[19] ॥ २८ ॥
आप्तवाक्यं भवेच्छब्दः शाब्दं तज्जंजनार्दन[20] ॥
आचार्यैः खंडितास्तेषां कृता विप्रतिपत्तयः ॥ २९ ॥
तंडिन्[21] प्रमेया मार्तंड संख्याका गौतमे रुताः ॥
आत्मा देहेंद्रियार्थाश्च बुद्धिस्वांतप्रवृत्तयः ॥ ३० ॥
दोषो जन्मफलं दुःखं मोक्षस्ते कथितः पृथक् ॥
प्रमाणैरवगम्यंतेऽतोमृड[22]ैषांप्रमेयता ॥ ३१ ॥
विरुद्धकोटिकं ज्ञानं संशयश्चंडिकेश्वर[23] ॥
प्रयोजनं प्रवृत्तेश्च हेतुर्भवति भारवे[24] ॥ ३२ ॥
मुरारे[25] बोधकं दृष्टांतं मतं यदि वादिनोः ॥
निर्णीतार्थस्तु सिद्धांतः कौंडिशर्मन्[26] चतुर्विधः ॥ ३३ ॥

( अच्युत ) अज्ञातके जनायवेवारे यथार्थज्ञानको प्रमा कहें हें इन्द्रिय द्रव्यके सन्निकर्षसों उत्पन्न ज्ञानको प्रत्यक्ष कहें ह ॥ २७ ॥ ( महेश्वर ) हेतुसों हेतुवारे ज्ञानको अनुमान कहें हें ( दिवाकर ) सादृश्यसों उत्पन्नको उपमानकहें हें ॥ २८ ॥ ( जनार्दन ) शिष्ट वाक्यसों उत्पन्न ज्ञान शाब्द हे यामें उनकी शंकानको आचार्यननें खंडन कियो ( तंडिन् ) अनेक प्रमेय गौतमने कहें हें आत्मा, देह, इन्द्रिय, विषय, बुद्धि, मनोवृत्ति, दोष, जन्मफल, दुःख, मोक्ष ये अलग कहें हें प्रमाणनसों जाने जाँय हें यासों इनकी प्रमेयता हे ( मृड ) ॥ २९ ॥ ३० ॥ ३१ ॥ चंडिकेश्वर एक-धर्मिक विरुद्ध कोटि द्वयावगाहिज्ञानको संशय कहें हें ( भारवे ) प्रवृत्तिके प्रयोजनको हेतु कहें हें ॥ ३२ ॥ ( मुरारे ) वादीनके जनायवेवारेको

सर्वशास्त्रैकशास्त्रश्च स्वीयाभ्युपगमस्तथा ॥
निजाधिकरणीयश्च गौतमीयैर्निरूपितः ॥ ३४ ॥
पञ्चधाऽवयवाभौंलो अनुमानस्य बोधकाः ॥
प्रतिज्ञा हेतुदृष्टांतोपनया निगमस्तथा ॥ ३५ ॥
कार्यकारणमूलो यो विचारस्तर्क ऊदरे ॥
निर्णयो निश्चयो भूरे पौरे युक्तिमती कथा ॥ ३६ ॥
वादस्तत्रार्थनिर्द्धारो जल्पस्तु विजयार्थिनो ॥
स्वपक्षसाधनेहीना वितण्डाऽन्यस्य दोषदा ॥ ३७ ॥
हेत्वाभासो हेतुनिभोऽनुमितेर्जनको न य ॥
स पञ्चधास्त्युमादत्ते व्यभिचारीतथादिमः ॥ ३८ ॥
विरुद्धप्रतिपक्षो स्त' सिद्धोऽन्यो बाधितस्तथा ॥
छल भौनोष्टभिप्रेतार्थस्य यत्परिवर्तनात् ॥ ३९ ॥
दूषण तत्त्रिधा वक्तु वाक्सामान्योपचारत ॥
जाति जानीहि गौरीशे असदेव यदुत्तरम् ॥ ४० ॥

दृष्टान्त कहे हैं ( कौंडिन्य ) निश्चित अर्थको सिद्धान्त समझो वह चार प्रकारको हे ॥ ३३ ॥ सर्वशास्त्र, एकशास्त्र, स्वीयाभ्युपगम निजाधिकरण ये गौतमीयननें कहो हे ॥ ३४ ॥ ( भालो ) अनुमानके बोधक प्रतिज्ञा, हेतु, दृष्टान्त, उपनय, निगम ये पाच अवयव हे ॥ ३५ ॥ (ऊदरे) कार्य कारण मूलको विचार तर्क है ( भूरे ) निर्णय निश्चय हे ( पौरे ) युक्तिवारी कथा हे ॥ ३६ ॥ जयकी इच्छावारेनको बोलनो वाद हे अपने पक्षके साधनसों हीन दूसरेको दोषदायी वितण्डा हे ॥ ३७ ॥ ( उमादत्त ) हेतुके सदृश अनुमितिके न उत्पन्न करवेवारो हेत्वाभास पांच प्रकारको हे व्यभिचारी, ॥ ३८ ॥ विरुद्ध, सत्प्रतिपक्ष, अन्यथासिद्ध, बाधित ( भानो ) इष्ट अर्थके परिवर्तनसों जो दूषण सो छलहे वाणीके सामान्य

